य आदिर्वर्णः स खुसंज्ञः स्यात् । तथा च 'खोः कन्दुक—' इत्यादौ खुशब्देनादिज्ञानं स्यात् ॥

संयुक्तं स्तु ॥ १ । १ । १२ ॥

संयुक्तं व्यञ्जनद्वयं स्तुसंज्ञं स्यात् । तेन 'स्तोः' इत्यधिकारसूत्रे स्तोरित्यनेन संयुक्तव्यवहारलाभः ॥

गो गणपरः ॥ १ । १ । १० ॥

गणप्रधानो य आदिशब्दः स गसंज्ञो भवति । तथा च 'क्लीबे गुणगाः' इत्यादौ गुणगा इत्यनेन गुणादय इति भवति ॥

द्वितीयः फुः ॥ १ । १ । ११ ॥

य. शब्दस्य द्वितीयो वर्णः स फुसंज्ञो भवति । तथा च 'सप्तपर्णे फोः' इत्यादौ फोरित्यनेन द्वितीयवर्णवृद्धिर्जायते ॥

तु विकल्पे ॥ १ । १ । १३ ॥

यो विकल्पवाचकः स सर्वोऽपि तुसंज्ञो भवति । तथा च 'तु सभृच्यादौ' इत्यादौ तुशब्देन विकल्पवाचकज्ञानं भवति ॥

अथ प्रसङ्गाच्छास्त्रव्यापितयोपयुक्तानि कतिचित् सूत्राणि व्याख्यायन्ते ॥

प्रायो लिति न विकल्पः ॥ १।१।१४ ॥

यः कार्यार्थं सूत्रेऽनुपज्यते न तु प्रयोगे दृश्यते स इत् व्याकरणान्तरेऽनुबन्ध इत्युच्यते । लकार इद्यस्य स लित् । लिति कार्ये विकल्पः प्रायो न भवति । तेन 'अविद्युति स्त्रियामाल्' इत्यादौ विधीयमानमाकारादिकं नित्यमेव स्यात् ॥

रितो द्वित्वल् ॥ १ । ४ । ८५ ॥

रेफ इद्यस्य स रित् । रेफानुबन्धस्यादेशव्यञ्जनस्य नित्यं द्वित्वं भवति । तथा च 'लरंकोटे', 'र्णो दिना रुदिते' इत्यादौ विधीयमानलकारादीनां द्वित्वं सिध्यति ॥

---

१ रोरित्यनेन M. २ भवति M. ३ वृद्धिर्भवति M. ४ फलति M. ५ कर्तव्ये M. ६ संभवति M. ७ द्वित्वम् R.

शिति दीर्घः ॥ १ । १ । १५ ॥

शकार इत्यस्य स शित् । शानुबन्धे परतः पूर्वस्य दीर्घो भवति । तेन 'शिङ्लुङ् नपुनरि तु' 'जश्शसोश्शलुक्' इत्यादौ पूर्वस्याचो दीर्घः सिध्यति ॥

सानुनासिकोच्चारं ङित् ॥ १ । १ । १६ ॥

ङकारानुबन्धं कार्यं सानुनासिकोच्चारं भवति । तेन 'कामुक-यमुनाचामुण्डातिमुक्तके मो ङ्लुक्' इत्यादौ काउँओ जउँणा इत्यादिषु सानुनासिकोच्चारः फलति । तच्च यथास्थानं दर्शयिष्यामः ॥ इह शास्त्रे 'नृनपि ङसिङसोः' इत्यादिषु केषुचित् सूत्रेषु नृशब्दो नप्छब्दश्च श्रूयते तौ क्रमेण पुंलिङ्गनपुंसकलिङ्गवाचकाविति ज्ञातव्यम् ॥

बहुलम् ॥ १ । १ । १७ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्त्यनुवर्तते । तेन प्राकृते यल्लक्षणं तद्बहुलं भवतीति वेदितव्यम् ॥

अथ सन्धिरुच्यते ।

सन्धिस्त्वपदे ॥ १ । १ । १९ ॥

संस्कृतोक्तः सर्वसन्धिः प्राकृते तु विकल्पेन भवति । अपदे एकपदे तु न भवति ॥ व्यासऋषिः इति स्थिते व्यासशब्दे 'शोर्ङ्-फ्लोः—' इत्यतो ह्वगित्यनुवर्तमाने 'लवरामधश्च' इत्यतोऽधश्चेति च

मनयाम् ॥ १ । ४ । ७९ ॥

अधो वर्तमानानां मनयां लोपः स्यात् । इत्यधो वर्तमानयलोपः ॥ ऋषिशब्देऽपि 'ऋतोत्' इत्यतः ऋत इत्यनुवर्तमाने

इऌ कृपगे ॥ १ । २ । ७६ ॥

कृपेत्यादिषु ऋत इत्वं स्थित् स्यात् । इति कृपादित्वादृकारस्य इत्वे इसि इति स्थिते

---

१ स इत्यस My., P. २ R. drops इत्.

**शोः सल् ॥ १ । ३ । ८७ ॥**

शोः शषसानां सकारो लित् स्यात् । इति षकारस्य सकारे सति वासइषि इति स्थिते अनुक्तमन्येति न्यायेन 'आद्गुणः' इति नित्यत्वेन गुणे प्राप्ते 'सन्धिस्त्वपदे' इति विकल्प्यते । वासेसि । सन्ध्यभावे वासइसी ॥ विषमातपः । अत्र विषमआतप इति स्थिते विषम-शब्दे षस्य सत्वं पूर्ववत् । आतपशब्दे 'अस्तोरखोरचः' इत्यनुवर्तमाने

**प्रायो लुक् कगचजतदपयवाम् ॥ १।३।८ ॥**

असंयुक्तानामनादौ वर्तमानानामचः परेषां कादीनां सर्वेषां प्रायो लुक् स्यात् । इति तलोपे 'नात्पः' इत्यत्र आदित्यनुवर्तमाने

**यश्रुतिरः ॥ १ । ३ । १० ॥**

'प्रायो लुक्—' इत्यादिना कादीनां लोपे सति योवशिष्यते अवर्णः सः अवर्णात् परो लघुप्रयत्नतरयकारश्रुतिर्भवति । इत्यकारस्य यकार-श्रुतौ सत्यां आअप इति स्थिते 'प्रायो लुक्—' इति पलोपे प्राप्ते

**नात्पः ॥ १ । ३ । ९ ॥**

आत् अवर्णात् परस्य पकारस्य लोपो न भवति । इति पस्य लोपे प्रतिषिद्धे

**पो वः ॥ १ । ३ । ५५ ॥**

असंयुक्तस्यानादौ वर्तमानस्याचः परस्य पस्य वः स्यात् । इति पकारस्य वकारे सति विसमआअव इति स्थिते अनुक्तमन्यन्यायेन[1] 'अकः सवर्णे दीर्घः' इति नित्यत्वेन दीर्घे प्राप्ते विकल्पः । विसम-आअवो । विसमाअवो ॥ कविईश्वर इति स्थिते कविशब्दे 'प्रायो लुक्—' इति वलोपः । ईश्वरशब्देपि

**लवरामधश्च ॥ १ । ४ । ७८ ॥**

लुगित्यनुवर्तते । संयुक्तसंबन्धिनामधो वर्तमानानां चकारादुपरि वर्तमानानां लवरां लोपः स्यात् । इत्यधो वर्तमानवलोपे 'शोः सल्'

१ अनुक्रमन्यन्यायेन M. २ सर्वेषां कादीनां R.

इति शस्य सत्वे च कइईमर इति स्थिते पूर्ववत् सवर्णसंधौ प्राप्ते विकल्पः । कइईमरो । कईसरो इत्याद्यूह्यम् । नात्र 'शेषादेशस्य—' इत्यादिना सस्य द्वित्वम् । 'दीर्घान्न' इति प्रतिषेधात् । अपद इति किम् । वच्छाइ मुद्धाए । अत्र प्रत्युदाहरणद्वयेपि वृक्षशब्दस्य 'क्लीबे गुणगाः' इति गुणादिपाठान्नपुंसकत्वे 'श्निशिशिङ् जश्शसोः' इति शिङ् । मुग्धाशब्देपि शोर्लुगित्यनुवर्तते ।

कगटडतदपं×क×पशोरुपर्यद्रे ॥ १ । ४ । ७७ ॥

संयुक्तसंबन्धिनामुपरिस्थितानां द्रशब्दव्यतिरिक्तानां कादीनां जिह्वामूलीयोपध्मानीययोः शोः शषसानां च लुक् स्यात् । इत्युपरिस्थितगलोपे 'रितो द्वित्वल्' इत्यधिकृत्य

शेषादेशस्याह्रोचोरगोः ॥ १ । ४ । ८६ ॥

संयुक्तयोरेकतरस्य लोपे योवशिष्यते स शेषस्तस्य संयुक्तादेशस्य च अह्रः हकाररेफवर्जितस्य अचः स्वरात् परस्य अगोरनादौ वर्तमानस्य द्वित्वं भवति । इति धस्य द्वित्वे मुद्धा इति स्थिते 'ङसेः शशाहिदो' इत्यनेन शे सत्युभयत्राप्यनुक्तमन्यन्यायेन शास्त्रान्तरसिद्धे 'लशक्तद्धिते' इति सूत्रेण शलोपे इकारैकारयोरवस्थाने गुणवृद्धिलक्षणसन्धौ प्राप्ते 'अपदे' इति प्रतिषेधान्न भवति । अत्र शिङः शे इत्यस्य च प्रत्ययत्वाभावेपि प्रत्ययादेशत्वात् तदादेशन्यायेन प्रत्ययत्वम् । तथा च युक्तः शलोपः । राममम‍लं वन्दे इत्यादिषु रामम् अमलम् इति स्थिते 'लोपः' इत्यधिकृत्य

अन्त्यहलोश्रदुदि ॥ १ । १ । २५ ॥

शब्दानामन्त्यहलो लोपः स्यात्श्रदुदित्यव्ययमुदिमुपसर्गं च वर्ज-

१ °त्युभयमन्ये M. २ °पथ° R. ३ °रहितानां My., P. ४ द्वित्व-स्थितो द्वित्वविकल्पविधान P. ५ मुद्धा ६ रौ R. ७ °त्वस्थाने नहि R. ८ निषेधात M. ९ °रागर° M. १० रामं अमलं वन्दे इति स्थिते My., P. ११ °स्यादव्ययमुपसर्गं च वर्जयित्वा R.

यित्वा। इति मलोपे प्राप्ते 'यत्तत्सम्यग्विष्वक्पृथको मल्' इत्यतो मलित्यधिकृत्य

## मोचि वा ॥ १ । १ । ३९ ॥

शब्दानामन्त्यमकारस्याचि परे मो वा स्यात्। राममलं। मत्वाभावे 'बिन्दुल्' इत्यनेन सामान्यप्राप्तो बिन्दुरेव। तथा च रामंअमलं। एवमचि परे मस्यादेशौ सर्वत्र संचारणीयौ। बहुलाधिकारात् कचिदेकपदेपि संधिर्भवति। करिष्यति। काही। काहिइ॥ द्वितीयः। बीओ। बिइओ॥ काहीत्यत्र 'लटस्तिप्ताविजेच्' इति सूत्रे लड्ग्रहणस्य लकारसामान्यवाचकत्वाल्लृटोपीजादेशे सति 'भविष्यति हिरादिः' इति सूत्रेण लृडादेशस्य इचः प्राक् हि इत्यस्य प्रयोगे 'आ भूतभविष्यति च कृञः' इत्यनेन कृञ ऋकारस्य आत्वे सेति काहिइ इति स्थिते सवर्णसन्धौ कृते काही। सन्ध्यभावे काहिइ इति सिद्धम्। द्वितीयश³ब्देपि 'कग—' इति सूत्रेणोपस्थितदलोपे ववयोर्र्भेदन्यायेन वकारस्य बत्वे बितीय इति स्थिते 'वा पानीयगे' इति सूत्रेण पानीयादिगणपठितस्य द्वितीयशब्दस्य संबन्धिन ईकारस्य इत्वे, सति 'प्रायो लुक्' इति तलोपे बिइअ इति स्थिते सवर्णसन्धौ कृते बीओ सन्ध्यभावे बिइओ ईति द्वयं सिद्धम्। नन्वत्र ववयोरभेदन्यायस्त्वसंगत एव। स किं व्याकरणान्तरसिद्धत्वाद्वा अत्र शास्त्रे विधानाद्वा। नाद्यः। व्याकरणान्तरे तदभेदविधानाभावात्। न द्वितीयः। तद्गमकाभावात्। तस्मादसंगतमेतदित्यत्रोच्यते। आद्यपक्षदूषणमस्मदिष्टमेव। द्वितीयं तु न सहामहे। अभेदगमकस्य विद्यमानत्वात्। तथाहि। 'नीवीस्वप्ने वा' इत्यनेन सूत्रेण वस्य मत्वं विधीयते। अत्र च स्थान्यादेशाभ्यां भवितव्यम्। न चात्र सूत्रे

---

१ M. drops परे. २ R. drops सति. ३ P. and R. drop अपि. ४ °रभेद इति न्यायेन My., P. ५ संबन्धि ईकारस्य My. ६ इति पदद्वयं M. ७ °दसगतमेव तदिति My., P. ८ °दिति चेदत्रोच्यते My., P.

तौ दृश्येते । तथा चानुवृत्त्या भवितव्यम् । अनुवृत्तिस्तु 'बो मः शबरे' इत्यव्यवहितपूर्वसूत्रादेव वक्तव्या । तत्पूर्वतनसूत्राणामनुपयोगात् । तथा च सति बस्य स्थानित्वं मस्यादेशत्वं च प्रतीयते । एतच्च 'नीवीसमे वा' इत्यत्र वबयोरभेदमन्तरा न घटते । एवं च सति ज्ञापकादिष्टसिद्धिः । तस्माल्लब्धमित्यादिप्रयोगेषु 'लवरामधश्च' इति सूत्रेणोपरिस्थितवलोपो बीओ इत्यादौ वकारस्थाने बकारोच्चारणं च सिध्यति । अथ यदि ज्ञापकाद्वबयोरभेदः स्यात् तर्हि 'बो वः' इति सूत्रेण बस्य वत्वविधानमनर्थकमेव स्यादिति चेन्नैवम् । तद्विधानस्य नियमार्थत्वादित्यलं सूत्रकलहचर्चया । ननु संधाविदमुदाहरणीभवितुमेव नार्हति । स्वरूपस्यैव दुर्घटत्वात् । तथा हि । 'कग—'इति सूत्रेणोपरिस्थितदलोपे खलु रूपसिद्धिः । नात्र दलोपः कर्तुं शक्यते । ततः पूर्वमेव 'लवराम्—'इति सूत्रेण वलोपप्रसक्तेः । तर्ह्युभयलोपो भवत्विति चेदहो विस्मरणशीलता देवानांप्रियस्य यदुदाहरणस्वरूपभावमपि न जानाति । नन्वत्र पुरस्फूर्तिकत्वाद्दकारस्य वकारस्य तत्सापेक्षत्वाच्च दकारस्यैव लोपो भवतु । सत्यं पुरस्फूर्तिकत्वं सत्यं च तत्सापेक्षत्वं स्वप्रतीतौ वकारस्य । तथाप्यनुक्तमन्यन्यायेन शास्त्रान्तरसिद्धेन 'विप्रतिषेधे परं कार्यम्' इति न्यायेन 'लवराम्—'इति सूत्रस्यैव परत्वाद्वलोप एव युक्त इति नेदमुदाहरणं विद्वत्कवीनां कर्णरसायनीभवितुमर्हति । अत्रोच्यते । 'बहुलम्' इति बहुलग्रहणानुवृत्त्यान्यदेव कार्यं सर्वापवादेन भवतीति विप्रतिषेधन्यायमपोद्य दलोप एव भवति । यद्वा द्वितीयमात्यादिषु 'कग—'इति सूत्रस्य 'लवराम्—' इति सूत्रस्य 'मनयाम्' इति सूत्रस्य च प्रसक्तौ सत्यां 'यथादर्शनं लोपः' इति त्रिविक्रमदेवस्योक्तेरपीदमुदाहर्तुमर्हतीति सर्वं भद्रम् ॥

---

१ तत्रापरतनसूत्राणां° My., P. २ मस्यादेशत्वं M. ३ वत्वविधानस्य My., P. ४ स्वप्रतीतौ तत्सापेक्षत्वं M. ५ शास्त्रान्तरसिद्ध 'विप्र°' R.

न यण् ॥ १ । १ । २० ॥

संधिरित्यनुवर्तते । 'इको यणचि' इति संस्कृतोक्तः संधिः प्राकृते न भवति । इवर्णादेर्यत्वादिर्न भवतीत्यर्थः । यणिति यवरलानां परिग्रहेपि प्राकृते ऋऌवर्णयोः प्रयोगाभावाद्यत्ववत्वयोरेवायं निषेधः ॥ पहावली अरुणो । वहू अवऊढो । प्रभावल्यरुणः । वध्ववगूढः । अत्र प्रभावली अरुणः । वधू अवगूढ इति स्थिते प्रभाशब्दे वधूशब्दे च 'निकषस्फटिकचिकुरे हः' इत्यतो 'हः' इत्यधिकृत्य

खघथधभाम् ॥ १ । ३ । २० ॥

असंयुक्तानामनादौ वर्तमानानामचः परेषां खादीनां हः स्यात् । इति भकारधकारयोर्हकारः ॥ 'प्रायो लुक्—'इति गूढे गकारलोपः । वलोपस्तु प्रायोग्रहणान्न भवतीति रूपसिद्धिः ॥

एङः ॥ १ । १ । २१ ॥

नेत्यनुवर्तते । संधिरिति च । एदोतोः संस्कृतोक्तः संधिः प्राकृते न भवति । लच्छीए आणंदो । रुक्खादो आअओ[1] । देवो अहिणन्दणो । लक्ष्म्या आनन्दः । वृक्षादागतः । देवोभिनन्दनः ॥ अहो अचरिअमित्यादयः संस्कृतवदेव सिद्धाः ॥

शेषेच्यचः ॥ १ । १ । २२ ॥

युक्तस्य[2] लोपे योवशिष्यते स शेषः । तस्मिन्नचि[3] अचः संधिर्न भवति । फणामणिप्पईवा । जोण्हाऊरिअकेसो । फणामणिप्रदीपाः । ज्योत्स्नापूरितकेशः । आद्योदाहरणे 'प्रायो लुक्—' इति दकारलोपे 'पो वः' इति पस्य वत्वे 'लवराम्—'इति रेफलोपे शेषस्य पस्य द्वित्वे च पकारस्याकारस्य दलोपे शिष्टस्य[4] च संधिर्न भवति । द्वितीयोदाहरणेपि पकारलकारयोर्लोपे[5] त्स्नस्य 'श्नष्णस्नह्नह्णक्ष्णां ण्हः' इति ण्हादेशे

[1] रुक्खाओ M. [2] M. has हलो after युक्तस्य. [3] M. has परे after तस्मिनचि. [4] शिष्टेकारस्य My., P. [5] तकारपकारयो° R.

ष्हास्थाकारस्य पलोपे शिष्टेन ऊकारेण सह गुणलक्षणसंधिर्न भवति । बहुलाधिकारात् क्वचिद्विकल्पः । कुम्भकारः । अत्र कलोपे शिष्टेन संधिपक्षे कुंभारो संध्यभावे कुम्भआरो ॥ सुपुरुषः । सूरिसो । सुउरिसो । अत्र पलोपे 'त्वदुत उपरिगुरुके' इत्यत 'उतः' इत्यनुवर्तमाने

रोर्भ्रुकुटीपुरुषयोरित् ॥ १ । २ । ६० ॥

अनयो रेफसम्बन्धिन उकारस्य इत् स्यात् । इति पुरुषशब्दे रेफोकारस्येकारः । क्वचिच्छिष्टेन नित्यं संधिरेव । शातवाहनः । सालाहणो । चक्रवाकः । चक्काओ । अत्र 'प्रायो लुक्—'इति वलोपे शिष्टेन सह लकारस्थाकारस्य सवर्णदीर्घलक्षणसंधिरेव । अत्र संस्कृतशातवाहनशब्दः प्रकृतिभूतः । अत्र 'दोहदप्रदीपशातवाहनातसाम्' इति तवर्गस्य लत्वम् । अथवा शालावाहनशब्दस्य संस्कृतस्य प्रकृतित्वं तत्र 'ड्यापोः संज्ञाछन्दसोर्बहुलम्' इति शालाशब्दस्यापो ह्रस्वः । संज्ञारूपत्वात् । यद्वा सालवाहनशब्दस्य वा प्रकृतित्वम् । सर्वथा लौकिकप्रसिद्धस्य शालिवाहनशब्दस्य तु प्रकृतित्वं न योर्युज्यते । द्वितीयोदाहरणेपि 'लवरामधश्च' इति रेफलोपे शेषस्य द्वित्वे ककारस्थाकारस्य वलोपे शिष्टेनाकारेण सह संधिरेव । सालवाहणो चक्कवाओ इत्येतौ तु प्रायोग्रहणाद्वकारस्य लोपाभावे भवतः । लोपे तु संधिरेव ॥

तिङः ॥ १ । १ । २३ ॥

'न' इत्यनुवर्तते । 'अचः' इति 'अचि' इति च 'संधिः' इति च । तिङः संबन्धिनोचोचि परे संधिर्न भवति । भवतीह । होइ इह । पिबोदकम् । पिज्ज उअअं । अत्र 'होर्हुवहुवा भुवेस्तु—' इत्यनेन भवतेर्धातोर्हो इत्यादेशो 'लटस्तिप्ताविजेन्' इत्यनेन लटस्तिप इजादेशे च होइ इह इति स्थिते इकारयोः संधिर्न भवति । पिज्ज उअअं

१ अवशिष्टेन M. २ सुउरिसो सुरिसो M. ३ अवशिष्टेन M. ४ 'प्रमेद' My. ५ [illegible] M. ६ [illegible] R. ७ अवशिष्टेन M. ८ शेषाभावेऽपि R. ९ भवतः My., P. १० होइवहुवा P. ११ My. and P. drop भवति.

इत्यत्रापि 'पट्टघोट्टडॅल्लपिज्जाः पिबतेः' ईत्यनेन सूत्रेण पिबतेः पिज्जादेशे उदकशब्दे च दकयोर्लोपे अकारोकारयोः संधिर्न भवति ॥ त्रिदश ईश इति स्थिते 'लवराम्—'इति रेफलोपे 'प्रायो लुक्—' इति दलोपे चोभयत्र 'शोः सल्' इति शकारयोः सत्वे सति तिअस ईस इति स्थिते अनुक्तमन्यन्यायेन 'आद्गुणः' इति गुणे प्राप्ते 'बहुलम्' इत्यधिकृत्य 'शेषेप्यचः' इति च

**लोपः ॥ १ । १ । २४ ॥**

अचोचि परे बहुलं लोपः स्यात् । इत्याद्यसकारस्याकारलोपे तिअसीसो ॥ एवं निश्वासउच्छ्वास इति स्थिते निश्वासशब्दे 'लवराम्–' इति वलोपे

**शोर्लुप्तयवरशोर्दिः ॥ १ । २ । ८ ॥**

यवरशषसानां लोपे येवशिष्टाः शषसास्तेषामादेरचो दीर्घो भवति । इति दीर्घे णीसास इति स्थिते शेषत्वात् सकारस्य द्वित्वे प्राप्ते

**दीर्घान्न ॥ १ । ४ । ८७ ॥**

दीर्घात् परस्य शेषस्यादेशस्य च द्वित्वं न भवति । इति द्वित्वप्रतिषेधः ॥ उच्छ्वासशब्देपि

**दोदोनुत्साहोत्सन्न ऊच्छसि ॥ १ । २ । ६२ ॥**

उदः उदित्युपसर्गस्य उकारस्य शसि शकारसकारपरयोः दा दकारेण सह ऊत्वं भवत्युत्साहोत्सन्नशब्दौ वर्जयित्वा । इत्युद ऊकारे णीसासऊसास इति स्थिते पूर्ववद्गुणे प्राप्ते 'लोपः' इत्यनेन पूर्वपदान्त्यसकारस्याकारस्य लोपे

**द्विवचनस्य बहुवचनम् ॥ २ । ३ । ३४ ॥**

अस्मिन् शास्त्रे सुबन्ते तिङन्ते च द्विवचनस्य बहुवचनं भवति । इति बहुवचने 'श्लुग्जश्शसोः' इति जसो लोपे णीसासूसासा इति

---

१ °ढल्ल° P. २ इति सूत्रेण R. ३ R. drops प्राप्ते. ४ स्यात् My., P. ५ P. drops उदः. ६ स्याद्° My., P.

सिद्धम् ॥ एवं सर्वत्र सावधानेन संधिस्तदपवादौ[1] विज्ञाय कविभिः प्रयोगाः संचारणीयाः ॥

इति संधिप्रकरणम्[2] ।

---

[3]अमलस्फटिकाङ्गाय चन्द्रमःखण्डधारिणे ।
वटाधःस्थितिदक्षाय दक्षिणामूर्तये नमः ॥

[4]अथाजन्ताः [5]पुंलिङ्गा उच्यन्ते । [6]अकारान्तः पुंलिङ्गो रामशब्दः । अनुक्तमन्यन्यायेन प्रातिपदिकसंज्ञा स्वाद्युत्पत्तिश्च । राम सु इति स्थिते 'अतो डो[7] विसर्गः' इत्यधिकृत्य

सोः ॥ २ । २ । १३ ॥

अतः परस्य सोः स्थाने डो[8] भवति[9] । अनुक्तमन्यन्यायेन डिलोपटिलोपौ[10] । रामो ॥ द्विवचनस्य प्रयोगो[11] नास्तीत्युक्तमेव[12] । [13]राम जस् इति स्थिते शास्त्रान्तर इवैकशेषः ।

लुग्जश्शसोः ॥ २ । २ । ३ ॥

नाम्नः परयोर्जश्शसोः लुक् स्यात् ॥

शिति दीर्घः ॥ १ । १ । १५ ॥

शिति परतः पूर्वस्याचो दीर्घः स्यात् । रामा ॥ संबुद्धौ[14] राम सु इति स्थिते । [15]अत्राप्यनुक्तन्यायेनैकवचनस्यैव[16] संबुद्धित्वम् ।

---

१ °तदपवादान् R. २ °प्रक्रिया R. ३ R. omits this verse; and M. puts it after अथाजन्तपुंलिङ्गा उच्यन्ते. ४ अथाजन्तपुंलिङ्गा M. ५ My. and P. omit पुंलिङ्गा उच्यन्ते. ६ My. and P. omit अकारान्तः पुंलिङ्गो रामशब्दः. ७ डो M. ८ डो M. ९ स्यात् My., P. १० टिलोपडलोपौ M. ११ द्विवचनप्रयोगो My., P. १२ नेत्युक्तमेव My., P. १३ अनुक्तन्यायेनैकरामशब्दप्रयोगे प्राप्ते रामस् My., P. १४ My. and P. have सम्भवति after it. १५ संबोधने My., P. १६ My. and P. drop भवति. १७ अनुक्तमन्यन्यायेन My., P. १८ My. and P. drop एव.

डो[1]श्लुकौ तु संबुद्धेः ॥ २ । २ । ४२ ॥

'सोः' इति प्राप्तो यो डो[2] यश्च 'श्लुगनपि सोः' इति श्लुक् तौ डो[3]श्लुकौ संबुद्धेरामन्त्रणार्थस्य सोस्तु भवतः ॥

दे संमुखीक[4]रणे ॥ २ । १ । ५९ ॥

अत्र संबुद्धिव्यञ्जकस्य हे इत्यस्य स्थाने दे इति प्र[5]योज्यः ॥ [6]अनुक्तमन्यन्यायेन टिलोपः । दे रामा । डो[7] इत्यस्याभावपक्षे

सोर्लुक् ॥ २ । २ । ९ ॥

नाम्नः परस्य सोर्लुक् स्यात् । इति सुलोपः । दे राम । नात्र पक्षे सोः श्लुक् । इदुदन्तत्वाभावात् तदन्तविषयत्वात्तस्य । एवं च[8] से[9]ति डो इत्यस्याभावपक्षे सोः श्लुकमङ्गीकृत्य 'शिति दीर्घः' इति दीर्घे प्राप्ते बहुलाधिकारान्न[10] भवतीति षड्भाषारूपमालिकाकारेण दुर्गणाचार्येणोक्तं चिन्त्यम्[11] ॥ बहुवचनं पूर्ववत् । दे रामा । द्वितीयैक[12]वचने राम अमिति स्थिते 'वीप्सार्थात्तदचि सुपो मस्तु' इ[13]त्यतः 'सुपः' 'मः' इत्यधिकृत्य

अमः ॥ २ । २ । २ ॥

नाम्नः परस्य सुप्संबन्धिनोमः स्थाने म[14]कारो भवति । रामम् । अत्र 'अन्त्यहलोऽश्रदुदि' [15]इति मलोपे प्राप्ते 'मोचि वा' इ[16]त्यतः 'मः' इत्यधिकृत्य

बिन्दुल् ॥ १ । १ । ४० ॥

शब्दानामन्त्यमकारस्य नित्यं बिन्दु[17]र्भवति । लोपापवादः । रामं ।

---

१ दो॰ My. २ दो My. ३ दो॰ My. ४ M. has न after it. ५ प्रयुज्यते M. ६ My. and P. drop अनुक्तमन्यन्यायेन. ७ दो M. ८ R. omits च. ९ M. drops सति. १० नेति My., P. ११ दुरुक्तम् M. १२ My. and P. drop द्वितीयैकवचने. १३ इत्यधिकृत्य R., M. १४ मः स्यात् My., P. १५ इत्यन्त्यहलो मकारस्य लोपे M. १६ इत्यधिकृत्य M., R. १७ बिन्दुः स्यात् P., My.

राम शस् इति स्थिते 'अतो [1]ङो विसर्गः' इत्यतः[2] 'अतः' इत्यधिकृत्य 'दिर्वा भ्यसि' इत्यतो[3] 'वा' इति च

**शसेत् ॥ २ । २ । २० ॥**

अतः शसि परे एद्वा स्यात् । रामे । पक्षे रामा । उभयत्रापि शसः श्लुक् ॥ राम टा इति स्थिते

**टो ङेर्णल् ॥ २ । २ । १८ ॥**

अत[5] इत्यनुवर्तते । अतः परस्य टावचनस्य[6] ङिर्त्[7] एण इत्यादेशो[8] भवति । लित्वान्नित्यम् । टिलोपः । रामेण इति स्थिते 'बिन्दुल्'[9] इत्यधिकृत्य

**क्त्वासुपोस्तु सुणात् ॥ १ । १ । ४२ ॥**

क्त्वाप्रत्ययस्य सुपश्च[11] संबन्धिनः सुकाराण्णकाराच्च परो बिन्दुर्भवति[12] विकल्पेनेति णात्परो बिन्दुः ।[13]रामेणं रामेण ॥ राम भिस् इति स्थिते

**हिंहिँहि भिसः ॥ २ । २ । ५ ॥**

नाम्नः परस्य भिस एते त्रय आदेशा[14] भवन्ति ॥ 'शसेत्' इत्यतः 'एत्' इत्यनुवर्तमाने[15] 'अतः' इति च

**भिस्भ्यः सुपि ॥ २ । २ । २१ ॥**

एतेषु परेष्वत एत्वं स्यात् । पृथक्त्वान्नित्यम् । रामेहिं । रामेहिँ । रामेहि ॥ चतुर्थ्यास्तु षष्ठ्येव । तादर्थ्यचतुर्थ्यां तु विशेष उच्यते । राम ङे इति स्थिते 'ङसो ङम्' इत्यधिकृत्य

**तादर्थ्ये ङेस्तु ॥ २ । ३ । ३६ ॥**

---

१ दो M. २ इत्यधिकृत्य M., R. ३ इति च R., M. ४ दे° M. ५ M. has अत इत्यनुवर्तते before the Sûtra. ६ तृतीयैकवचनस्य R. ७ M. has स्थाने after it. ८ दि देण M. ९ इत्यादेशः स्यात् P., My. १० 'बिन्दुः' -इत्य° M., R. ११ सुपः संबन्धिनः M. १२ बिन्दुर्वा स्यादिति My., P. १३ रामेण रामेणं M. १४ आदेशाः स्युः My., P. १५ इत्यनुवर्तमाने M.

तादर्थ्ये विहितस्य ङेश्चतुर्थ्येकवचनस्य स्थाने ङम् । षष्ठी तु विकल्पेन भवति । तथा च रामस्स रामाय वा पोप्फाणि । रामार्थं पुप्फाणीत्यर्थः । एवं सर्वत्र तादर्थ्ये चतुर्थ्येकवचनस्य विकल्पेन प्रयोगः प्राकृते ऊह्यः ॥ पञ्चम्येकवचने

हिंतोत्तोदोदु ङसिस् ॥ २ । २ । ६ ॥

अत्र ङसिसिति सुव्व्यत्ययेन षष्ठ्यर्थे प्रथमा । तथा च नाम्नः परस्य ङसिसः पञ्चम्याः स्थाने हिंतो त्तो दो दु इति चत्वार आदेशा भवन्ति । ङसिसित्यनेन एकवचनबहुवचनयोर्ग्रहणम् । तेनोभयत्रा-प्येते आदेशाः । तथा च । रामहिंतो । रामत्तो । रामदो । रामदु । इति स्थिते

दिर्दोत्तोदुङसौ ॥ २ । २ । ८ ॥

पञ्चम्यादेशेषु दो त्तो दु इत्येतेषु ङसौ पञ्चम्येकवचने च परतः पूर्वाचो दीर्घः स्यात् । रामाहिंतो । अत्रैकवचनत्वाद्दीर्घः । एवमेक-वचनादेशेषु नित्यमेव दीर्घः । बहुवचनादेशेषु दो त्तो दुर्ष्वपि । अन्यत्र विकल्पः । रामत्तो । अत्र 'संयोगे' इति कृतदीर्घस्यापि ह्रस्वः । नन्वत्र यदि ह्रस्वस्तर्हि दीर्घविधौ त्तो इत्यस्य ग्रहणं किमर्थम् । 'भिस्भ्य-स्सुपि' इति भ्यसादेशेष्विन्नेत्वबाधनार्थम् । दोदुग्रहणमप्येत्वापवादा-यैव । तेन त्तो इत्यत्र ह्रस्व एव । दोदु इत्यत्र दीर्घ एव । 'प्रायो लुक्—'इत्यादिना दकारयोर्लोपः । रामाओ रामाउ । नन्वत्र दलोपः कर्तुं न शक्यते । दोदु इति प्रतिपदोक्तत्वादिति चेन्न । दोद्वन्तयोः प्रयोगादर्शनात् । तर्हि दकारोच्चारणं किमर्थम् । भाषान्तरार्थम् । तेन शौरसेनीमागध्योरातिदेशिकौकारोकारौ न स्तः । किं तु दोदू एव ।

१ M. drops ङेः. २ रामाय रामस्स My., P. ३ तादर्थ्येकवचन-प्रयोगस्य विकल्पः M. ४ आदेशाः स्युः My., P. ५ °भयत्रापि आदेशा एते M. ६ R. drops च. ७ पूर्वस्याचो R. ८ दुषु विकल्पः R. ९ °निषेधार्थम् M. १० शक्यः My., P.

पैशाच्यां गिरीतो इत्यादौ 'तद् तदोः' इति दकारस्य तकारार्थं चेति युक्तं दकारोच्चारणम् ॥

ङसेः श्लुक् ॥ २ । २ । १५ ॥

अत इत्यनुवर्तते । अतः परस्य ङसेः श्लुक् स्यात् । शित्वात् पूर्वस्य दीर्घः । रामा ॥

ङसिसो हि ॥ २ । २ । १७ ॥

अत इत्यनुवर्तते । अत्रापि ङसिस इत्यनेनैकवचनबहुवचनयोः परिग्रहः । अतः परस्य ङसिसः पञ्चम्या हि इत्यादेशो भवति । रामाहि । अत्राप्येकवचनादेशत्वाद् 'दिर्दोतोदुङसौ' इति दीर्घः ॥ भ्यसि हिंतो इत्याद्यादेशा हि इत्यादेशोपि ॥

सुन्तो भ्यसः ॥ २ । २ । ७ ॥

नाम्नः परस्य भ्यसः सुन्तो इति भवति ॥ 'अतो डो[6] विसर्गः' इत्यतः 'अतः' इत्यधिकृत्य

दिर्वा भ्यसि ॥ २ । २ । १९ ॥

अत इति पञ्चम्यन्तस्य षष्ठ्यन्तविपरिणामः । अतो भ्यसादेशे परे दीर्घो वा स्यात् । पक्षे 'भिस्भ्यः सुपि' इत्येत्वम् । रामाहिंतो रामेहिंतो । रामासुंतो । रामेसुंतो । रामाहि । रामेहि । चोदोदुपु दीर्घ एव । अत्रापि 'संयोगे' इति कृतदीर्घस्यापि ह्रस्वः । रामत्तो । रामाओ । रामाउ ॥ राम ङस् इति स्थिते

ङसोस्त्रियां सङ् ॥ २ । २ । १० ॥

नाम्नः परस्य ङसः सङ् इत्ययमादेशो भवति न तु स्त्रियाम् । ङित्त्वाद् द्वित्वम् । रामस्स । अस्त्रियामिति किम् । महिलाए । मालीए । बुद्धीए । धेणूए ॥ राम आम् इति स्थिते

---

१ R. has एवम् before पैशाच्या. २ परिग्रहणम् M. ३ पञ्चम्याः स्थाने हि M. ४ °त्यादेश- स्यात् My., P. ५ इत्यादेशो भवति M. ६ दो M. ७ इत्यधिकृत्य M. ८ षष्ठ्यर्थो विपरिणाम M. ९ R. drops इत. १० °मादेशः स्यात My., P. ११ My. and P. drop मालाए.

**णशामः ॥ २ । २ । ४ ॥**

नाम्नः परस्यामः [1]षष्ठीबहुवचनस्य णशित्या[2]देशो भवति । शित्त्वाद् दीर्घः । 'क्त्वासुपोस्तु सुणात्' इति वा बिन्दुः । रामाणं । रामाण । न[3]त्रानुक्तमन्यन्यायेन 'चुट्ट' इति [4]णलोपः । बहुलाधिकारात् । [5]साक्षात् प्रत्ययत्वाभावाद्वा ॥ राम ङि इति स्थिते 'वैतत्तदः' इत्यतो 'वा' इत्य[6]नुवर्तमाने 'अतः' इति च

**ङेर्डे ॥ २ । २ । १६ ॥**

[7]अकारादुत्तरस्य ङेर्डिदेत्वं वा स्यात् । टिलो[8]पः । रामे । पक्षे

**ङेर्म्मिः ॥ २ । २ । ११ ॥**

ङेर्म्मिरित्या[9]देशः स्यात् । रित्त्वाद् द्वित्वम् । रामम्मि ॥ राम सुप् इति स्थिते 'भिस्भ्यः सुपि' इत्येत्वम् । 'क्त्वासुपोः' इति वा बिन्दुः[10][11] । रामेसुं । रामेसु । एवं शिवादयोप्यदन्ता अनुक्तविशेषादेशा उह्याः ॥ सर्वनामशब्दानामकारान्तानां रूपभेदोस्ति । अत्रापि सर्वनाम्नामभिधेयवल्लिङ्गता । सर्व सु इति स्थिते 'लवराम्—' इति रेफलोपे 'शेषादेशस्—' इति द्वित्वे च[12] एकवचनं रामवत् । जसि

**सर्वादेर्जसोतो डे ॥ २ । २ । ६२ ॥**

सर्वादेरदन्तात् परस्य जस एत्वं डिद्भवति । [13]अनुक्तमन्यन्यायेन टिलोपः । सव्वे ॥ द्वितीयैकवचनमारभ्य षष्ठीबहुवचनपर्यन्तं रामवत् । आमि 'अनिदमेतदस्तु—' इत्यतः 'तु' इत्यनुवर्तमाने 'सर्वादेः' इति च

---

१ षष्ठी बहुवचनस्य is omitted by My. and P. २ °त्यादेशः स्यात् My., P. ३ अत्रानुक्त° R. ४ न णलोपः R. ५ My. and P. drop साक्षात् प्रत्यय त्वाभावाद्वा. ६ °त्यनुवर्तते M. ७ अदन्तात् परस्य My., P. ८ ङेः सप्तम्येकवचनस्य My., P. ९ ङित्वाट्टिलोपः My., P. १० °त्यादेशो भवति M. ११ बिन्दुल् My., P. १२ R. omits च. १३ अनुक्तन्यायेन R ; My. and P. drop अनुक्तमन्यन्यायेन.

आमो डेसिं ॥ २।२।६५ ॥

सर्वादेरतः परस्यामः डिदेसिं इत्यादेशो वा स्यात्[1]। टिलोपः। सव्वेसिं। पक्षे णश्, बिन्दुश्च वा। सव्वाणं सव्वाण[2]। अत्र आमामिति बहुवचनं लिङ्गत्रयेप्येसिमादेशार्थम्। डौ

ङेस्त्थसिंम्मि ॥ २।२।६३ ॥

'सर्वादेः' इत्यनुवर्तते 'अतः' इति च। सर्वादेरदन्तात् परस्य ङेः स्थाने त्थ स्सिं म्मि इति त्रय आदेशाः स्युः। सव्वत्थ। सव्वस्सिं। सव्वम्मि। 'अतः' इति किम्। अमुम्मि।

अनिदमेतदस्तु किंयत्तदः स्त्रियामपि हिं ॥ २।२।६४ ॥

'सर्वादेः' इत्यनुवर्तते। 'ङेस्त्थसिंम्मि' इत्यतो 'ङेः' इति 'अतः' इति च। इदमेतद्वर्जितादन्तात् सर्वादेः परस्य ङेर्हिं इत्यादेशो वा स्यात् किंयत्तद्भ्यः स्त्रियामपि। सव्वहिं। पक्षे पूर्वोक्तादेशाः॥ शेषं[3] रामवत्। एवं विश्वादीनां रूपं नेयम्। विशेषास्तु कथ्यन्ते। विश्वशब्दे 'लवराम्—' इति वलोपे

शोर्लुप्तयवरशोर्दिः ॥ १।२।८ ॥

[4]यवरशषसानां लोपे येवशिष्टाः शुसंज्ञिताः शषसास्तेषामादेरचो दीर्घः स्यात्। इति दीर्घे[5] 'शोः सल्' इति शस्य सत्वे च वीसो। नात्र शेषत्वेपि सस्य द्वित्वम्। 'दीर्घात्' इति प्रतिषेधात्॥ शेषं सर्ववत्। उभशब्दस्य द्विवचनवाचित्वेपि प्राकृते 'द्विवचनस्य बहुवचनम्' इति सर्वत्र बहुवचनमेव। उभ जस् इति स्थिते 'खघथधभाम्' इति भस्य हत्वे। उहे। शेषं सर्ववत्। उभशब्दस्य उभय इति स्थिते

उभयाधसोरवहहेट्ठौ ॥ १।३।९८ ॥

उभय अधस् इत्येतयोर्यथासंख्यमवह हेट्ठ इत्येतावादेशौ स्तः[6]।

---

१ भवति M. २ सव्वाण सव्वाणं M. ३ शेषम् M. ४ My. and *P. drop from यवरशषसानाम् to स्यात्.* ५ दीर्घो भवति R. ६ वा भवतः M.

इत्युभयशब्दस्य अवहादेशे सर्ववद्रूपम् । आदेशाभावपक्षे भस्य हत्वे उहअं । उवहं इत्यपि केचित् । पक्षद्वयेपि सर्ववत् प्रक्रिया ॥ पूर्वशब्दस्य ।

**मलिनधृतिपूर्ववैडूर्याणां मइलदिहिपुरिमवेरुलिआः ॥१।३।९९॥**

मलिनादीनां मइलादय आदेशा वा भवन्ति । इति पूर्वशब्दस्य पुरिमादेशे । पुरिमो । पुरिमे । इत्यादि । आदेशाभावपक्षे रेफलोपे शेषस्य द्वित्वे

**संयोगे ॥ १ । २ । ४० ॥**

संयोगे परे पूर्वस्य ह्रस्वो भवति । इति ह्रस्वे । पुव्वो । पुव्वे । इत्यादि सर्ववद्रामवच्च । ह्रस्वे कृते 'सौ' इत्युत ओत्वम् । बहुलाधिकारात् सर्वत्र न भवति । अथवा ओत्वस्यानादेशविषयत्वाद्वा परिहारः ॥ एकशब्दस्य

**दैवगेखौ ॥ १ । ४ । ९२ ॥**

'रितो द्वित्वल' इत्यतो 'द्वित्वल्' इत्यनुवर्तते । दैवादिष्वनादौ वर्तमानस्य व्यञ्जनस्य द्वित्वं वा स्यात् । इति दैवादिपाठात् द्वित्वे । एक्को । द्वित्वाभावे

**वैकादौ गः ॥ १ । ३ । १४ ॥**

'खोपुष्पकुब्जकर्परकिले कोः' इत्यतः 'कोः' इत्यनुवर्तते । एकादौ कोः कवर्गस्य गकारो वा भवति । एगो । 'स्वार्थे तु कश्च' इत्यतः 'स्वार्थे' इति 'उपरेः संव्याने छल्' इत्यतो 'छल्' इत्यप्यधिकृत्य

**नवैकाद्वा ॥ २ । १ । २० ॥**

नव एक आभ्यां परः स्वार्थे द्विरुक्तो लो वा स्यात् । इति स्वार्थे ल्ले

---

१ सर्वशब्दवत् R. and सर्ववत् M. for सर्ववद्रूपम्. २ आदेशाभावे My., P. ३ My. and P. drop प्रक्रिया. ४ °वैडूर्याणा M. ५ स्यु My., P. ६ M. drops परे. ७ इत्यनुवर्तते M., R. ८ °किले कोः P. ९ इति च द्वयमप्यधिकृत्य M., R.

सति । एकल्लो इत्यप्यस्ति ॥ शेषं सर्ववत् । ननु एक्को एकल्लो इत्यत्र 'संयोगे' इत्येकारस्य ह्रस्वः किं न स्यात् । किं ततः । तदानुकन्यायेन 'एच इग्घ्रस्वादेशे' इतीकारः स्यात् । ततश्च इक्को इकल्लो इति स्यादिति चेन्मैवम् । 'अत्र शास्त्रे एदोतोः क्वचित् स्वरूपेणैव ह्रस्वः' इति त्रिविक्रमदेवेनोक्तत्वादत्र स्वरूपह्रस्वाङ्गीकारात् । एक्को । एकल्लो इत्युपपन्नः प्रयोगः । प्रथमशब्दे प्रथम सु इति स्थिते 'हे दक्षिणेस्य' इत्यतः 'अस्य' इत्यनुवर्तमाने 'उलध्वनिगवयविष्वचि वः' इत्यतः 'उल्' इति च

**प्रथमे प्थोः ॥ १ । २ । २० ॥**

प्रथमशब्दे पकारथकारयोः संबन्धिनोर्वर्णस्य[1] युगपत्. क्रमेण चोत्वं स्यात् । लित्वान्नित्यम् । इत्यवर्णद्वयस्योत्वे 'वेतसः—'इत्यतः 'तोः' इत्यनुवर्तमाने 'ढः पृथिव्यौषधनिशीथे' इत्यतः 'ढः' इति च

**प्रथमशिथिलमे[2]थिशि[3]थिरनिषधेषु ॥ १ । ३ । ४८ ॥**

एषु तवर्गस्य ढो[4] भवति । इति थकारस्य ढत्वे युगपदकारद्वयस्योकारद्वयविधानपक्षे पुढुमो । क्रमपक्षे । पुढमो । पढुमो ॥ जसि तु पूर्ववत् । शेषं रामवत् । स्वशब्दे विशेषैः[5] । स्व सु इति स्थिते 'अर्हत्युच' इत्यतः 'उत्' इत्यनुवर्तमाने[6]

**एकाचि श्वस्स्वे ॥ १ । ४ । १०८ ॥**

एकस्वरयोः श्वस्स्व[7] इत्येतयोः संयुक्तस्यान्त्यहलः प्रागुत्वं भवति[8] । इत्युत्वे सुवो सुवे । इत्यादि । ङसिङ्योः पूर्वशब्दवत् । अन्यत्र[10] सर्ववत् । एकाजिति किम् । स्वजनः । सजणो ॥ कतमशब्दे 'सप्तपर्णे फोः' इत्येतः[11] 'फोः' इत्यधिकृत्य

---

१ संवन्धिवर्णस्य M. २ °मेधि° R., M. ३ °शिधिर° M. ४ ढः स्यात् My. ५ My. and P. omit विशेषः; P. drops विशेषः. ६ इत्यनुवर्तते M. ७ स्वश्व M., P. ८ स्यात् My., P. ९ जसि R.; शसि M.; इसिङो My. १० अन्यत्र तु M. ११ इत्यधिकृत्य R., M.

मध्यमकतमे च ॥ १ । २ । १४ ॥

अनयोर्द्वितीया चेत्वं स्यात् । 'प्रायो लुक्—'इति तलोपः । कइमो ॥ शेषं सर्ववत् । येषां यत्र यत्र सर्वनामसंज्ञा तत्र तत्र सर्ववत् । अन्यत्र रामशब्दवद्रूपनिर्णयः कर्तव्यः ॥

इति सर्वनामानि ॥

---

अथाकारान्तेषु केषुचित् संयुक्तादेशवत्सु विशेषाः प्रदर्श्यन्ते ।

स्तोः ॥ १ । ४ । १ ॥

अधिकारोऽयम् । 'ईल् ज्यायाम्'[1] इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यते[2] तत् स्तोः संयुक्तस्य भवतीति[3] वेदितव्यम् ॥ वृक्षशब्दे[4] 'क्ष्वेडकगे खल्' इत्यतः[5] 'खल्' इत्यधिकृत्य

वृक्ष रुर्वृक्षे ॥ १ । ४ । ७ ॥

वृक्षे[6] संयुक्तस्य खो[7] भवति । तत्संनियोगेन[8] वृकारस्य रुकारः । 'रुक्खो । रुक्खा[9] । अस्यैव[10] रूपान्तरम्[11] । 'उत्सववक्षोत्सुकसामर्थ्ये छो वा' इत्यतः 'छः' इत्यधिकृत्य

स्पृहादौ ॥ १ । ४ । २२ ॥

स्पृहादिषु स्तोश्छो भवति । इति स्पृहादिपठिते[12]वृक्ष[13]शब्दे क्षस्य[14] छत्वे

ऋतोत् ॥ १ । २ । ७४ ॥

आदेर्ऋकारस्यात्[15] स्यात् । इत्यत्त्वे वच्छो वच्छा ॥ शेषं रामवत् । एवं सर्वत्र विशेषादेशमात्रमुच्यते । अन्यत् सर्वं रामवदूह्यम् ।

---

१ 'ईल्जायाम्' My. २ इति ऊर्ध्वं यदुपक्रमिष्यते M. ३ स्यादिति P., My. ४ प्रथमं वृक्षशब्दे R. ५ इत्यधिकृत्य R., M. ६ वृक्षशब्दे संयुक्तस्य P., My. ७ खः स्यात् My., P. ८ तत्संनियोगे M. ९ M. has शेषं रामवत् after this. १० The passage from अस्यैव रूपान्तरम् to वच्छो वच्छा is omitted in My. and R. ११ M. has वा देशान्तरम् after this. १२ स्पृहादिपठितस्य P. १३ वृक्षशब्दस्य P. १४ P. drops क्षस्य. १५ °स्यात्वं स्यात् P.

वा रक्ते गः ॥ १ । ४ । २ ॥

रक्ते संयुक्तस्य गकारो वा भ[1]वति । ‘शेषादेशस्य—’इत्यादिना द्वित्वम् । रग्गो । गत्वाभावे ‘कग—’इति कलोपे शेषे[2]द्वित्वे रत्तो ॥

शुल्के ङ्गः ॥ १ । ४ । ३ ॥

वेत्यनुवर्तते । शुल्के संयुक्तस्य ङ्गो वा[3] स्यात् । सुङ्गो । पक्षे सुक्को ॥

कः शक्तमुक्तदष्टमृदुत्वरुग्णेषु ॥ १ । ४ । ४ ॥

एषु स्तोः क[4]कारो भवति तु विकल्पेन । सक्को । पक्षे सत्तो । मोक्को[5] । अत्र ‘स्तौ’ इत्युत ओत्वम् । दक्को । पक्षे ‘स्त्यानचतुर्थे र्थे[6] तु ठः’ इ[7]त्यतो ‘ठः’ इत्यधिकृत्य

ष्टः ॥ १ । ४ । १४ ॥

ष्टस्य ठः स्यात् । आदेशत्वाद् द्वित्वम् । दट्ठो ॥ रुग्णशब्दे

हरिद्रादौ ॥ १ । ३ । ७८ ॥

‘रो डा पर्याणे’ इत्यतो ‘रः’ इत्यनुवर्तते । ‘लो जठरवठरनिष्ठुरे’ इत्यतो ‘लः’ इति च । हरिद्रादौ रस्य ल[8]त्वं स्यात् । इति हरिद्रादि-पाठाद्रेफस्य लत्वे । लुक्को । पक्षे ‘मनयाम्—’इति न[9]लोपे द्वित्वे च । लुग्गो ॥

क्ष्वेडकगे खल् ॥ १ । ४ । ५ ॥

क्ष्वेडकादिषु स्तोः ख[10]कारो भवति । लित्वान्नित्यम् । ‘प्रायो ङ्क्’—इति कलोपः । खेड[11]ओ । विषम् । स्फोट[12]कः । खोडओ । स्फेटकः । खेडओ । अ[13]त्र उभयत्र ‘टो डः’ इति टस्य डत्वम् ॥

ष्कस्कोर्नाम्नि ॥ १ । ४ । ६ ॥

---

१ स्यात् My., P. २ शेषस्य द्वित्वे P., My. ३ भवति वा M. ४ ककारो वा for ककारो भवति तु विकल्पेन P., My. ५ M. has पक्षे मोत्तो after it. ६ च तु रः M. ७ इत्यधिकृत्य M., R. ८ लत्वं वा स्यात् M. ९ M. drops न. १० खः स्यात् P., My. ११ खेडवो M., R. १२ सोटकः P. १३ उभयत्रापि for अत्र उभयत्र P., My.

'खल्' इत्यनुवर्तते । अनयोर्नाम्नि संज्ञायां खैल् स्यात् । लित्त्वो-न्नित्यम् । पोक्खरक्खो । पुष्कराक्षः । अत्र 'हृश्चौत्कुतूहले' इत्यत 'ओत्' इत्यनुवर्तते । 'त्वदुत उपरिगुरुके' इत्यत 'उतः' इति च ।

**स्तौ ॥ १ । २ । ६६ ॥**

युक्ते परे उत ओत्वं स्यात् । इत्योत्वम् । स्के । स्कन्धः । खंधो ॥

**क्षः ॥ १ । ४ । ८ ॥**

'खल्' इत्यनुवर्तते । क्षस्य खैल् स्यात् । क्षयः । खओ । विच-क्षणः । विअक्खणो ॥

**स्कन्दतीक्ष्णशुष्के तु खोः ॥ १ । ४ । १० ॥**

'खल्' इत्यनुवर्तते । एषु खोरादेः संयुक्तस्य खो वा स्यात् ॥ खंदो । पक्षे 'कग—'इति सलोपे अचः परत्वाभावान्न शेषस्य द्वित्वम् । कन्दो । तीक्ष्णः । तिक्खो । पक्षे तिण्हो । अत्र 'श्नष्ण-' इत्यादिना क्ष्णस्य ण्हः । शुष्कः । सोक्को । पक्षे सोक्खो ।

**स्तम्भे ॥ १ । ४ । ११ ॥**

'खल्' इत्यनुवर्तते । 'तु' इति च 'खोः' इति च । स्तम्भे खोरादेः संयुक्तस्य खकारो वा स्यात् । खंभो । पक्षे 'कग—'इति सलोपे तम्भो ।

**स्थोऽस्पन्दे ॥ १ । ४ । १२ ॥**

'खोः' इत्यनुवर्तते । स्पन्दाभाववृत्तौ स्तम्भे खोरादेः संयुक्तस्य थकारो भवति ॥ लित्वान्नित्यम् । थम्भो । सात्त्विकभावः ।

**स्त्यानचतुर्थे च तु ठः ॥ १ । ४ । १३ ॥**

---

१ ख for खल् M., R. २ M. and R. drop लित्वान्नित्यम्. ३ ख for खल् M., R. ४ M. drops तिण्हो. ५ सुक्खो M. ६ सुक्को M. ७ संयुक्तस्य खोः for खोरादेः संयुक्तस्य R. ८ भवति M. ९ थकारः स्यात् My., P.

अनयोश्चकारादसन्दंवृत्तौ स्तम्भे च स्तोष्ठत्वं तु भवति । ठंभो । सात्त्विकभावः । पक्षे उक्तं थत्वम् । चउट्टो । पक्षे रेफलोपे द्वित्वे चं चउत्थो । अत्रैव 'तु मयूरचतुर्थ—'इत्यादि सूत्रेणादेरचः परेण सस्वरव्यञ्जनेन सहितस्य स्थाने वा ओत्वे चोट्टो । चोत्थो इत्यप्यस्ति । सौराष्ट्रमहाराष्ट्रयोः 'लवराम्—'इति रेफलोपे उभावपि ष्टौ तथा च 'ष्टः' इति ठत्वे ऐच एङि सोरट्ठो । महाराष्ट्रे तु ठत्वे

**हश्च महाराष्ट्रे ह्रोर्व्यत्ययः ॥ १ । ४ । १११ ॥**

अत्र ह्रोः हकाररेफयोः व्यत्ययः स्थितिपरिवृत्तिर्भवति । एकैस्थाने एको भवतीत्यर्थः । हश्च दीर्घस्य ह्रैस्वोपि भवति । मरहट्ठो ॥

**विसंस्थुलास्थ्यधनार्थे ॥ १ । ४ । १५ ॥**

'ठः' इत्यनुवर्तते । विसंस्थुलास्थिशब्दयोरधनवाचिन्यर्थशब्दे च स्तोः ठो[5] भवति । विसंठुलो । अर्थः । अट्ठो । प्रयोजनम् । धने तु अत्थो ॥

**चः कृत्तिचत्वरे ॥ १ । ४ । १६ ॥**

अनयोर्युक्तस्य चः स्यात् । कृत्तिधरः । किर्च्चिहरो । कैंपादित्वात् ऋतः 'इत्कृपगोः' ईतीत्वम् । चत्वरपरः । चच्चरपरो ॥

**त्योचैत्ये ॥ १ । ४ । १७ ॥**

'चः' इत्यनुवर्तते । चैत्यवर्जितस्य त्यस्य चः स्यात् । प्रत्ययः । पच्चओ । अमात्यः । अमच्चो । अत्र 'संयोगे' इति ह्रस्वः । 'अचैत्ये' इति किम् । चेइअं । अत्र 'स्याद्भव्य—' इत्यादिना यात् प्रागित्वम् । ऐचे एत्वं यतलोपश्च । अत्रैव दैत्यादित्वात् ऐचः अइ इत्यादेदो चइइअं । चइत्तं इत्यप्यस्ति ॥

१ विकल्पेन भवति M. २ R. drops च. ३ एकस्य स्थाने M. ४ R. drops अपि. ५ ठः स्यात् My., P. ६ किंचिह्लो M. ७ अत्र 'ऋत—' R. ८ इति कृपादित्वादीत्वं R. ९ भवेदित्यादिना M. १० ऐच एदित्येत्वम् M.

**उत्सवऋक्षोत्सुकसामर्थ्ये छो वा ॥ १ । ४ । १९ ॥**

एषु स्तोश्छत्वं वा स्यात् । उच्छवो । पक्षे

**'दोदोनुत्साहोत्सन्न ऊ शसि' ॥ १ । २ । ६१ ॥**

उदः उदित्युपसर्गसंबन्धिनः उकारस्य शसि शकारसकारयोः परयोः दा दकारेण सह ऊ ऊकारः स्यात् । इत्यूत्वे ऊसवो । ऋक्षः । रिच्छो । पक्षे 'क्षः' इति क्षस्य खत्वे रिक्खो । उभयत्रापि 'ऋतोत्' इत्यतः 'ऋतः' इत्यधिकृत्य

**केवलस्य रिः ॥ १ । २ । ९० ॥**

व्यञ्जनेनासंयुक्तस्य ऋतो रिरित्यादेशः स्यात् । इति रिः । उत्सुकः । उच्छुओ । ऊसुओ । अत्रापि 'दोर्द—'इत्यूकारः । दृष्टसामर्थ्यः । दिट्ठसामच्छो । पक्षे दिट्ठसामत्थो ॥

**क्षण उत्सवे ॥ १ । ४ । २१ ॥**

'छः' इत्यनुवर्तते । उत्सववाचिनि क्षणशब्दे स्तोश्छः स्यात् । छणो । उत्सवे किम् । खणो । क्षणः कालः ।

क्षुण्णस्थगितदक्षर्सदृशेषु स्पृहादित्वात् स्तोश्छत्वे च्छुण्णो । क्षुण्णो । छइओ । स्थगितः । अत्र गतयोर्लोपः । दच्छो । दक्षः ॥ 'केवलस्य रिः' इत्यतः 'रिः' इत्यधिकृत्य 'ऋतोत्' इत्यतः 'ऋतः' इति च

**दृश्यक्सक्विनि ॥ १ । २ । ९१ ॥**

अ क्स क्विन् एतदन्ते दृशिधातौ ऋतो रिरित्यादेशः स्यात् । इति क्सान्तदृशिधातोर्ऋकारस्य रौ [12]सेति 'शोर्लुस्यवरशोर्दिः' इत्यतः[13] 'दिः' इत्यधिकृत्य 'आदेः' इति च

---

१ My. and P. omit the portion from ऊ शसि to ऊकारः स्यात्. २ इत्यधिकृत्य M., R. ३ रीत्यादेशः M. ४ उच्छुवो M. ५ ऊसुवो M. ६ दोदोनुत्साहोत्सन्नदे इति उद ऊकारः M. ७ भवति R. ८ सदृक्षेषु R. ९ °त्यधिकृत्य M., R. १० इति च M., R. ११ °त्या-देशः स्यात् My., P. १२ रिः इति सति M. १३ M. drops इत्यतः.

तु समृद्ध्यादौ ॥ १ । २ । १० ॥

समृद्ध्यादिष्वादेरवर्णस्य दीर्घो वा स्यात् । इति समृद्ध्यादिपाठाद्वा दीर्घे । सारिच्छो । सरिच्छो । सदृक्षः ॥

ध्यश्चत्संप्सामनिश्चले ॥ १ । ४ । २३ ॥

निश्चलव्यतिरिक्तानां ध्यादीनां छः स्यात् । भुक्तपथ्यः । भोत्त-पच्छो । पश्चिमः । पच्छिमो । मत्सरः । मच्छरो । अवीप्सः । अ-विच्छो । इत्यादि । 'अनिश्चले' इति किम् । णिच्चलो । अत्र 'कग—' इति शलोपशेषद्वित्वे

द्यय्यर्यां जः ॥ १ । ४ । २४ ॥

एषां जः स्यात् । अनवद्यः । अणवज्जो । द्योतः । जोओ । जय्यः । जज्जो । क्षय्यः । खज्जो । पर्यायः । पज्जाओ । इत्यादि ॥

ध्यह्योर्झल् ॥ १ । ४ । २६ ॥

अनयोर्झत्वं लित्स्यात् । ध्यः । उपाध्यायः । उवज्झाओ । अत्र 'पो वः' । 'संयोगे' इति ह्रस्वश्च । विध्यः । विज्झो । मध्यमः । म-ज्झिमो । अत्र 'मध्यमकतमे च' इत्यतः इः । ह्यः । सह्यः । सज्झो । इत्यादि ॥

र्तस्याधूर्तादौ टः ॥ १ । ४ । ३० ॥

र्तस्य टः स्यात् धूर्तादीन् वर्जयित्वा । कैवर्तः । केवट्टो । संव-र्तितः । संवट्टिओ । 'अधूर्तादौ' इति किम् । धूर्तः । धुत्तो । धूर्तादि—

धूर्त । संवर्तन । वार्ता । प्रवर्तन । मुहूर्त । मूर्त । आवर्तक । संवर्तक । वार्तिक । वर्तिका । निवर्तन । आवर्तन । विवर्तन । प्रव-र्तक । मूर्ति । उत्कर्तित । निवर्तक । कीर्ति । कार्तिक । इत्यादि ।

---

१ त्व M. २ छो भवति M. ३ भुत्तपच्छो M. ४ लोपशेषद्वित्वे M. ५ M. has इति षत्वम् after it. ६ M. drops च. ७ सवट्टओ. M. ८ धूर्तसवर्तवार्ताश्च मूर्तवर्तकवार्तकाः । आवर्तनमुहूर्तौ च प्रवर्तकनिवर्तकौ ॥ कीर्तिः कार्तिकमूर्ती च उत्कीर्त्यादीनि तद्गणे ॥ M.

बहुलाधिकारात् वार्ताशब्दे टत्वमपि भवति ॥

**प्रवृत्तसंदष्टमृत्तिवृत्तेष्टापत्तनकदर्थितोष्ट्रे ॥ १ । ४ । ३१ ॥**

'टः' इत्यनुवर्तते । एषु स्तोष्टत्वं स्यात् । प्रवृत्तः । पवट्टो । अत्र 'ऋतोत्' इत्यत्वम् । संदष्टः । संदट्टो । कदर्थितशब्दे 'वेतस इति तोः' इत्यतः 'तोः' इत्यधिकृत्य

**कदर्थिते स्तोर्वः ॥ १ । ३ । ४४ ॥**

अस्मिन्नादेस्तवर्गस्य वः स्यात् । इति दस्य वत्वे । कवट्टिओ । उष्ट्रः । उट्टो । सन्दष्टोष्ट्रयोः 'ष्टः' इत्यस्यापवादः ॥

**डल्[1] फोर्मर्दितविच्छर्दच्छर्दिकपर्दवितर्दिगर्तसंमर्दे ॥१। ४ । ३३ ॥**

एषु द्वितीयस्य संयुक्तस्य नित्यं डो भवति । मर्दितः । मड्डिओ । विच्छर्दः । विच्छड्डो । कपर्दः । कवड्डो । गर्तः । गड्डो । संमर्दः । संमड्डो ॥

**ढोर्धर्द्धिश्रद्धामूर्ध्नि[3] तु ॥ १ । ४ । ३४ ॥**

एषु स्तोर्ढो वा स्यात् । अर्धभागः । अड्ढहाओ । पक्षे अद्धहाओ[4] ॥

**दग्धविदग्धवृद्धिदंष्ट्रावृद्धे ॥ १ । ४ । ३५ ॥**

'ढः' इत्यनुवर्तते । एषु स्तोर्ढो भवति । दग्धः । दड्ढो । विदग्धः । विअड्ढो । वृद्धशब्दे ऋत्वादिपाठादुत उत्वे । वुड्ढो । बहुलाधिकारात् क्वचिन्न भवति । वुद्धकविणिरूविअं । वृद्धकविनिरूपितम् ॥

**पञ्चदशदत्तपञ्चाशति णः ॥ १ । ४ । ३६ ॥**

एषु स्तोर्णकारो[5] भवति । दत्तः । दिण्णो । अत्र स्वप्नादिपाठादत इत्वम् ॥

**ज्ञम्नोः ॥ १ । ४ । ३७ ॥**

---

१ °केद्य° M. २ डो for डल् M. ३ °र्द्धि° M. ४ अर्धहाओ P., My. ५ °र्णकारः स्यात् M.

ण इत्यनुवर्तते । एतयोर्णः स्यात् । सुज्ञानः । सुण्णाणो । ज्ञात । णाओ । अत्रैव

**जाणमुणौ ज्ञः ॥ २ । ४ । १३० ॥**

ज्ञा अवबोधन इत्यस्य जाण मुण इत्यादेशौ स्तः[1] । जाणत इति स्थिते 'आदेर्लुक्यास्वो –' इत्यतः 'अत' इत्यधिकृत्य[2]

**क्ते ॥ २ । ४ । १८ ॥**

क्तप्रत्यये परे[3]तोत इत्व स्यात्[4] । इतीत्वे । जाणिओ[5] । ज्ञात । वि-ज्ञाणमओ[6] । विज्ञानमयः । विण्णाणमओ इत्यप्यस्ति । नात्र 'ज्ञो ञोविज्ञाने' इति प्रतिषेध । जाणादेशस्य धात्वादेशरूपत्वात् । बहुलाधिकाराज्जाणादेशो विकल्प्यत इति केचित् । तेन विण्णाणादयः सिद्धा । म्न । प्रद्युम्न[7] । पज्जुण्णो । धृष्टद्युम्नः[8] । धट्टज्जुणो[9] । 'कर्णिकारे णो वा' इत्यतः[10] 'ण' इत्यधिकृत्य 'रितो द्वित्वल्' इत्यतः 'द्वित्वल्' इति 'दीर्घान्न'[11] इत्यत. 'न' इति च

**धृष्टद्युम्ने[12] ॥ १ । ४ । ८९ ॥**

अत्रादेशस्य णस्य द्वित्व न[13] स्यात् । इति णस्य न[14] द्वित्वम् । पृथक्त्वान्नित्यम्[15] ॥

**स्तवे थो वा ॥ १ । ४ । ३८ ॥**

अत्र सयुक्तस्य[16] थो वा स्यात् । थवो[17][18] । पक्षे 'कग—' इति स-लोपे । तवो[19] ॥

---

१ भवत M २ 'मोमसुष्विच' इति च is added after this in M. ३ परे M ४ भवति M. ५ ज्ञात । जाणिओ । M ६ विज्ञानमय । विज्ञाणमओ । P. ७ प्रद्युम्नादय M. ८ दृष्टद्युम्न । R, My, P ९ दट्ठज्जणो R, My., P, धट्ज्जुण्णो M. १० इत्यधिकृत्य M. ११ M. and My. drop 'दीर्घान्न' इत्यत 'न' इति च १२ R. has न धृष्ट°. १३ M. omits न. १४ नित्य for न M १५ पृथक्त्वान्नित्यम् is dropped in M. १६ अत्र स्तो सयुक्तस्य M. १७ M. has स्तव । before it. १८ थओ M. १९ तओ M.

**रो ह[1]श्चोत्साहे ॥ १ । ४ । ३९ ॥**

'थः' इत्यनुवर्तते । 'वा' इति च । अत्र स्तोर्थो वा स्यात् तत्संनियोगेन ह्रस्व च रेफः । उत्थारो । पक्षे '[2]थ्यश्चत्स—' इत्यादिना त्सस्य छः । [3]उच्छाहो ॥

**स्तः ॥ १ । ४ । ४० ॥**

स्तस्य थः स्यात् । हस्तः । हत्थो । प्रस्तरः । पत्थरो ॥

**पर्यस्ते टश्च ॥ १ । ४ । ४१ ॥**

अत्र स्तस्य टः स्याच्चकारात्थश्च ॥ 'लो वार्द्रे' इत्यतः 'लः' इत्यधिकृत्य

**र्यः सौकुमार्यपर्यङ्कपर्यस्तपर्याणे ॥ १ । ४ । ५५ ॥**

एषु र्यस्य लः स्यात् । इति र्यस्य लत्वे । पर्यङ्कः । पलङ्को । [4]पँ-लङ्को । पल्लट्टो । पल्लत्थो । पर्यस्तः । [5]सौकुमार्ययुक्तः । सोअमल्लजुत्तो । अत्र ऐच एङ् । मुकुलादिपाठादुकारस्याकारः कलोपश्च । कृतपर्याणः । कअपल्लाणो । अत्रैव 'भनयाम्' इति यलोपे '[6]ग्यौ बृहस्पतौ तु बहोः' इत्यतः 'तु' इत्यनुवर्तमाने

**[7]रो डा पर्याणे ॥ १ । ३ । ७६ ॥**

अत्र रेफस्य डा वा स्यात् । [8]कअपडाणो । 'वात्मभसनि पः' इत्यतः 'पः' इत्यधिकृत्य

**ड्वर्म्मोः ॥ १ । ४ । ४३ ॥**

एतयोः [10]पँः स्यात् । कुड्मलः । [11]'कुंपँलो । अत्र वक्रादित्वाद्बिन्दुः ।

---

१ हकारस्य M. २ 'थ्यश्च' इत्यादिना M. ३ M. has उत्साहः before it. ४ पल्लङ्को My. ५ Before this M. has प्रसङ्गात् सौकुमार्यपर्याणयोरपि रूपनिर्णयः क्रियते । ६ ग्यौ M. ७ M. has इति डादेशे before it. ८ M. has कअवड्डाणो इत्यपि भवति. ९ ड्मोः M. १० पो भवति । M. ११ कुंपल्लो M.

रुक्मिणीरमणः । रुप्पिणीरमणो । क्वचित्थोपि[1] । रुत्थिणीरमणो[2] । क्वचिन्मोपि[3] । रुम्मिणीरमणो ॥

**ष्पस्पोः फः ॥ १ । ४ । ४४ ॥**

अनयोः फः स्यात्[4] । निष्पापः[5] । णिप्फावो । निष्पेषः । णिप्फेसो । स्पन्दः[6] । फन्दो । इत्यादि ॥

**भीष्मे ॥ १ । ४ । ४५ ॥**

'फः' इत्यनुवर्तते । अत्र ष्मोः फः स्यात्[7] । भिप्फो । भीष्मः । 'श्लेष्मबृहस्पतौ तु फोः' इत्यतः[8] 'तु' इत्यधिकृत्य

**ग्मो मः ॥ १ । ४ । ४७ ॥**

ग्मस्य मो वा स्यात् । तिग्मकिरणः । तिम्मकिरणो । पक्षे मलोपे तिग्गकिरणो ॥

**न्मः ॥ १ । ४ । ४८ ॥**

'मः' इत्यनुवर्तते । न्मस्य मः[9] स्यात् । मन्मथ इति स्थिते 'बो वः' इत्यतः[10] 'वः' इत्यधिकृत्य 'त्वभिमन्यौ मः' इत्यतः 'मः' इति च

**मन्मथे ॥ १ । ३ । ६६ ॥**

अत्र मस्य वः स्यात् । थस्य हत्वं च[11] । वम्महो ॥

**ताम्राम्रयोर्म्बः[12] ॥ १ । ४ । ४९ ॥**

अनयोः[13] स्तोर्म्बः स्यात् । तम्बमओ[14] घटः[15] ॥

**इन्मयटि ॥ १ । ३ । ६९ ॥**

---

१ क्वचिद्दोपि M. २ रुम्विणीरमणो M. ३ M. drops क्वचिन्मोपि । रुम्मिणीरमणो । ४ फो भवति M. ५ निष्पावः P., My., R. ६ M. has स्पर्शः । फंसो । वक्रादित्वाद्बिन्दुः before इत्यादि । ७ भवति M. ८ इत्यधिकृत्य M. ९ मो भवति M. १० इति च M. ११ M. drops च. १२ म्भः M. १३ अनयोर्युक्तस्य मकारपरो भकारो भवति M. १४ तम्भमओ M. १५ M. drops घटः.

मयट्प्रत्यये यस्य वा इत् स्यादिति विकल्पादिकारः[1]। तम्बमइओ। ताम्रमय इत्यर्थः। आम्रः। अम्बो[2]॥

ऊर्ध्वे भो वा ॥ १।४।५१ ॥

अत्र स्तोर्भो वा स्यात्। अतिऊर्ध्वः[3]। अइउब्भो। अत्र तलोपे 'न यण्' इति संधिप्रतिपेधः। पक्षे। रवलोपद्वित्वे[4]। अइउद्धो॥

वश्च विह्वले ॥ १।४।५२ ॥

अत्रापि[5] स्तोर्वस्य भो वा स्यात् च्छश्च। विब्भलो। विच्छलो। पक्षे[6] विहलो। अत्र[7] 'अहः' इति निषेधात् शेषहकारस्य द्वित्वं न भवति॥

डेरो ब्रह्मचर्यसौन्दर्ये च ॥ १।४।५७ ॥

'र्यः सौकुमार्य—' इत्यतः 'र्यः' इत्यनुवर्तते। अनयोर्डित् एर इत्यादेशः[8] स्यात्। टिलोपः[9]। अणुट्ठिअबम्हचेरो[10]। अनुष्ठितब्रह्मचर्यः। दिट्ठसोंदेरो। दृष्टसौन्दर्यः॥

वा पर्यन्ते ॥ १।४।५८ ॥

'र्यः' इत्यनुवर्तते। 'डेरः' इति च। पर्यन्ते र्यस्य डेरो वा स्यात्। पेरंतो। पक्षे। सामान्यो जः। पज्जन्तो॥

धैर्ये रः ॥ १।४।५९ ॥

धैर्ये र्यस्य रो वा स्यात्। धैर इति स्थिते। 'ऐच एङ्' इत्यतः 'ऐचः' इत्यधिकृत्य

ई धैर्ये ॥ १।२।१०९ ॥

---

१ विकल्पेन इकारः M. २ अम्भो M. ३ अस्यूर्ध्वः M. ४ रवलेति धरेफलोपशेषद्वित्वे M. ५ M. has 'भः' इत्यनुवर्तते। अत्र संयुक्तसंबन्धिनो धस्य &c. ६ M. has वलोपे after पक्षे. ७ शेषस्यापि हकारस-द्वित्वं न भवति 'अह' इति निषेधात् M. ८ °स्यादेशो भवति M. ९ M. drops टिलोपः १० म्बह्मचरो My.

[1]अत्रैकारस्येकारः स्यात् । [2]गेअधीरो । गतधैर्यः । पक्षे जः । गअधिज्जो ॥

**तूर्यदशार्हशौण्डीर्ये ॥ १ । ४ । ६० ॥**

[3]एषु स्तो [4]रः स्यात् । तूरघोसो । तूर्यघोषः । दसारो । दशार्हः । पआसिअसोण्डीरो । [5]अत्र 'अहः' इति रस्य न द्वित्वम् । प्रकाशितशौण्डीर्यः ॥

**बाष्पे होऽश्रुणि ॥ १ । ४ । ६१ ॥**

अश्रुवाचिनि बाष्पशब्दे [6]स्तोर्हः स्यात् । बाहो । '[7]अश्रुणि' किम् । बप्फो । [8]ऊष्मा । अत्र 'ष्पस्पोः—' इति फः ॥

**कार्षापणे ॥ १ । ४ । ६२ ॥**

[9]अत्र स्तोर्हः [10]स्यात् । काहावणो । कहावणो । कहावणो इत्यत्र 'संयोगे' इति पूर्वमेव ह्रस्वः पश्चादादेशः । यद्वा कर्षापणशब्दाद्वा सिद्धिः ॥

**न वा तीर्थदुःखदक्षिणदीर्घे ॥ १ । ४ । ६३ ॥**

[11]एषु स्तोर्हत्वं न वा विकल्पेन भवति । तीह इति स्थिते । 'ईतः काश्मीरहरीतक्योर्ललौ' [12]इत्यतः 'ईतः' इत्यधिकृत्य

**तीर्थे ह्यूत् ॥ १ । २ । ५५ ॥**

अत्र युक्तस्य हि हकारे सति [13]ईकारस्य [14]ऊकारः स्यात् । [15]ईत्यूकारे । कअतूहो । कृततीर्थः । पक्षे । कअतित्थो । दुहो । दुःखम् । अत्र

---

१ अत्रैकार्यस्येकारः P., R. २ M. has इतीकारे before this. ३ M. has रः' इत्यनुवर्तते before it. ४ रो भवति M. ५ M. has प्रकाशितशौण्डीर्यः । अत्र शेषस्यादेशस्य वा रेफस्य न द्वित्वम् । 'अहः' इति प्रतिषेधात् । ६ स्तोर्हो भवति M. ७ M. has नेत्रजलम् before 'अश्रुणि'. ८ ऊष्मो M. ९ M. has before it 'हः' इत्यनुवर्तते । १० भवति M. ११ M. has 'हः' इत्यनुवर्तते before it. १२ इत्यधिकृत्य M. १३ इतः before ईकारस्य M. १४ ऊत् before ऊकारः M. १५ ईदीकारस्थाने ऊकारे M.

दुःखशब्दस्य कुलादिपाठाद्विकल्पेन पुंस्त्वम्[1]। दुहिओ। दुक्खिओ। दुःखितः। दक्षिणशब्दे हत्वे 'शोर्ल्हस्यचरशोर्दिः' इत्यतः 'दिः' इत्यधिकृत्य[2]

हे दक्षिणेस्य ॥ १ । २ । ९ ॥

अत्र युक्तस्य हे सत्यादेरवर्णस्य दीर्घः स्यात्। दाहिणो। हत्वाभावे[3] दक्खिणो। दीर्घशब्दे हत्वे दीहो। 'नवैकाद्वा' इत्यतः 'वा' इति 'स्वार्थे तु कश्च' इत्यतः 'स्वार्थे' इति चाधिकृत्य[4]

रो दीर्घात्[5] ॥ २ । १ । २४ ॥

दीर्घात् 'स्वार्थे' रो वा स्यात्। दीहरो। हत्वाभावे रेफलोपद्वित्व-ह्रस्वाः। दिग्घो। अत्र सर्वस्य शेषस्यादेशस्य वा ह्रस्व न द्वित्वम्[6] ॥

ह्लो ल्हः ॥ १ । ४ । ६६ ॥

ह्लकारस्य लकारान्तहकारः स्यात्। प्रह्लादः। पल्हाओ। अत्र 'प्रायो लुक्–' इति दलोपः। कह्लारपरः। कल्हारपरो ॥

श्मष्मस्मह्मामसररश्मौ म्हः ॥ १ । ४ । ६७ ॥

श्मादीनां म्हादेशः[7] स्यात् सररश्मिशब्दौ वर्जयित्वा। काश्मीरः। कम्हारो ॥

काश्मीरे म्भः ॥ १ । ४ । ५३ ॥

अत्र श्मोर्म्भो[8] वा स्यात्। कम्भारो। अत्रोभयत्रापि

ईतः काश्मीरहरीतक्योर्लालौ ॥ १ । २ । ५१ ॥

एतयोरीकारस्य यथाक्रमं आ अ इत्यादेशौ लितौ स्तः। इत्याफारः। ग्रीष्मः। गिम्हो[9]। विस्मयः। विम्हओ। अस्मादृशः। अम्हारिसो। अत्र 'दृश्यक्सक्विनि' इति ऋकारस्य रिकारः[10]। दलोपश्च।

[1] पुंलिङ्गता M. [2] इत्यधिकृत्य M. [3] M. has रत्वे before दक्खिणो. [4] इत्यधिकृत्य M. [5] इति चाधिकृत्य M. [6] M. adds अह इति प्रतिषेधात्. [7] म्हादेशो भवति M. [8] म्भं इत्यादेशो वा स्यात् M. [9] गि ओ P. [10] रिः M.

ह्म । ब्राह्मणः । बम्हणो । बाम्हणो । अत्रोत्खातादिपाठसमये 'ब्राह्मणपूर्वाह्णयोरपीच्छन्त्यन्ये' इति वचनाद्विकल्पेनाकारस्य ह्रस्वः । इदं वचनं 'संयोगे' इति प्रा[1]प्तह्रस्वविकल्पार्थम् । 'अस्मररश्मौ' इति किम् । सरो । रस्सी ॥

पक्ष्मणि ॥ १ । ४ । ६८ ॥

'म्हः' इत्यनुवर्तते । अत्र स्तोर्म्हः स्या[2]त् । पक्ष्मललोचनः । पम्हळ्ळोअणो ॥

श्नष्णस्नह्नह्नक्ष्णां ण्हः ॥ १ । ४ । ६९ ॥

एषां ण्हादेशः स्या[3]त् । प्रश्नः । पण्हो । कृष्णः । कण्हो । स्नातः । ण्हाओ । प्रस्नवः । पै[4]ण्हवो । ज्योत्स्नापूरः । जोण्[5]हाऊरो । अपह्नवः । अ[6]वण्हओ । पूर्वाह्णः । पुव्वण्हो । पुव्वाण्हो । अत्रापि ब्राह्मणशब्दवद्[7] वा ह्रस्वः । अपराह्णः । अवरण्हो । श्लक्ष्णः[8] । सण्हो । लण्हो इत्यपि केचित् ॥

सूक्ष्मे ॥ १ । ४ । ७० ॥

अत्र स्तोर्ण्हः स्या[9]त् । सुण्हो । 'ह्रश्चौत्कुतूहले' इ[10]त्यतः 'औत्' इत्यनुवर्तमाने

सूक्ष्मेद्वोतः[11] ॥ १ । २ । ६७ ॥

अत्र ऊत ओत्वं वा स्यात् । सो[12]ण्हो । अ[13]त्वपक्षे सण्हो ॥

आश्लिष्टे लधौ ॥ १ । ४ । ७१ ॥

अत्र युक्तयोर्यथाक्रमं लधौ स्तः । श्लीत्यस्य लः । ष्ट इत्यस्य धः । आलिद्धो ॥

टठौ स्तब्धे ॥ १ । ४ । ७२ ॥

---

१ प्राप्तह्रस्वस्य विक° M. २ भवति M. ३ भवति M. ४ पह्नवो My. ५ जोह्नाऊरो My. ६ अवह्नवो My. ७ M. inserts उत्खातादिपाठाद्विकल्पेन ह्रस्वे । ८ श्लक्ष्ण° M. ९ भवति M. १० इत्यनुवर्तते M. ११ ओतः M. १२ सोण्ू R. १३ My. drops अत्वपक्षे । सण्हो ।

अत्र युक्तयोर्यथाक्रमं टठौ भवतः । दट्ठो । स्तब्धः ॥

**तो ढो रश्चारब्धे तु ॥ १ । ४ । ७३ ॥**

आरब्धे युक्तस्य तो वा स्यात् । तत्सन्नियोगेन रस्य च ढः । आढत्तो । पक्षे । आरद्धो । अत्र बत्रयोरभेदन्यायेन 'लवराम्—' इति वलोपद्वित्वे

**शोर्लुक्खोः स्तम्बसमस्तनिःस्पृहपरस्परश्मशानश्मश्रुणि ॥ १ । ४ । ७५ ॥**

स्तम्बादिषु शोः शषसानामादौ वर्तमानानां संयुक्तसंबन्धिनः[1] लुक् स्यात् । तम्बो । समत्तो । णिप्पिहो । अत्र कृपादित्वादृत इत्वम् । इदं सूत्रं 'स्तः' इति सूत्रस्य 'ष्पस्पोः—' इति सूत्रस्य 'श्मष्म—' इत्यादि—सूत्रस्य चापवादकम् ॥

**श्चस्य हरिश्चन्द्रे ॥ १ । ४ । ७६ ॥**

अत्र श्चस्य लुक् स्यात् । हरिअंदो ॥

**धात्रीद्रे रस्तु ॥ १ । ४ । ८० ॥**

धात्रीशब्दे द्रशब्दे च रेफस्य वा[2] लुक् स्यात् । धात्रीरमणः । धत्ती-रमणो । लुगभावे । धारीरमणो[3] । अत्र 'कग—' इति तलोपः । हलात् प्रागेव रेफलोपे । धाईरमणो । द्रे । चन्द्रः । चन्दो । चन्द्रो । रुद्रः । रुद्दो । रुद्रो । इत्यादि । हृदशब्दे विशेषः । 'हश्च महाराष्ट्रे ह्रोर्व्यत्ययः'[4] इत्यतः 'व्यत्ययः' इत्यधिकृत्य

**ह्रदे दहयोः ॥ १ । ४ । ११५ ॥**

अत्र दहयोर्व्यत्ययः[5] स्यात् । द्रह इति स्थिते । अत्रापि द्रशब्दस्य विद्यमानत्वाद् विकल्पेन रेफलोपे । दहो । द्रहो । केचिन्नेच्छन्ति रेफलोपम् । द्रहशब्दः संस्कृतेपीति केचित् । द्रहादयस्तरुणपुरुषवाचका इत्यन्ये । भो द्रहो । भो द्रह ॥

---

१ M. has लुगनुवर्तते before it. २ लुग्वा स्यात् M. ३ धाती-रमणो My. ४ हेर्व्यत्ययः M. ५ दकारहकारयो° M.

**ह्नस्य मध्याह्ने ॥ १ । ४ । ८१ ॥**

[1]अत्र ह्नस्य लुग्वा स्यात् । मज्झण्णो । अत्र ह्नस्य लोपे नस्य णत्वम् । शेषस्य[2] द्वित्वम् । 'संयोगे' इति ह्रस्वः[3] । पक्षे । मज्झण्हो ॥

**ज्ञो ञोविज्ञाने ॥ १ । ४ । ८२ ॥**

ज्ञसंबन्धिनो ञस्य लुग्वा स्यात् । न[4] तु विज्ञाने । सुज्ञानः । सुज्जाणो । पक्षे 'ज्ञञोः' इति णत्वम् । सुण्णाणो । सर्वज्ञः । सवज्जो । पक्षे पूर्ववण्णत्वे । अत्र 'उल्ध्वनिगवयविष्वचि वः' इत्यतः[5] 'उल्' इत्यधिकृत्य 'हे दक्षिणेस्य' इत्यतः 'अस्य' इति च

**ज्ञो णोभिज्ञादौ ॥ १ । २ । १७ ॥**

अभिज्ञादिषु ज्ञकारादेशस्य णस्य संबन्धिनः अस्य उत्वं लित् स्यात् । सव्वण्णू । आत्मज्ञः । अप्पज्जो[6] । अप्पण्णू । अत्र 'वात्मभस्मनि पः' इति त्मस्य पादेशः । दैवज्ञः । देव्वज्जो । देव्वण्णू । दैवशब्दस्य वैरादिपाठादैकारस्य वा अ इ इत्यादेशे दइवज्जो । दइवण्णू[7] । एवमिङ्गितज्ञ इत्यादि[8] । 'अविज्ञाने' इति किम् । विण्णाणं । एषां ज्ञकारादेशणकारसंबन्धिनोकारस्य[9] उत्वं दृश्यते । तेभिज्ञादयो मनोज्ञाज्ञाभिज्ञप्रज्ञासंज्ञाविज्ञानेषु ज्ञस्य ण एव । तथा च । मणण्णू । अण्णू । अहिण्णू । प्रज्ञा[10] । पण्णा । संज्ञा[11] । सण्णा । विज्ञानम्[12] । विण्णाणं । अत्रैव 'जाणमुणौ ज्ञः' इति ज्ञाधातोर्जाणादेशे विज्जाणमित्यप्यस्ति । 'अविज्ञाने' इति प्रतिषेधस्तु ज्ञो ञो विषय एव । न तु जाणादेशविषयः । आज्ञप्तिः । आणत्ती । आज्ञापनम् । आणावणं । अत्रापि ण एव ॥

**रात्रौ ॥ १ । ४ । ८४ ॥**

[13]रात्रिशब्दे त्रुक्तस्य लुग्वा स्यात् । रात्रिचरः । राइअरो । रत्तिअरो ॥

---

[1] M. has धात्रीद्रेस्तु' इत्यतः 'तु' इत्यनुवर्तते before it. [2] शेषद्वित्वम् M. [3] ह्रस्वश्च M. [4] अविज्ञाने विज्ञानशब्दे न भवति M. [5] इत्यधिकृत्य M. [6] अप्पज्ञो R. [7] इत्याद्यपि भवति for दइवण्णू M. [8] इत्याद्यपि M. [9] संबन्धिनोवर्णस्य M. [10] M. drops प्रज्ञा. [11] M. drops संज्ञा. [12] M. drops विज्ञानम्. [13] M. has लुगनुवर्तते before it.

## अथ द्वित्वविधिः ॥

'रितो द्वित्वल्' इत्यत.[1] 'द्वित्वल्' इत्यधिकृत्य

**शेषादेशस्याह्रोचोखोः ॥ १ । ४ । ८६ ॥**

संयुक्तयोरेकतरस्य लोपे योवशिष्यते स शेषः । तस्य संयुक्तादेशस्य च अह्रः हकाररेफवर्जितस्य अचः स्वरात् परस्य अखोरनादौ वर्तमानस्य द्वित्वं स्यात्[2] । शेषे । समस्तः । समत्तो । इत्यादि । आदेशे । रक्तः । रग्गो । इत्यादि । 'अह्रः' इति किम् । विह्वलः । विहळो । धैर्यम् । धीरं । 'अचः' इति किम् । वयस्यः । वअंसो । अत्र वक्रादित्वाद्बिन्दुः । 'अखोः' इति किम् । णाणं ॥

**दीर्घान्न ॥ १ । ४ । ८७ ॥**

लाक्षणिकादलाक्षणिकाच्च दीर्घात् परयोः शेषादेशयोर्द्वित्वं न स्यात्[3] । निश्वासः । णीसासो । अत्र 'शोल्लुप्त—' इति दीर्घविधानाल्लाक्षणिकत्वम्[4][5] । अलाक्षणिकात् । ईश्वरः । ईसरो । पार्श्वः । पासो । इत्यादि । अलाक्षणिकाद् द्वित्वाभावः प्रयोगतोनुसर्तव्यः ॥

**कर्णिकारे णो वा ॥ १ । ४ । ८८ ॥**

अत्र णग्रहणमुत्तरार्थम् । कर्णिकारे शेषस्य द्वित्वं वा स्यात् । कणिआरो । कण्णिआरो ॥

**वा से ॥ १ । ४ । ९० ॥**

[6]से समासे शेषादेशयोर्द्वित्वं वा स्यात् । [7]णइग्गामो । णइगामो । नदीग्रामः । णइगामो इत्यत्र

**दिह्रौ मिथस्से ॥ १ । १ । १८ ॥**

से समासे दिह्रौ दीर्घह्रस्वौ मिथोन्योन्यं बहुलं स्तः[8] । एवं समासेषु

---

१ इत्यधिकृत्य M. २ भवति M. ३ भवति M. ४ °विधानाद्दीर्घस्य लाक्षणिकाभाव° M. ५ M. has इत्यापूरणम् after लाक्षणिकत्वम्. ६ M. has 'द्वित्वल्' इत्यनुवर्तते before it. ७ नदीग्रामः । णईगामो । णइग्गामो M. ८ भवतः M.

सर्वत्र दीर्घह्रस्वयोर्व्यत्ययोनुसन्धेयः । प्रकृतमनुसरामः । कुसुमप्रकरः । कुसुमप्पअरो । कुसुमपअरो[1] ॥

प्रमुक्तगे ॥ १ । ४ । ९१ ॥

'वा से' इति सर्वमनुवर्तते । प्रमुक्तादिषु समासे यथादर्शनं व्यञ्जनस्य द्वित्वं वा स्यात् । प्रमुक्तः । पम्मुक्को । पमुक्को । अत्र 'कः शक्त—' इत्यादिना स्तोः कः । सेप्पवासो[2] । सपवासो । बद्धप्फलो[3] । वद्धफळो । बद्धफलः । मळअस्सिहरिस्सिहंडो । मलअसिहरिसिहंडो । मलयशिखरिशिखण्डः । त्रैलोक्यनाथः । तेल्लोक्कणाहो । तेळोक्कणाहो । सपरितापः । सप्परितावो । सपरितावो । परवशः । परव्वसो । परवसो । प्रतिकूलः । पडिक्कूळो । पडिकूळो । अदर्शनः । अद्दंसणो । अदंसणो । अत्र वक्रादित्वाद्बिन्दुः । आकृतिगणत्वात्[4] । पफुल्लम् । प्पफुल्लं । पफुल्लं । सपरिहासम् । सप्परिहासं । सपरिहासं । इत्यादि सिद्धम् । ननु पडिकूळ इत्यत्र लोपलक्षणलक्षितत्वात् 'प्रायो लुक्—' इति कलोपः किं[5]मिति न । उच्यते । अत्र[6] सूत्रे समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि भवतीत्युक्तत्वात् यदा भिन्नपदत्वं तदा कादीनामादित्वाल्लोपो न भवति । एकपदत्वपक्षे तु लोप एवेत्युभयमप्यस्तीति संतोष्टव्यम् ॥

दैवगेखौ ॥ १ । ४ । ९२ ॥

दैवादिष्वनादेर्यथादर्शनं व्यञ्जनस्य द्वित्वं वा स्यात् । दैवपरः । देव्वपरो । देवपरो । व्याकुलः । वाउल्लो । वाउळो । नीडः । [7]नेड्डो । नेडो । अत्र 'एल्वीडनीडकीदृश—' इत्यादिना ईकार[8]स्य एकारः । निहितः । णिहित्तो । णिहिओ । स्थूलः । थुल्लो[9] । थूलो । अत्र 'कग—' इति सलोपः । ननु थुल्लो इत्यत्र 'स्तौ[10]' इत्युत ओत्वं किमिति न[11] । बहुलाधिकारात् । अत्रैव

१ M. has इत्याद्यूह्यम् after it. २ सप्पळावो । सप्रलापः । M. ३ बद्धफलः । बद्धफळो । बद्धप्फलो । M. ४ वक्रादेश्चाकृति° M. ५ कस्मान्न भवति M. ६ तत्र M. ७ नेडो । नेड्डो । M. ८ ईत एत् । M. ९ थूलो । थुल्लो । M. १० स्थाली for स्तौ M. ११ M. adds भवति after it.

**स्थूले रलूतश्चौत् ॥ १ । ३ । ८३ ॥**

'लो ललाटे च' इत्यतः 'लः' इत्यनुवर्तते । स्थूले ऊकारस्यौत् स्यात् तत्संनियोगेन लस्य च रः । थोरो । व्याहृतः । वाहिचो । वाहिओ । अत्र कृपादित्वादृत इत्[1] । तलोपश्च । मूकः । मुक्को । मूओ । इत्यादि । दैवादिः—दैवव्याहृतव्याकुलनीडनिहितमातृक[2]कुतूहलस्थूलएकतूष्णीकमूकसेवाभसदीयहुतस्त्यानस्थाणु । इत्यादि ॥

**तैलादौ ॥ १ । ४ । ९३ ॥**

तैलादौ यथादर्शनमन्त्यस्यानन्त्यस्य व्यञ्जनस्य द्वित्वं भवति । पृथक्त्वान्नित्यम् । तैलप्रियः । तेल्लप्पिओ । मण्डूकः । मण्डुक्को । इत्यादि । तैलादि—तैलव्रीडाप्रेमस्रोतःप्रभूतमण्डूकयौवनऋजुविचैं[3]किल । इत्यादि ॥

**पूर्वमुपरि वर्गस्य[4] युजः ॥ १ । ४ ।९४ ॥**

वर्गसंबन्धिनो युग्वर्णस्य शेषस्यादेशस्य वा द्वित्वप्रसङ्गे[5] उपरि पूर्वाक्षरं स्यात् । वर्गाणां द्वितीयस्योपरि प्रथमं चतुर्थस्योपरि तृतीयमिति चेदितव्यम् । रुक्खो । विग्घो[6] । लच्छी । णिज्झरो । णिट्ठुलो[7] । इत्यादि बोध्यम्[8] ॥

**प्राक् श्लाघाप्लक्षशार्ङ्गे ङ्लोत् ॥ १ । ४ । ९५ ॥**

श्लाघादिषु ङ्लः ङकारलकारयोः प्रागत्[9] स्यात् । श्लाघायुतः । सलाहाजुओ । प्लक्षः । पलक्खो । क्षस्य खः । शार्ङ्गधरः । सारङ्गहरो ॥

**क्ष्मारत्नेन्त्यहलः ॥ १ । ४ । ९६ ॥**

'प्राक्' इत्यनुवर्तते । 'अत्' इति च । अनयोर्युक्तस्यान्त्यहलः[10] प्रागत् स्यात् । रत्नाकरः । रअणाअरो । क्ष्माधरः । छमाहरो[11] । अत्र 'उत्सवऋक्ष—' इत्यतः 'छः' इत्यनुवर्तते ॥

---

१ इल् M. २ मृदुत्व for मातृक M. ३ विचिकिल M. ४ वर्गयुजः M. ५ द्वित्वम् । प्रसङ्गे सति उपरि &c. M. ६ दिग्घो M. ७ M. drops णिट्ठुलो. ८ बोद्धव्यम् M. ९ प्रागत् अकारो भवति M. १० अनयोरुक्तस्या° M. ११ छमूहरो M.

क्ष्मायां कौ ॥ १ । ४ । २० ॥

भूवाचकक्ष्माशब्दे क्ष्मस्य छः स्यात् । अत्र यो भूवाचको मुख्यः क्ष्माशब्दः यश्च 'क्ष्मारत्नेन्त्यहलः' इत्यनेन युक्तयोर्मध्ये अकारविधाने लाक्षणिको भूवाचकः क्ष्माशब्दस्तयोर्द्वयोरपि ग्रहणम् । तेनोभयत्रापि छः ॥

स्नेहाग्योर्वा ॥ १ । ४ । ९७ ॥

अनयोर्युक्तस्यान्त्यहलः प्रागत्वं वा । सणेहो । पक्षे 'कग—' इति सलोपे । णेहो । अग्निवर्णः । अगणिवण्णो । पक्षे । 'मनयाम्' इति न लोपे । अग्गिवण्णो ॥

र्शर्षवज्रतप्तेष्वित् ॥ १ । ४ । ९८ ॥

र्शर्ष एतयोः वज्रतप्तशब्दयोश्च युक्तस्यान्त्यहलः प्रागित्वं वा । आदर्शः । आअरिसो । पक्षे । 'लवराम्—' इति रेफलोपे 'शोर्लुस—' इति दीर्घः । आआसो । आदर्शः । दरिसो । दासो । इत्यादि । र्षे । वर्षजः । वरिसओ । वासओ । अत्र 'शोर्लुस—' इति दीर्घः । तप्तः । तविओ । तत्तो । वज्रधरः । वइअहरो । अत्र जलोपः । वज्जहरो । नात्र जलोपः ॥

हर्षामर्षश्रीह्रीक्रियापरामर्शकृत्स्नादिष्वार्हे ॥ १ । ४ । ९९ ॥

हर्षादिषु युक्तस्य र्हे इत्यत्रान्त्यहलः प्रागित्वं स्यात् । पृथक्त्वान्नित्यम् । हरिसो । अमरिसो । श्रीधरः । सिरिहरो । तत्र 'क्विपः' इतीकारस्य ह्रस्वः । ह्रीयुतः । हिरिजुओ । क्रियापरः । किरिआवरो । परामर्शः । परामरिसो । कृत्स्नः । कसिणो । अत्र 'कग—' इति तलोपः । 'ऋतोत्' इत्यत्वं च । र्हे । वर्हधरः । वरिहहरो । इत्यादि ॥

स्याद्भव्यचैत्यचौर्यसमे यात् ॥ १ । ४ । १०० ॥

एषु चौर्यसमेषु संयुक्तस्य यकारात् प्रागित्वं स्यात् । स्याद्वादः ।

१ तप्तवज्रशब्दयो° M. २ दृष्टार्हे My. ३ इत्यत्रान्त्य° M. ४ अत्र M. ५ लोपः My. ६ इत्यमनुवर्तते is in M. before this.

सिआवाओ । भव्यः । भविओ । चैत्यपरः । चेइअपरो । अत्रैकारस्य एकारस्तयलोपश्च । चौर्यकुशलः । चोरिअकुसलो । चौर्यशब्दस्याञ्जल्यादिपाठाद्वा स्त्रीलिङ्गतायां चोरिआकुसलो इत्यपि । चौर्यसमास्तु—चौर्यैश्वर्यधैर्यगाम्भीर्यभार्यासौन्दर्यब्रह्मचर्यसूर्यशौर्यवीर्यवर्यचर्याचार्यपर्यङ्काः । चौर्यादिराकृतिगणः ॥

लादक्लीबेषु ॥ १ । ४ । १०१ ॥

संयुक्तस्य लात् प्रागित्वं स्यात्[1] क्लीबप्रकारेषु वर्जयित्वा[2] । क्लिष्टवासः । किलिट्ठवासो । क्लान्तमुखः । किलन्तमुहो । अत्र 'संयोगे' इति लकारस्याकारस्य ह्रस्वः । प्लुष्टवापः । पिलुट्ठवापो । प्लोषः । पिलोसो । श्लेषः । सिलेसो । शुक्लक्लेदक्लिन्नक्लेशम्लानेत्यादि । 'अक्लीबेषु' इति किम् । क्लीवः । कीओ । विक्लवः । विक्कओ । क्लमः । कमो । प्लवः । पवो । विप्लवः । विप्पवो । शुक्लपक्षः । सुक्कपक्खो[3] । उभयं तिङन्तेपि समानम् ॥

नात्स्वप्ने ॥ १ । ४ । १०२ ॥

स्वप्ने[4] नात् प्रागित्वं स्यात् । इतीत्वे । 'पो वः' इति पस्य वत्वे च वबयोरभेदन्यायात् 'बो मः शबरे' इत्यधिकृत्य

नीवीस्वप्ने वा ॥ १ । ३ । ८५ ॥

अनयोर्वस्य मो वा स्यात् । 'स्वप्नादाविल्' इत्यस्य इत्वे । सिमिणो । पक्षे । सिविणो ॥

स्निग्धे त्वदितौ ॥ १ । ४ । १०३ ॥

अत्र नात् प्रागित्वमत्वं च वा स्यात्[7] । सिणिद्धो । सणिद्धो । पक्षे 'कग—' इति सलोपे । णिद्धो ॥

कृष्णे वर्णे ॥ १ । ४ । १०४ ॥

---

१ भवति M. २ न भवति for वर्जयित्वा M. ३ सुक्खपक्खो My. ४ M. has इत्वमनुवर्तते before this. ५ M. has इति वस्य मत्वे before it. ६ M. has नादित्यनुवर्तते. ७ प्रागत्वमित्वं च वा स्यात् M.

वर्णवाचिनि[1] कृष्णशब्दे[2] नात् प्रागदितौ वा स्तः[3] । कसिणो । कसणो[4] । पक्षे 'श्नष्ण—' इत्यादिना ष्णस्य ण्हः । कण्हो । 'वर्णे' इति किम् । कण्हो । विण्हुः । 'अर्हत्सुच—' इत्यतः 'उ' इत्यधिकृत्य[5]

**स्नुघ्ने रात् ॥ १ । ४ । १०७ ॥**

अत्र रात् प्रागुत्वं स्यात्[6] । 'मनयाम्' इति नलोपः । सुरुग्घो । स्रुघ्नं नगरम्[7] ॥

**वा च्छद्मपद्ममूर्खद्वारे ॥ १ । ४ । १०९ ॥**

एषु[8] स्तोरन्त्यहलः प्रागुत्वं वा स्यात् । छद्मपरः । छउमपरो । पद्ममुखः । पउममुहो । पक्षे । 'कग—' इति दलोपे मकारे शिष्टे[9] सति । 'ओदाल्यां पङ्क्तौ' इत्यतः 'ओत्' इत्यधिकृत्य[10]

**पद्मे मि ॥ १ । २ । ३१ ॥**

पद्मे आदेरत ओत्वं स्यान्मकारे[11] परे[12] सति[13] । पोम्मुहो मूर्खः[14] । मुरुक्खो । अत्रादावेव 'संयोगे' इति ह्रस्वः पश्चादुत्वम्[15] ॥

**ईल्ज्यायाम् ॥ १ । ४ । ११० ॥**

अत्रान्त्यहलः प्रागीत्वं लित् स्यात् । ज्यावरः[16] । जीआवरो । 'ह्रश्च महाराष्ट्रे ह्रोर्व्यत्ययः' इत्यतः 'व्यत्ययः' इत्यधिकृत्य[17]

**लनोरालाने ॥ १ । ४ । ११२ ॥**

'स्तोः' इति निवृत्तम् । अत्र लकारनकारयोर्व्यत्ययः स्यात् । आणालो ॥

---

१ M. has अदितौ नादिति चानुवर्तते । २ °वाचककृष्ण° M. ३ प्रागत्वमित्वं च वा भवतः M. ४ कसणो । कसिणो M. ५ इत्यधिकृत्य M. ६ भवति M. ७ M. drops स्रुघ्नं नगरम्. ८ M. has उत्वमनुवर्तते । 'क्ष्मारत्न–' इत्यतः 'अन्त्यहल.' इत्यनुवर्तते । befoıe this. ९ मकारेवशिष्टे M. १० इत्यधिकृत्य M. ११ भवति for स्यात् M. १२ M. drops परे. १३ M. has इत्योत्वे after सति । १४ M. drops मूर्खः । मुरुक्खो. १५ M. has द्वार । दुवारं after this. १६ ज्यापरः । R. १७ इत्यधिकृत्य M.

**चलयोरचलपुरे ॥ १ । ४ । ११६ ॥**

'व्यत्ययः' इत्यनुवर्तते । अचलपुरशब्दे चलयोर्व्यत्ययः स्यात् । अचलपुरधर्मः । अलअपुरधम्मो ॥

**ह्ये ह्योर्वा ॥ १ । ४ । ११७ ॥**

ह्यशब्दे हकारयकारयोर्व्यत्ययो वा स्यात् । सह्यः । सय्हो । पक्षे । सज्झो । इत्यादि ॥

**[1]लघुके ल्होः ॥ १ । ४ । ११८ ॥**

'[2]लघुकशब्दे घस्य हत्वे [3][4]लकारहकारयो[5]र्व्यत्ययो वा स्यात् । हलुओ । पक्षे । लहुओ । घस्य व्यत्यये कृते पदादित्वाद्धत्वं न भवतीति हकरणम् ॥

**रलोर्हरिताले ॥ १ । ४ । ११९ ॥**

अत्र रलोर्व्यत्ययः स्यात् । हलिआरो ॥

**दर्वीकरनिवहौ दव्विरअणिह्वौ तु ॥ १ । ४ । १२० ॥**

दर्वीकरनिवहशब्दौ यथासंख्यं दव्विरअणिह्वौ तु भवतः । दव्वि-रओ । णिह्वो ॥ सज्जन सु इति स्थिते 'लोपः' इत्यधिकृत्य

**अन्त्यहलोश्रदुदि ॥ १ । १ । २५ ॥**

शब्देष्वन्त्यहलोन्त्यव्यञ्जनस्य लोपः स्याच्छ्रुदित्यव्ययमुदित्युपसर्गं च वर्जयित्वा । इति सज्जनशब्दस्य समासत्वात् समासे पदविभक्त्यपेक्षया वाक्यविभक्त्यपेक्षया चान्त्यत्वमनन्त्यत्वं च भवतीति न्यायेन यदा पदविभक्तिस्तदा तलोपे सजणो । यदा वाक्यविभक्तिस्तदा [6]लोपाभावे सज्जणो । एवं तद्गुणादयः ॥

**निर्दुरि वा ॥ १ । १ । २६ ॥**

निर् दुर् इत्येतयोरुपसर्गयोरन्त्यहलो लोपो वा स्यात् । निस्सहः ।

---

१ °घु° R. २ M. has लघुशब्दे घस्य हत्वे before it. ३ M. drops लघुकशब्दे घस्य हत्वे. ४ अत्र लहयोः for लकारहकारयोः M. ५ वा व्यत्ययः M. ६ तलोपाभावे M.

णिसहो । लोपाभावे । णिस्सहो । अत्रैव 'लवराम्—' इति रेफलोपे 'शोर्ष्स–' इति दीर्घे । णीसहो । एवं निर्घोषादयः । दुःसहः । दुसहो । दुस्सहो । दुःखितः । दुहिओ । 'दोदोनुस्साहोत्सन्नऊच्छसि' इत्यतः 'ऊत्' इत्यधिकृत्य

दुरो रलुकि तु ॥ १ । २ । ६३ ॥

दुरित्युपसर्गस्य रलुकि रेफलोपे सत्यादेरुत ऊद्वा स्यात् इत्यूकारः । दूसहो । दूहिओ । यदा लोपाभावस्तदा । दुःसहो ॥

अन्तरि च नाचि ॥ १ । १ । २७ ॥

अन्तर् शब्दे चैकारान्निर्दुरोश्चाचि परे लोपो न स्यात् । अन्तरात्मा । अन्तरप्पा । निरन्तरः । णिरन्तरो । निरवशेषः । णिरवसेसो । निरवगाहः । णिरवगाहो । दुरुत्तरः । दुरुत्तरो । क्वचिदन्ता उपरि इति च दृश्यते । बिन्दुल्' इत्यधिकृत्य

हलि ङञणनानाम् ॥ १ । १ । ४१ ॥

'अन्त्यहलः' इति निवृत्तम् । एषां हलि व्यञ्जने परे बिन्दुः स्यात् । पराङ्मुखः । परंमुहो । 'स्वरस्य बिन्दुमि' इति ह्रस्वः । कञ्चुकः । कंचुओ । इत्यादि ॥

स्वरेभ्यो वक्रादौ ॥ १ । १ । ४२ ॥

वक्रादिषु यथादर्शनं प्रथमादिभ्यः स्वरेभ्यः परो बिन्दुर्भवति । अत्र गणत्रयम् । वक्रादिगणः । मनस्विन्यादिगणः । उपर्यादिगणः । तत्र वक्रादिः । वक्र । कुड्मल । गुंच्छ । पुच्छ । त्र्यस्र । गृष्टि । कर्कोटक । दर्शन । पशु । स्पर्श । स्पशुन्धमार्जारवृश्चिकमूर्धा प्रथमात् । मनस्विन्यादिः—मनस्विनीप्रतिश्रुन्मनःशिलावयस्यानां द्विती-

---

१ Ms. omits दुसहो. २ M. omits दुःसहो. ३ दूहिओ M. ४ M. has इत्यादि after it. ५ वर्णि M. ६ गर्भि M. ७ कमु-कम् Ms. ८ 'नस्य M. ९ M. drops वक्र. १० गुच्छ । पुच्छ । M. ११ स्पर्श for स्पर्श M.

यात् । उपर्यतिमुक्तामुक्तकेत्यादीनां तृतीयात् । वंकः । वंको । कुंद्मलः । कुंपलो । अत्र 'ड्मनोः' इति पैः । गुच्छः । गुंछो । पुच्छः । पुंछो । बुघ्नः । बुंधो । कर्कोटकः । कंकोडओ । अत्र

टो डः ॥ १ । ३ । ३१ ॥

असंयुक्तस्यानादौ वर्तमानस्याचः परस्य टस्य डः स्यात् । इति डः । मार्जारः । मांजारो । क्वचिन्मजारो इति च दृश्यते । विंचुओ । अत्र

श्चेर्वृश्चिके श्चुर्वा ॥ १ । ४ । १८ ॥

अत्र श्चि इत्यस्य ञ्चु इत्यादेशो वा स्यात् । आदेशाभावे 'थ्यश्च—' इत्यादिना च्छः । 'इत्कृपणे' इतीत्वम् । विंछुओ । क्वचिच्छन्दःपूरणेपि बिन्दुः । देवंणाअसुवत्तो । देवनागसुवक्त्रः । 'ङे तु किंशुके' इत्यधिकृत्य 'बिन्दुलू' इति च

वर्गेन्त्यः ॥ १ । १ । ४७ ॥

बिन्दोर्वर्ग्ये परे मत्यासन्नो यो वर्ग्यस्तस्यैवान्त्यो वा स्यात् । वङ्को । कुम्पलो । बुन्धो । इत्याद्यपि । अत्र बिन्दोर्वर्गान्तादेशो नित्य इति केचित् । मनस्विन्यादिः । वअंसो । वअस्यः ॥

लुङ् मांसादौ ॥ १ । १ । ४४ ॥

'बिन्दुलू' इत्येतस्य षष्ठ्यन्तविपरिणामः । 'क्त्वासुपोस्तु सुणात्' इत्यतः 'तु' इति चाधिकृत्य । बिन्दोर्मांसादिषु लुग्वा स्यात् । मांसविकारः । मांसविआरो । मांसलः । मासलो । कांस्यविकारः । कासविआरो । एषु सर्वेषु 'आचार्ये चो ह्रश्च' इत्यतः 'ह्रः' इत्यधिकृत्य

स्वरस्य बिन्द्वमि ॥ १ । २ । ३९ ॥

१ M. has वक्को । वक्रः. २ कुंपलो । कुड्मलः । M. ३ °रिति ड्मस्य पः M. ४ विंछुवो My. ५ देवं ण्णाअ° My. ६ M. has अनुवर्तते after इति च. ७ वर्गान्त्यादेशो My. ८ मांसादौ M. ९ इत्यस्य M. १० इत्यधिकृत्य M. ११ M. has मासविआरो after मांसविआरो. १२ M. has मांसलो after it. १३ M. has कंसविआरो after it. १४ इत्यधिकृत्य M.

अमि द्वितीयैकवचने बिन्दौ च परे स्वरस्य ह्रस्वः स्यात्[1] । मंसलो[2] । मंसविआरो । इत्यादि[3] । मांसादि—मांस । मांसल । पांसु[4] । कांस्य । कथम् । इदानीम् । तदानीम्[5] । किं करोमि । संमुखम् । नूनम् । एवम् । इत्यादि ॥

संस्कृतसंस्कारे ॥ १ । १ । ४५ ॥

'लुक्'[6] अनुवर्तते । 'बिन्दोः' इति च । अनयोर्बिन्दोर्लुक् स्यात् । संस्कृतः । संकओ[7] । संस्कारः । सक्कारो ॥

डे तु किंशुके ॥ १ । १ । ४६ ॥

'बिन्दोः' इत्यनुवर्तते । अत्र बिन्दोर्डानुबन्ध एकारो वा स्यात्[8] ॥ केसुओ । किंसुओ ॥

विंशतिषु त्वा श्लोपल् ॥ १ । १ । ४८ ॥

विंशतिप्रकारेषु ति इत्यक्षरेण सह बिन्दोर्लोपः स्यात् । शित्वात् पूर्वस्य दीर्घः । इति विंशतिगणपठिते सिंहशब्दे बिन्दोः श्लोपलि पूर्वस्य दीर्घे । सीहो । सिंघो इत्यपि[9] नास्ति दृश्यते । सिंघदत्तो । सिंघराओ । अत्र लित्वाद्बिन्दोर्लोपे 'नित्येपि दृश्यते' इत्युक्त्या लोपाभावः । तथा च 'हस्य घो बिन्दोः' इत्यनेन सूत्रेण बिन्दोः परस्य हस्य घः सिद्धः । विंशत्यादि–विंशति । त्रिंशत् । दंष्ट्रा । सिंह । इत्यादि । 'क्षमदामशिरोनभो नरि' इत्यतः 'नरि' इत्यधिकृत्य[10]

अक्ष्यर्थकुलाद्या वा ॥ १ । १ । ५१ ॥

अक्षिपर्यायाः कुलादयश्च नरि पुंलिङ्गे वा प्रयोक्तव्याः । लोअणो । लोअणं । णअणो[11] । णअणं । कुलादि–कुलो । कुलं । वअणो । वअणं[12] । कुलवचनमाहात्म्यात् दुःसमाजनविशुद्ध्यन्द इत्यादि ॥

---

१ भवति M. २ मंसविआरो । मंसलो । M. ३ इत्याद्यपि भवति M. ४ पास्य । पांसु । M ५ M. drops तदानीम् ६ लुगित्यनुवर्तते M. ७ संस्कारः । सक्कओ । M. ८ भवति M. ९ इति च for इत्यपि नास्ति M. १० इत्यधिकृत्य M. ११ My. drops the portion from णअणो to वअणं. १२ M. has इत्यादि after वअणं.

**क्लीबे गुणगाः ॥ १ । १ । ५२ ॥**

'वा' इत्यनुवर्तते । गुणादयः शब्दाः नपुंसके वा प्रयोक्तव्याः । गुणो । गुणं । मंडलग्गो । मंडलग्गं । गुणादि—गुण । देव । मंडलाग्र । खड्ग । कण्ठे । बिन्दु । कररुह । वृक्ष । इत्यादि । पृष्ठशब्दे

**'स्त्रियामिमाञ्जलिगाः ॥ १ । १ । ५३ ॥**

[२]ईमान्ता अञ्जल्यादयश्च शब्दाः स्त्रीलिङ्गे वा प्रयोक्तव्याः । इत्यञ्जल्यादिपाठात् स्त्रीलिङ्गेपि प्रयोगः । पिट्ठी[३] । पिट्ठं । अत्र 'इल्कृपगे' इत्यतः[४] 'इल्' इत्यधिकृत्य 'शृङ्गमृगाङ्कमृत्युदष्टमसृणेषु वा' इत्यतः 'वा' इति 'ऋतोत्'[५] इत्यतः 'ऋतः' इति च

**पृष्ठेनुत्तरपदे ॥ १ । २ । ७८ ॥**

पृष्ठशब्देनुत्तरपदे ऋत इत्वं वा स्यात् । पक्षे 'ऋतोत्' इत्यत्वम् । इत्वं स्त्रियामेवेत्येके । 'अनुत्तरपदे' इति किम् । महिपट्ठं । अञ्जल्यादि—अञ्जलि । बलि । निधि । प्रश्न । रश्मि । अक्षि । ग्रन्थि । विधि । कुक्षि । चौर्य । पृष्ठ । इत्यादि । इमान्ता इत्यत्र 'पृथ्वादिभ्य इमनिज्वा' इति य इमनिच् यश्च 'त्वस तु डिमात्तणौ' इति त्वप्रत्ययादेश इमनिच् तयोर्द्वयोरपि तन्त्रेण ग्रहणम् । तेनोभयोरपि विकल्पेन स्त्रीत्वम् । त्वादेशस्य नित्यं स्त्रीत्वमेवेच्छन्त्येके[६] ॥

**निष्प्रत्योरोत्परी माल्यस्थोर्वा ॥ १ । २ । १ ॥**

निर् प्रति इत्येतावुपसर्गौ माल्यशब्दे स्थाधातौ च परे ओ परि इत्येतद्रूपौ यथासंख्यं वा स्तः[७] । निर्माल्यम् । ओमल्लं । णिम्मल्लं । प्रतिष्ठितः । परिट्ठिओ । पइट्ठिओ ॥

**आदेः ॥ १ । २ । २ ॥**

'आदेः' इत्यधिकारः 'यमस्तोरखोरचः' इति सूत्रात् प्रागेव वेदितव्यः ॥

---

१ कन्द M. २ M. has 'वा' इत्यनुवर्तते before it. ३ पिटी My. ४ इत्यधिकृत्य M. ५ 'ऋतोत्' इति च M. ६ °मेवेत्येके M. ७ भवतः M.

**शोर्लुप्तयवरशोर्दिः ॥ १ । २ । ८ ॥**

यवरशपसानां लोपे येवशिष्टाः शषसास्तेषामादेरचो दीर्घः स्यात् । कश्यपः । [1]कासवो । अश्वः । आसो । विश्रमः । वीसमो । दुःशासनः । दूसासणो । शिष्यः । सीसो । कर्षकः । कासओ । वर्षः । वासो । पस्य लोपे । निष्पिक्तः । णीसित्तो । कृतसस्यः । कअसासो । विकस्वरः । विआसरो । उस्रः । ऊसो । विस्रम्भः । वीसंभो । निःसहः । णीसहो । एवं तिङन्तेप्यूह्यम् ॥ 'शोर्लुप्तयवरशोर्दिः' इत्यतः 'दिः' इत्यधिकृत्य 'हे दक्षिणेस्य' इत्यतः 'अस्य' इति च

**तु समृद्ध्यादौ ॥ १ । २ । १० ॥**

समृद्ध्यादिष्वादेरवर्णस्य वा दीर्घः स्यात् । पासुत्तो । पसुत्तो । प्रसुप्तः । आफंसो । अफंसो । अस्पर्शः । अत्र 'ष्पस्पोः—' इति फत्वम् । वक्रादित्वाद्बिन्दुः । पारोहो परोहो । प्ररोहः । समृद्ध्यादि—समृद्धि । [2]प्रतिसिद्धि । प्रतिपद् । प्रवासी । अभिजाति । प्रकृत । [3]प्रवचन । प्ररोह । परकीय । चतुरन्त । अस्पर्श । [4]प्रस्तुत । प्रकट । प्रसुप्त । सदृक्ष । मनस्विनी । इत्यादि ॥

**स्वप्नादाविल् ॥ १ । २ । ११ ॥**

[5]स्वप्नादिष्वादेरवर्णस्येत्वं लित् स्यात् । किविणो[6][7] । कृपणः । [8]अत्र 'इल्कृपगे' इति इः[9] । मिइंगो[10] । [11]अत्रापि कृपादित्वाद्दत इल् । वेतसः । वेडिसो । अत्र 'टो डः' इत्यतः 'डः' इत्यधिकृत्य

---

१ कासओ M. २ M. has after समृद्धि, प्रसिद्ध । सदृक्ष । मनस्विनी । प्रसुप्त । प्रतिस्पर्धि । and then प्रतिसिद्धि &c. ३ M. has प्रतिपिद्ध for प्रवचन । प्ररोह । ४ M. has प्रवचन । प्ररोह । इत्यादि for प्रस्तुत &c. up to मनस्विनी । ५ M. has अस्यलेन्नुवर्तते before it. ६ M. has स्वप्नः । सिविणो before it. ७ M. has कृपणः । किविणो । ८ M. has मृदङ्ग । मिइंगो before it. ९ उभयत्र कृत इत्वम् for इः । M. १० M. drops मिइंगो. ११ M. drops अत्रापि कृपादित्वाद्दत इल् ।

वेतस इति तोः ॥ १ । ३ । ३२ ॥

अत्र अत इत्वे सति तोर्डः स्यात् । इति डः । उच्चिमो ।[1] [2]स्मरः । सिमिणो । स्मरादि—स्मर। व्यजन । व्यलीक। कृपण। मृदङ्ग। ईषद् । वेतस । दत्तोत्तम । मरिच । इत्यादि । बहुलाधिकारात् णत्वमापन्ने दत्त-शब्दे इत्वम् । अन्यत्र दत्तं ॥

पक्काङ्गारललाटे तु ॥ १ । २ । १२ ॥

इल्लनुवर्तते । एष्वादेरवर्णस्येत्वं वा स्यात् । पक्कः । पिक्को । अ-ङ्गारः । इंगालो । इंगालो इत्यैत्र हरिद्रादिपाठाद्रेफस्य लत्वम् । तच्च बहुलाधिकारादित्वे कृते सत्येव । इत्वाभावे । अंगारो ॥

हरे त्वी ॥ १ । २ । १५ ॥

अत्रादेरत ईत्वं वा स्यात् । हीरो ॥

उल्ध्वनिगवयविष्वचि वः ॥ १ । २ । १६ ॥

एषु वकारसंबन्धिनोवर्णस्योत्वं लिद् भवति । गवयः । गउओ । अत्र 'प्रायो लुक्—' इति वैकारयकारयोर्लोपः ॥

स्तावकसास्ने ॥ १ । २ । १८ ॥

अनयोरादेरवर्णस्योत्वं लित् स्यात् । थुवओ । अत्र '[8]प्रायो लुक्—' इति कलोपः । 'स्तः' इति स्तस्य थत्वम् ॥

चण्ड[7]खण्डिते णा वा ॥ १ । २ । १९ ॥

'उल्' इत्यनुवर्तते । अनयोर्णकारेण सहादेरवर्णस्योत्वं वा स्यात् । [10]चूंडो । चंडो । खुडिओ । खंडिओ ॥

आसारे तु ॥ १ । २ । २२ ॥

---

१ M. has उत्तम । इत्यादि after it. २ M. drops स्मरः । सि-मिणो । ३ अत्र for इत्यत्र M. ४ M. drops लिद्. ५ यवकारयो° M. ६ M. drops 'प्रायो लुक्—' इति. ७ णा वा चण्डखण्डिते M. ८ उत्वमनु° T. ९ एतयो° T., M. १० चूदो । चंदो । M.

'आर्यायां र्यः श्वश्र्वाम्॒' इत्यतः 'ऊंल्' इत्यनुवर्तते । अत्रादेरवर्णस्य ऊत्वं वा स्यात् । ऊसारो । आसारो ॥

तोन्तर्येल् ॥ १ । २ । २३ ॥

अन्तर्शब्दे तकारसंबन्धिनोवर्णस्य एत्वं लित् स्यात् । अन्तःपुरवरः । अन्तेपुरवरो[1] । अन्तःसहवासः । अन्तेसहवासो । इत्यादि । कचिन्न भवति[2] । अन्तर्गतः । अन्तगओ ॥

पारावते तु फोः ॥ १ । २ । २४ ॥

'एँल्' अनुवर्तते । अत्र द्वितीयस्यास्य एत्वं वा स्यात् । पारेवओ । पारावओ ॥

उत्करवल्लीद्वारमात्रचि ॥ १ । २ । २५ ॥

'एँल्' अनुवर्तते । 'तु' इति च । एषु मात्रच्प्रत्यये चादेरवर्णस्य एत्वं वा स्यात् । उक्केरो । उक्करो ॥ 'ओदाल्यां पङ्क्तौ' इत्यतः 'ओत्' इत्यधिकृत्य

फोः परस्परनमस्कारे ॥ १ । २ । ३० ॥

परस्परनमस्कारे एतयोः फोः द्वितीयस्यावर्णस्य ओकारो भवति । परस्परविनयः । परोप्फरविणओ । णमोकारो ॥

त्वर्पौ ॥ १ । २ । ३२ ॥

'ओत्'[14] इत्यनुवर्तते । अर्पयतेर्धातोरादेरवर्णस्य ओत्वं[15] वा स्यात् । अर्पितः । ओप्पिओ । अप्पिओ ॥

---

१ ऊत्वमनुवर्तते T. २ °रत T. ३ °उरवरो M. ४ संभवति M. ५ एत्वमनु° T. ६ °यस्यावर्णस्य M.; T. drops अस्य. ७ एत्वमनु° T. ८ इत्यधिकृत्य M. ९ P., My., and R. drop परस्परनमस्कारे. १० द्वितीयावर्णस्य P., My., R. ११ ओकारः स्यात् P., My., R. १२ परोप्पर° M. १३ T. has नमस्कारः before it. १४ ओत्वमनु° T. १५ ओत्वं तु भवति M.; ओत्वं भवति तु T.

**ईल्खल्वाटस्त्यान आतः ॥ १ । २ । ३३ ॥**

अनयोरात ईत्वं स्यात्[1] । खल्लीडो[2] । अत्र 'टो डः' इति डः । वलोपद्वित्वे ॥

**इत्तु सदादौ ॥ १ । २ । ३४ ॥**

सदा इत्यादिषु आदेरा[3]कारस्य इत्वं वा स्यात् । कुप्पिसो । कुप्पासो । उभयत्रापि 'संयोगे' इति ह्रस्वः । कूर्पासः । नात्र ह्रस्वे कृते 'स्तौ' इत्युत ओत्वम् । बहुलाधिकारादुतो लाक्षणिकत्वाद्वा । णिसि[4]अरो । णिसाअरो । निशाकरः । सदादि—सदा । कूर्पास । निशाकर । इत्यादि ॥

**आचार्ये चो ह्रश्च ॥ १ । २ । ३५ ॥**

'आतः' इत्यनुवर्तते । 'इत्' इति च । अत्र चकारसंबन्धिन आकारस्य ह्रस्वो वा स्यात्[5] । चकारात् पक्षे तस्यैवेकारश्च । इत्याकारस्य ह्रस्वपक्षे चलोपे । आअर्य । आइर्य[6] । ह्रस्वाभावे । आआर्य इति स्थिते । 'स्याद्भव्यचैत्यचौर्यसमे यात्' इत्यनेन चौर्यसमाचार्यशब्दे[7]स्य संयुक्तयकारात्प्रागित्वे[8] । आअरिओ । आइरिओ । आआरिओ[9] ॥

**न वाव्ययोत्खातादौ ॥ १ । २ । ३७ ॥**

अव्यये उत्खातादौ च आदेराकारस्य विकल्पेन ह्रस्वो भवति । उत्खातः । उक्खओ[10] । उक्खाओ । कुमरो[11] । कुमारो । चमरो[12] । चामरो । कलओ[13] । कलाओ । कलादः । स्वर्णकारः । हलिओ[14] । हलिओ । हालिकः । इत्यादि । उत्खातादि—उत्खात । कुमार । वलाका । प्राकृत । चामर । कलाद । हालिक । नाराच । तालपुट[15] ।

---

१ लित् स्यात्. २. खल्लेडो M. ३ °रात T. ४ णिसिआरो । णिसाआरो । M. ५ भवति M., T. ६ T. has इत्वे before आइर्य. ७ °शब्दे T., M. ८ प्रागित्वम् M. ९ M. drops आआरिओ. १० उक्खाओ । उक्खओ । M. ११ कुमारो । कुमरो । M. १२ चामरो । चमरो । M. १३ कलादः । कलओ । कलाओ । M. १४ हालिकः । हालिओ । हलिओ । M. १५ M. has पूर्वांश and T. संस्थापित for तालपुट.

तालवृन्त । स्थापित[1] । संस्थापित[2] । प्रस्थापित[3] । इत्यादि । स्थापित[4]-प्रस्थापित[5]संस्थापितेषु[6] 'स्थष्ठकुकुरौ[7]' इत्यतः[8] 'ष्ठः' इत्यधिकृत्य

**निरप्पढकठाचिट्ठाः ॥ २ । ४ । १२७ ॥**

स्थः[9] तिष्ठतेः निरप्पढकठाचिट्ठ इति चत्वार आदेशा भवन्ति । इति ठादेशे । ठविओ । ठाविओ । संठविओ । संठाविओ । पट्ठविओ[10] । पट्ठाविओ । इति सिद्धम् ॥

**घञि वा ॥ १ । २ । ३८ ॥**

'ह्रः' इत्यनुवर्तते । 'आतः' इति च । घञि निमित्ते यो वृद्धिरूप आकारस्तस्यादिभूतस्य ह्रस्वो वा स्यात् । पवहो[11] । पवाहो । प्रवाहः । पहरो[12] । पहारो । प्रहारः ॥ पअरो[13] । पआरो । प्रकारः । इत्यादि । क्वचिन्न भवति । रागः । राओ । भागः । भाओ ॥

**संयोगे ॥ १ । २ । ४० ॥**

'ह्रस्वः' इत्यनुवर्तते । संयोगे परे पूर्वस्य ह्रस्वो भवति । आम्रः । अम्बो[14] । अमात्यः । अमच्चो । मुनीन्द्रः । मुणिंदो । पूर्वः । पुव्वो । नरेन्द्रः । णरिन्दो । अधरोष्ठः । अहरुट्ठो । अत्रानुक्तन्यायेन 'एच इग्घस्वादेशे' इति[15] एदोतोरिकारोकारौ । एदोतोः क्वचित् स्वरूपेण ह्रस्वः । एकः । एक्को । स्तोकः । थोक्को । इत्यादि ॥

---

### अथेकारस्यादेशाः ॥

**त्वेदितः ॥ १ । २ । ४१ ॥**

---

१ M. drops स्थापित and T. has प्रस्थापित for स्थापित. २ R. and T. drop संस्थापित. ३ T. has स्तादिर in place of प्रस्थापित. ४ संस्थापित for स्थापित M. ५ M. has स्थापित for प्रस्थापित. ६ संस्थापितशब्देषु M. ७ °कुक्कुरौ M. ८ इत्यधिकृत्य M. ९ स्थाधातोः M. for स्थः तिष्ठतेः. १० पंठाविओ P.; R. drops पट्ठविओ. ११ प्रवाहः । पवहः । पवाहः ॥ M.; T. १२ पहारः । पहरो । प्रहारो । M., T. १३ प्रकारः । पअरो । पआरो । M. १४ अम्मो M., T. १५ इतीत्वे M.

'संयोगे' इत्यनुवर्तते । आदेरिकारस्य युक्ते परे एत्वं तु भवति । धम्मिलधरः । धम्मेल्लहरो । धम्मिल्लहरो । इत्यादि ॥

**मूषिकबिभीतकहरिद्रापथिपृथिवीप्रतिश्रुत्यत् ॥ १ । २ । ४३ ॥**

'इतः' इत्यनुवर्तते । एष्वादेरिकारस्याकारः स्यात् । मूसओ । बिभीतक शब्दे इतः अत्वे भस्य हत्वे 'ईतः काश्मीरहरीतक्योर्लेः' ईत्यतः 'ईतः' इत्यधिकृत्य

**एल्पीडनीडकीदृशपीयूषबिभीतकेद्दशापीडे ॥ १ । २ । ५७ ॥**

पीडादिष्वादेरीकारस्य एत्वं लित् स्यात् । लित्वान्नित्यम् । इत्येत्वे । 'प्रतिगेप्रतीपगे' इति मत्यादिपाठात् तस्य डकारः । वहेडओ ।

**वेङ्गुदशिथिलयोः ॥ १ । २ । ४६ ॥**

'इतः' इत्यनुवर्तते । 'अत्' इति च । इङ्गुदशिथिलयोरादेरितः अत्वं वा स्यात् । इङ्गुदरसः । अंगुअरसो । इंगुअरसो । शिथिलः । सढिलो । सिढिलो । अत्र 'प्रथमशिथिल—'इत्यादिना तोढत्वम् ।

**णिम्माणं णिम्मिअं ॥ १ । २ । ४७ ॥**

इत्येतौ निर्मातृनिर्मिताभ्यां भविष्यतः ।

**उ युधिष्ठिरे ॥ १ । २ । ४८ ॥**

'त्वेदितः' इत्यतः 'तु' 'इतः' इति चानुवर्तते । असिन्नादेरित उत्वं वा स्यात् । जत्वहत्वषलोपद्वित्वानि । मुकुरादिपाठादुत अत्वं हरिद्रादित्वाल्लत्वं च । जहुट्ठिलो । जहिट्ठिलो ॥

**द्विनीक्षुभवासिषु ॥ १ । २ । ४९ ॥**

'उत्' इत्यनुवर्तते । द्विशब्दे नीत्युपसर्गे इक्षुभवासिशब्दयोश्चादेरित उत्वं भवति । पृथग्योगान्नित्यम् । द्विगुणः । दुउणो । अत्र गलोपः । क्वचिन्न भवति । निपतति । णिपडइ ॥

---

१ 'रितो M. २ इत्यधिकृत्य M. ३ After this M. notices also this addition—निर्मेणिम्मवणिम्माणौ इत्युत्तरत्र निपातप्रकरणे निरूपयिष्यते तौ च निर्मितनिर्माणेत्याकारकसंस्कृतरूपतुल्ययोगक्षेमावित्यर्थः ॥ ४ उत्वमनुवर्तते । R., T.; उ इत्यनुवर्तते । M. ५ क्वचिन्नित्यं न भवति । M.

तु निर्झरद्विधाकृञोरोत्वा ॥ १ । २ । ५० ॥

'इतः' इत्यनुवर्तते । अनयोरादेरितो ना नकारेण सहौकारो वा स्यात् । ओझरो । पक्षे । णिज्झरो । दोहाइओ । द्विधाकृतः । अत्र व-लोपहृत्वतलोपाः । कृपादित्वाद्दत इत्वं कलोपेश्च । पक्षे 'द्विनीक्षुप्रवासिषु' इत्युत्वम् । दुहाइओ । 'कृञः' इति किम् । द्विधागतः । दिहागओ॥ 'ईतः काश्मीरहरीतक्योर्लौ' ईत्यतः 'ईतः' इत्यधिकृत्य

गभीरग इत् ॥ १ । २ । ५२ ॥

गभीरादिष्वादेरीकारस्येत्वं भवति । गहिरो । गभीरः । सिरिसो । शिरीषः । आणिओ । आनीतः । स्त्रियामीकारोपि दृश्यते । आणीदा भुवणब्भुदेकजणणी जोईसरेणामुणो । आनीता भुवनाद्भुतैकजननी योगीश्वरेणामुना । अयं कर्पूरमञ्जर्यामन्तिमचरणः । गहिओ । गृहीतः । विळिओ । व्रीडितः । अत्र वडिशादिपाठाड्डस्य ळत्वम् । प्रदीपितः । पळीविओ । अत्र 'पो वैः' इति पस्य वत्वम् । 'दोहदप्रदीप—' इत्यादिना दस्य ळत्वम् । तइओ । तृतीयः । अत्र 'ऋतोत्' इति ऋतोत्वं तैयलोपश्च । वम्मिओ । वल्मीकः । इत्यादि । गम्भीरादि—गभीर । शिरीष । आनीत । गृहीत । व्रीडित । प्रदीपित । तृतीय । जीवत् । अवसीदत् । प्रसीद । वल्मीक । तैदानीम् ॥

वा पानीयगे ॥ १ । २ । ५३ ॥

ईतः' इत्यनुवर्तते । 'इत्' इति च । पानीयादिष्वादेरीकारस्येत्वं वा स्यात् । पानीयगुणः । पाणिअगुणो । करीषदहनः । करिसदहणो । इत्यादि । पक्षे दीर्घ एव । पानीयादि—पानीय । द्वितीय । अलीक । करीष । उपनीत । जीवति ॥

उल् जीर्णे ॥ १ । २ । ५४ ॥

---

१ कलोपः । P., My., R. २ इत्यधिकृत्य M. ३ My., P., and M. omit पो वः । ४ M. has तलोपश्च. ५ T. has इत्यादि for तदानीम्. ६ M. has ईषद् after जीवति.

'ईतः' इत्यनुवर्तते । अत्र ईत उत्वं लित् स्यात् । जीर्णः । जुण्णो । क्वचिन्न भवति । जिण्णे भोअणमेत्ते । जीर्णे भोजनमात्रे । अत्र 'उत्करवल्ली—' इत्यादिना मात्रचोस्य एत्वम् । 'तीर्थे ह्लूत्' इत्यतः 'ऊत्' इत्यधिकृत्य

**विहीनहीने वा ॥ १ । २ । ४६ ॥**

'ईतः' इत्यनुवर्तते । अनयोरीत ऊ[1]द्वा स्यात् । विहूणो । विहीणो[2] । हूणो । हीणो[3] । 'अनयोः' इति । किम् । प्रहीणो ।[4] कीदृश पीयूषे[5]द्दंशेषु 'एत्पीड—'इत्यादिना ईत एत्वम् । 'दृश्यक्सकिनि' इति ऋतो रिः । केरिसो । एरिसो । पि[6]अप्पेऊसो । प्रियपीयूषः । अत्र यलोपः । बहुलाधिकारात् पीडनीडयोरेत्वस्य विकल्पः । गअपेडो । गअपीडो । नेडो । नीडो । आमेलो । आवेलो । आपीडः । अत्र बडिशादिपाठाड्डस्य लः । 'नीपापीडे मो वा' इति पस्य वा मः ।

---

### अथोकारस्यादेशाः ।

**त्वदुत उपरिगुरुके ॥ १ । २ । ५८ ॥**

क[7]प्रत्ययान्तयोरनयो[8]रादेरुत अत्वं तु भवति । ग[9]रुओ । गुरुओ । कप्रत्ययान्तपरिग्रहात् केवले न भवति ॥

**मुकुलादौ ॥ १ । २ । ५९ ॥**

'उतः' इत्यनुवर्तते । 'अत्' इति च । मु[10]कुलादिष्वादेरुतोत्वं [11]तु भवति । म[12]उलो । मुउलो । मुकुलः । मउरो । मुउरो । मुकुरः । इत्यादि । मुकुलादि—मुकुल । मुकुर । मुकुट । अगुरु । गुडूची । गुर्वी । युधिष्ठिर । सौकुमार्य । इत्यादि । मकुटशब्दः संस्कृतेप्यस्ति ।

---

१ ऊत्वं वा स्यात् M. २ M. has विहीनः after it. ३ M. has हीनः after it. ४ M. has प्रहीनः after it. ५ °द्दशे M. ६ पिअपेऊसो P. ७ °प्रत्ययान्ते गुरुशब्दे उपरिशब्दे चादे° T. ८ °रुतः for° रादेः M. ९ गुरुओ । गरुओ । M. १० 'तु' इति च after this in M. ११ भवति तु for तु भवति T. १२ मुउलो । मउलो । M.

बहुलाधिकारात् क्वचिदात्वमपि । विद्रुतः । विद्दाओ ॥ 'दोदोनुत्साहोत्सन्नऊच्छसि' इत्यतः 'ऊत्' इत्यधिकृत्य 'दुरो रलुकि तु' इत्यतः 'तु' इति च ।

सुभगमुसले ॥ १ । २ । ६४ ॥

एतयोरुत ऊत्वं वा स्यात्[1] । मूसलो । मुसलो । सूहवो । सुहओ । अत्र 'ऊत्वे सुभगदुर्भगे वः' इति कोर्वत्वम् ॥ 'हृश्चौत्कुतूहले' इत्यतः 'ओत्' इत्यधिकृत्य

स्तौ ॥ १ । २ । ६६ ॥

संयुक्ते परे आदेरुत ओत्वम्[3] । मुद्गरः । मोग्गरो । पुद्गरः । पोग्गरो[2] । इत्यादि । एवं संयुक्ते परे उत ओत्वं सर्वत्र संचारणीयम् । नात्र लाक्षणिकस्य उत ओत्वम् । किं त्वलाक्षणिकस्यैव । 'सूक्ष्मेद्वोतः' इति ज्ञापकात् । अन्यथा तत्रापि 'संयोगे' इति ह्रस्वे कृते अनेनैवोत्वं स्यात् । न च विकल्पार्थं तत् सूत्रम् । तदा 'सूक्ष्मेद्वा' इत्येव ब्रूयान्न तु 'ऊतः' इति ॥

ईदुद्व्यूढे ॥ १ । २ । ६९ ॥

'ऊतः' इत्यनुवर्तते । उद्व्यूढे ऊत ईत्वं स्यात्[4] । उव्वीढो ॥

उत्कण्ड्यतिहनूमद्वातूले ॥ १ । २ । ७० ॥

कण्ड्यतौ धातौ हनूमद्वातूलयोश्चादेरूत उत्वं लित् स्यात् । कण्ड्यनपरः । कण्डुअणपरो[5] । हनुमान् । हणुमन्तो । अत्र 'मन्तमण–' इत्यादिना मतुपो मन्तादेशः[6] । वातूलः । वाउलो ॥

ओल्लूस्थूणातूणमूल्यतूणीरकूर्परगुलूचीकूश्माण्डीताम्बूलीषु

॥ १ । २ । ७३ ॥

---

१ T. has स्यात् after it. २ पोग्गलो M., T. ३ आदेरुत for उत My., P. ४ भवति M. ५ °अरो M., T. ६ मन्तादेशो वा स्यात् T. ७ M. makes two Sûtras—'ओत् स्थूणात् स्थूले ।' 'वा' इत्यनुवर्तते । 'ऊतः' इति च । अनयोरुत ओत्वं वा स्यात् । तोणो । थूणो ।

'सूक्ष्मेद्वोतः' इत्यतः 'ऊतः' इत्यनुवर्तते । एपूत ओत्वं भवति । लित्वान्नित्यम् । बाहुलकत्वात् स्थूणातूणयोर्विकल्पः । तोणो । तूणो । तूणः । बहुमोल्लो । बहुमूल्यः । तोणीरो । तूणीरः । कोप्परो । कूर्परः ॥

---

## अथ[1] ऋ[2]कारस्यादेशाः ॥

'ऋतोत्' इत्य[3]तः 'ऋतः' इत्यधिकृत्य

**इल्कृपगे ॥ १ । २ । ७६ ॥**

कृप इत्यादिषु आदेर्ऋत इत्वं लित् स्यात् । कृपः । कि[4]ओ । प[5]ॅलोपः । नृ[6]पः । णिवो । कृपणः । किविणो । कृपाणः । किवाणो । इत्यादि । कृपादि—[7]कृप । [8]नृप । कृपाण । कृशानु । [9]कृति । कृसर । कृच्छ्र । कृपण । कृषि । ऋषि । [10]धृति । वृश्चिक । वृत्त । वृत्ति । पृथ्वी । कृत्या । घुसृण । घृणा । ऋद्धि । समृद्धि । गृष्टि । वृद्ध-कवि । स्पृहा । बृसी । हृदय । उत्कृष्ट । [11]मृष्ट । दृष्ट । तृष्णा । सकृत् । दृष्टि । सृष्टि । सृगाल । व्याहृत । बृंहित । [12]तृंसे । सृष्ट । शृङ्गार । भृङ्ग । भृगु । भृङ्गार । इत्यादि ॥

**शृङ्गमृगाङ्कमृत्युदृष्टमसृणेषु वा ॥ १ । २ । ७७ ॥**

'इल्' अनुवर्तते । 'ऋतः' इति च । एषु ऋत इत्वं वा स्यात् ।

---

'कूर्परमूल्यं कुष्माण्डताम्बूलगुडूचीतूणीरे' । 'उतः' इत्यनुवर्तते । 'ओत्' इति च । एपूत ओत्वं भवति । कोप्परो । कूर्परः । बहुमोल्लो । बहुमूल्यः । तोणीरो । तूणीरः ॥

१ M. and T. drop अथ. २ ऋत आदेशाः । M., T. ३ इत्यधिकृत्य M., T. ४ किवो । M. ५ अत्र 'पो वः' इति वत्वम् । M. ६ M. has आकृतिगणोयम् in place of नृपः—इत्यादि. ७ T. has कृपणं before it. ८ M. has कृपण । कृश । कृशानु. ९ T. has कृश for कृति. १० T. has वृश्चिक । धृति । ११ दृष्ट । मृष्ट । M. १२ M. has दृत before तृस.

मिअंको । मअंको । अत्र 'सरस्य बिन्दुमि' इति ह्रस्वः । दिट्ठो । दट्ठो । इत्यादि ॥

उद्वृषभे वुः ॥ १ । २ । ७९ ॥

अत्र वृ इत्यवयवस्योत्वं वा स्यात् । पक्षे अत्वम् । उसहो । वसहो ॥

वृन्दारकनिवृत्तयोः ॥ १ । २ । ८० ॥

'उत्' इत्यनुवर्तते । अनयोर्ऋत उत्वं वा स्यात् । पक्षे अत्वम् । वुन्दारओ[3] । णिवुत्तो । णिर्वत्तो ।

ऋतुगे ॥ १ । २ । ८१ ॥

उत्वमनुवर्तते । 'ऋतः' इति च । ऋत्वादिष्वादेर्ऋत उत्वं भवति । उसहो । 'ऋतुऋजुऋण—'इत्यादिना रीत्यादेशे रिसहो । उउन्तो[6] । इत्यादि । ऋत्वादि—ऋतु । ऋषभ । प्राभृत । प्रभृति । निभृत । संभृत । निवृत । संवृत । निर्वृति । निर्वृत । प्रवृत्ति । प्रावृट् । वृत्तान्त । वृन्द । वृन्दावन । पृथिवी । ऋजु । मृणाल । पृथ्वी । वृद्ध । स्पृष्ट । प्रवृद्ध । परामृष्ट । भ्रातृक । पितृक । जामातृक । मातृक । इत्यादि ॥ 'इदुन्मातुः' इत्यतः 'इत्' इत्यधिकृत्य

वृष्टिपृथङ्मृदङ्गनप्तृकवृष्टे ॥ १ । २ । ८४ ॥

एषु ऋत इदुतौ भवतः । मिअंगो । मुअंगो[10] । णत्तिओ । णत्तुओ[11] । विट्ठो । वुट्ठो[12] ।

दृशेरि क्ता ॥ १ । २ । ८९ ॥

---

१ M. drops मअहो. २ उः M. ३ M. and T. have वृन्दारकः after it. ४ M. has निवृत्तः after it. ५ ऋत्वादेरादे° R. ६ उवन्तो M. ७ M. has ऋषभ after it. ८ इत्यधिकृत्य M., T. ९ M. has वृद्धः । after it. १० M. and T. have मिट्ठो । पुट्ठो । णत्तिओ । णत्तुओ । ११ M. has नमृकः after णत्तुओ. १२ After this (i. e. णत्तुओ) T. inserts नप्तृशब्दे 'कग—' इत्यादिना पलोपः तस्य द्वित्वम् । इष्टशब्दे 'ष्टः' इति ष्टस्य ठत्वम् । 'शेषादेशस्य' इति द्वित्वं च ।

दृशेरिंसः पकारतकाराभ्यां सह अरि इत्यादेशो भवति । दरिओ । दृप्तः ॥

केवलस्य रिः ॥ १ । २ । ९० ॥

[1]ऋतः केवलस्य व्यञ्जनेनासंयुक्तस्य रि इत्यादेशो भवति । [3]रिच्छो । ऋक्षः । इत्यादि ॥

ऋतुऋजुऋणऋपिऋषभे वा ॥ १ । २ । ९२ ॥

रीत्यनुवर्तते । एषु ऋतो रित्वं वा स्यात् । ऋणमुक्तः । रिणमुत्तो । उणमुत्तो । [4]ऋषभः । रिसहो । उसहो ॥

कॢप्त इलिः ॥ १ । २ । ९३ ॥

कॢपेरादेरच इलिरित्यादेशः स्यात् । कॢप्तः । किलित्तो ॥

---

[6]अथ एच आदेशाः ॥

[7]चपेटकेसरदेवरसैन्यवेदनास्वेचस्त्वित् ॥ १ । २ । ९४ ॥

एष्वेचः इत्वं वा स्यात् । किसरो । केसरो । दिअरो । देअरो ॥

सैन्धवशनैश्चरे ॥ १ । २ । ९५ ॥

'एचः' इत्यनुवर्तते 'ईत्' इति च । अनयोरादेरेच इत्वं स्यात् । पृथग्योगान्नित्यम् । सिन्धवो । सणिच्छरो ॥

त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च क्तोः ॥ १।२।९६ ॥

'एचः' इत्यनुवर्तते । एष्वेचः अत्वं तु स्यात्तत्संनियोगेन यथायोगं फकारतकारयोर्वत्वं च । मणहरो । मणोहरो । पवट्ठो । पओट्ठो । आवज्जो । आओज्जो । अन्योन्यकलहः । अण्णोण्णकलहो । अण्णण्णकलहो ॥

---

१ ऋतः M. २ केवलस्य ऋतः T. ३ ऋक्षः । रिच्छो । T. ४ M. drops ऋषभः । ५ °त्यादेशो भवति । M. ६ T. drops अथ. ७ चपेटा M. ८ M. and T. have सन्ध्यक्षराणां after एष्वेचः ९ T. has देवरः after it. १० इत् M., T. ११ भवति M., T. १२ सिन्धओ M. १३ M. and T. have भवति for च. १४ My. drops पओट्ठो । १५ अओज्जो M.

कौक्षेयक उत् ॥ १ । २ । ९७ ॥

कौक्षेयके आदेरेच उत्वं तु भवति । कुच्छेअओ । कोच्छेअओ । पौरादिपाठादउ इत्यपि । कउच्छेअओ । स्पृहादित्वात् क्षस्य छः ॥

शौण्डगे ॥ १ । २ । ९८ ॥

उत्वमनुवर्तते । शौण्डादिष्वादेरेच उत्वं तु भवति । पृथक्कृत्वान्नित्यम् । सुण्डो । शौण्डः । मुंजाअणो । मौञ्जायनः । सुवण्णिओ । सौवर्णिकः । शौण्डादि—शौण्ड । शौद्धोदनि । मौञ्जायन । सौन्दर्य । सौगन्ध्य । दौवारिक । सौवर्णिक । पौलोमी । इत्यादि ॥ स्तेनशब्दे ।

ऊ स्तेने वा ॥ १ । २ । १०० ॥

अत्र सन्ध्यक्षरस्य ऊत्वं वा भवति । 'स्तः' इति स्तस्य थत्वम् । थूणो । थेणो ॥

सोच्छ्वासे ॥ १ । २ । १०१ ॥

'ऊ स्तेने वा' इत्यत ऊत्वमनुवर्तते । अत्रैच ऊत्वं स्यात् । पृथग्योगान्नित्यम् । सूसासो । अत्र 'दोदोर्नुत्साह—' इत्यनेन शकारसकारयोः परयोरुकारस्य दकारेण सह ऊत्वे ऊसास इति स्थिते सन्धौ सति सोसासो । 'ऐच एङ्' इत्यतः 'ऐचः' इत्यधिकृत्य

अइ तु वैरादौ ॥ १ । २ । १०३ ॥

वैरादिष्वादेरैचः अइ इत्यादेशो भवति । वैशंपायनः । वइसंपाअणो । पक्षे ऐच एङि । वेसंपाअणो । चइत्तो । चेत्तो । चैत्रः । इत्यादि । वैरादि—वैर । वैशंपायन । वैदेशिक । वैश्रवण । चैत्र । कैलास । वैतालिक । कैरव । दैव । इत्यादि ॥

दैत्यादौ ॥ १ । २ । १०४ ॥

---

१ कौक्षेयकादावादे° M., T. २ शौण्डादिः T. ३ स्यात् R., T. ४ इत्यनुवर्तते । ५ उ इत्यनुवर्तते P., My. ६ भवति T. ७ दोदोर्नुत्साहोगमऊच्छति M., T. ८ M. has इति before it. ९ M. and T. have after it एच ऊत्वे सूसासो इति भवति । १० इत्यधिकृत्य M., T. ११ देशो वा भवति । M. १२ वैरादिः M.

'ऐचः' इत्यनुवर्तते । 'अइ' इति च । दैत्यादिष्वादेरचः अइ इत्ययमादेशो भवति । पृथक्त्वान्नित्यम् । दइचो । दैत्यः । वइअब्भो । वैदर्भः । इत्यादि । दैत्यादि—दैत्य । दैन्य । दैवत । कैतव । वैदर्भ । वैदेह । ऐश्वर्य । वैजनन । भैरव । वैतालीय । वैदेश । वैश्वानर । स्वैर । वैशाख । वैशाल । स्थैर्य । चैत्य । इत्यादि । चैत्यविशेषे न भवति । चेत्तं ॥

**गौरव आत् ॥ १ । २ । १०६ ॥**

अत्रैच आत्वं भवति । गौरवप्रियः । गारवप्पिओ ॥

**पौरगे चाउत् ॥ १ । २ । १०७ ॥**

पौरादिष्वेचैश्चकाराद् गौरवे च अउ इत्यादेशो भवति । गौरवप्रियः । गउरअप्पिओ । पौरः । पउरो । कौरवः । कउरवो । इत्यादि । पौरादि—पौर । सौर । मौलि । कौरव । गौड । कौल । कौशल । पौरुष । कौक्षेयक । सौध । मौन । गौरव । इत्यादि । स्थविरार्यस्कारयोर्विशेषः ॥

**एत् साज्झलात्त्रयोदशगेचः ॥ १ । ३ । १ ॥**

त्रयोदशादिष्वादेरचः साज्झला सस्वरव्यञ्जनेन परेण सहैत्वं भवति । थेरो । स्थविरो वृद्धो ब्रह्मा वा । अत्र 'कग—' इति सलोपे थकारस्थाकारस्य साच्कवकारस्य च स्थाने एकारः । एवं सर्वत्र साच्कपरसवर्णस्य पूर्वाचश्च स्थाने त्रयोदशादिष्वेकारः कल्पनीयः । एक्कारो । अयस्कारः । इत्यादि । त्रयोदशादि—त्रयोदश । स्थविर । अयस्कार । विचकिल । त्रयोविंशति । त्रयस्त्रिंशत् । इत्यादि । विचकिलेत्यत्र तैलादिपाठाद् द्वित्वे । वेइल्लो । मुद्धविअइल्लवसूणपुंजा इति

---

१ M. drops 'अइ' इति च । २ इत्यादेशो M. ३ दइच्चो । M. ४ °ष्वादेरेच° M., T. ५ पकरो M. ६ T. has सौरः । सऊरो in place of कौरवः । कउरवो । ७ P. and My. drop सौर. ८ °यस्कारस्कन्दयो° M., T. ९ भद्दा वा M.; बंह्मो T. वा T. १० °वावस्थाने R.

दृश्यते । मुग्धविचकिलप्रसूनपुञ्जाः ॥ 'कदले तु' ईत्यतः 'तु' इत्यधिकृत्य

**कर्णिकारे फोः ॥ १ । ३ । ३ ॥**

अत्र फोर्द्वितीयस्याचः परेण साज्झला सह एत्वं तु स्यात् । कण्णेरो । कण्णिआरो ॥

**नवमालिकाबदरनवफलिकापूगफलपूतर ओल् ॥ १ ।३ ।४ ॥**

एष्वादेरचः परेण साज्झला सह ओत्वं लिङ्भवति । नवमालिकाधेरः । णोमाळिओहरो । बदरप्रियः । बोरप्पिओ । नवफलिकानिर्मितः । णोहळिआणिम्मिओ । अत्र 'अस्तोरखोरचः' इत्यधिकृत्य

**फस्य भहौ वा ॥ १ । २ । ६० ॥**

अस्तोरखोरचः परस्य फकारस्य भकारहकारौ यथासंभवं व्यवस्थितविभाषया भवतः । क्वचिद् भः । क्वचित् तु हः । क्वचिदुभावपि । रेफैशिफयोः फस्य भ एव । मुक्ताफले फस्य ह एव । सफलशेफालिकानवफलिकागुम्फतीत्यादावुभावपि । तेनात्रानेन सूत्रेण फस्य हः । पूगफलप्रियः । पोहळप्पिओ । पूतरः । पोरो । जलजन्तुः ॥

**तु मयूरचतुर्थचतुर्द्वारचतुर्दशचतुर्गुणमयूसोलूखलसुकुमारोदूखललवणकुतूहले ॥ १ । ३ । ५ ॥**

'ओल्' इत्यनुवर्तते । मयूरादिष्वादेरचः परेण सस्वरव्यञ्जनेन सह ओत्वं वा स्यात् । मोरो । मऊरो । चोत्थो । चउत्थो । चोट्ठो । चउट्ठो । अत्र 'स्त्यानचतुर्थे—' इत्यादिना थस्य वा ठः । चोद्दारो । चउद्दारो । चोग्गुणो । चउग्गुणो । मोहो । मऊहो । मयूखः । खस्य हः । सोमारो । सुउमारो । ओहलो । उऊहलो । उदूखलः ।

---

१ इत्यधिकृत्य M. २ °धर°. ३ णिमा° M. ४ °हवो T. ५ °शफयोः M. ६ °गुम्फती° M. ७ पोप्फलप्पिओ M. ८ M. drops जलजन्तुः. ९ मोर M. १० मऊरो । मोरो । M. ११ दलम् T. १२ सुउमारो M.

कुतूहलपरः । कोहलपरो । अत्रैव 'त्वदुत उपरिगुरुके' इत्यतः 'तु' 'उतः' इत्यधिकृत्य

**ह्रस्वौत्कुतूहले ॥ १ । २ । ६५ ॥**

अत्र उत ओत्वं तु भवति तसन्नियोगेन ऊतो ह्रस्वश्च । इत्योत्वे ह्रस्वे च । कोहलपरो । कोउहलपरो । अत्र तैलादित्वाद् द्वित्वम् ॥

**निषण्ण उमः ॥ १ । ३ । ६ ॥**

'तु मयूर—' इत्यतः 'तु' इत्यनुवर्तते । असिन्नादेरचः परेण साज्झला सहितस्य उम इत्यादेशः स्योद्वा । णुमण्णो । णिसण्णो ॥

**अस्तोरखोरचः ॥ १ । ३ । ७ ॥**

अधिकारोऽयम् । 'कोहललाङ्गललाङ्गूले वा' इति यावत् । इत ऊर्ध्वं यदनुक्रमिष्यते तदस्तोरसंयुक्तस्याखोरनादौ वर्तमानस्याचः परस्य भवतीति वेदितव्यम् ।

---

## अथ कवर्गस्यादेशाः ॥

**खोपुष्पकुब्जकर्परकिले कोः ॥ १ । ३ । १२ ॥**

अपुष्पवाचिनि कुब्जशब्दे कर्परकिलयोश्च कोः कवर्गस्य खकारो भवति । ववयोरभेदाद् 'लवरामधश्च' इति बलोपे । खुज्जो । पुष्पे तु कुज्जो । खप्परो । खिलओ । अत्र 'स्वार्थे तु कश्च' इति कः ॥

**छागशृङ्खलकिराते लकचाः ॥ १ । ३ । १३ ॥**

'कोः' इत्यनुवर्तते । एषु कवर्गस्य यथाक्रमं लकच इत्यादेशा भवन्ति । छागः । छालो । किरातः । चिलाओ । पुलिन्दपर्याय एव । कामरूपिणि तु नेष्यते । णमिमो हरकिराअं । चिलाओ । इत्यत्र हरिद्रादिपाठाद्रेफस्य लत्वम् ॥

---

१ इत्यधिकृत्य R., M. २ कोउहल्लपरो । M. ३ M. drops कोउहलपरो । ४ या स्यात् । M., T. ५ M. drops यत्. ६ M. and T. drop अथ. ७ °रभेदन्यायेन M. ८ खप्परओ for खिलओ. ९ कप्रत्ययः for कश्चेति कः M. १० लकचम् M. ११ इत्येते आदेशा भवन्ति M.

**वैकादौ गः ॥ १ । ३ । १४ ॥**

एकादौ कोर्गः[1] स्याद्वा । एकः । एँगो[2] । एकादि—एक । आकर्ष । लोक । अमुक । तीर्थकर । उद्योतकर । श्रावक । असुकर । आकर । इत्यादि ॥

**खोः कन्दुकमरकतमदकले ॥ १ । ३ । १५ ॥**

'गैः'[3] इत्यनुवर्तते । 'कोः' इति च । एषु खोः कवर्गस्य गैः स्यात् । पृथक्त्वान्नित्यम् । कन्दुकपरः । गंदुअपरो । मरकतमयः । मरगअमओ । मदकलः । मअगलो ॥

**पुन्नागभागिनीचन्द्रिकासु मः ॥ १ । ३ ॥ १६ ॥**

'कोः' इत्यनुवर्तते । एषु कोर्मो[4] भवति । पुंन्नागः[6] । पुण्णामो ।

**शीकरे तु मही ॥ १ । ३ । १७ ॥**

अत्र कोः भकारहकारौ वा भवतः । [7]शीकरो । सीभरो । सीहरो । सीअरो ।

**ऊत्वे सुभगदुर्भगे वः ॥ १ । ३ । १८ ॥**

अनयोरुत ऊत्वे सति कोर्वकारो भवति । [8]सूहवो । दूहवो । अत्र भस्य हः । 'दुरोरलुकि तु' 'सुभगमुसले' इत्याभ्यामुत ऊत्वम् । 'ऊत्वे' इति किम् । सुहओ । दुहओ । अत्र

**दुरोरलुकि तु ॥ १ । २ । ६३ ॥**

'दोदोनुरसाद्दोत्सन्नऊच्छ्वसि' इत्यतः 'ऊन्' इत्यनुवर्तते । दुरित्युपसर्गस्य रेफलोपे आदेरुत ऊद्वा स्यात् । इति रेफलोपे विकल्पेन ऊत्वविधानाद् दुहओ इत्यत्र ऊत्वाभावः । 'सुभगमुसले' इत्यूत्वस्य वैकल्पिकत्वात् पक्षे । सुहओ ।

---

१ गो भवति । M. २ एग्गो । M. ३ M. has 'वैकादौ गः' इत्यतः before it. ४ गो भवति । M. ५ 'भोगिनी' M. ६ M. drops पुन्नागः । ७ M. has सीभरो । सीहरो । पक्षे । सीअरो in place of सीकरो । सीभरो । सीहरो । सीअरो । ८ सुहवो । दूहवो । M.

**निकषस्फटिकचिकुरे हः ॥ १ । ३ । १९ ॥**

एषु कवर्गस्य हत्वं भवति । णिहसो । फलिहो । अत्र 'ष्पस्पोः' इति फत्वम् । 'स्फटिके' इत्यनेन टस्य लत्वम् । चिहुरो । 'चिहुरः संस्कृतेपि'[1] इति भृङ्गाचार्यः[2] ।

---

अथ[3] चवर्गादेशाः[4] ॥

**चोः खचितपिशाचयोः सल्लौ ॥ १ । ३ । २२ ॥**

'ढः पृथकि तु' इत्यतः 'तु' इत्यनुवर्तते । अनयोश्चोश्चवर्गस्य सकारद्विरुक्तलकारौ यथासंख्यं तु भवतः । खसिओ । पक्षे[5] । खइओ । पिसल्लो । अत्र 'संयोगे' इति ह्रस्वः । पिसाओ[6] ।

**झो जटिले ॥ १ । ३ । २३ ॥**

'तु' इत्यनुवर्तते । अत्र चोर्झत्वं वा स्यात् । झडिलो । जडिलो । अत्र 'टो डः' इति टस्य डत्वम् ।

---

अथ[7] टवर्गादेशाः[8] ॥

**टोर्वडिशादौ लः ॥ १ । ३ । २४ ॥**

'तु' इत्यनुवर्तते । वडिशादौ टोष्टवर्गस्य लत्वं तु स्यात् । गुडः । गुलो । गुडो । वडिशादि—बडिश । गुड । नेड[9] । चपेट । आपीड । नाडी[10] । वेंटी । वेणु । दाडिमं[11] । इत्यादि ।

**स्फटिके ॥ १ । ३ । २५ ॥**

अत्र टोर्लत्वं स्यात् । पृथक्त्वान्नित्यम् । फलिहो ॥

**ढः कैटभशकटसटे ॥ १ । ३ । २७ ॥**

---

१ 'चिहुर इति संस्कृतेपि' M. २ भृङ्गयाचार्यः M. ३ M. and T. drop अथ. ४ चवर्गस्यादेशाः My., P. ५ ह्रस्वपक्षे M., R. ६ पिसवो । M. ७ M. drops अथ. ८ टवर्गस्यादेशाः P., My. ९ M. drops नड. १० M. drops वाटी; R. has वेणु । वाटी । ११ M. has हटी । and T. पालयन्ति after दाडिम ।

'टोः' इत्यनुवर्तते । एषु टवर्गस्य ढो भवति । केढवो । अत्र

वो भस्य कैटभे ॥ १ । ३ । ६४ ॥

अत्र भकारस्य वः स्यात् । इति भस्य वः । सअढो । शकटः ॥

ठः ॥ १ । ३ । २८ ॥

'डः' इत्यनुवर्तते । असंयुक्तस्यानादौ वर्तमानस्याचः परस्य ठस्य ढः स्यात् । मठः । मढो । कमठः । कमढो । कुठारः । कुढारो । अस्तोरित्येव । चिट्टइ । अखोरित्येव । ठाइ । अच इत्येव । कंठो ।

पिठरे हस्तु रश्च ढः ॥ १ । ३ । २९ ॥

'ठः' इत्यनुवर्तते । अत्र ठस्य ह्रस्वं डु स्यात् तत्संनियोगेन रश्च । रेफस्य दः । पिहढो । पक्षे । पिढरो अत्र 'ठः' इति ठस्य ढत्वम् ।

लत्डोनुड्गे ॥ १ । ३ । ३० ॥

अखोरखोरचः परस्य डैस्य लकारो भवति अनुड्गे उत्वादिगणं वर्जयित्वा । लित्वानित्यम् । गरुडः । गरुलो । अत्र हरिद्रादिपाठाद्रेफस्य लत्वम् । वडवानलः । वलआणलो । अस्तोरित्येव । कुड्यम् । कुड्डं । अखोरित्येव । डमरुओ । डमरुगः । अच इत्येव । तोंडो । 'अनुड्गे' इति किम् । णिविडो । उड्डगौडनिविडनाडीपीडितनीटेत्यादि ॥

टो डः ॥ १ । ३ । ३१ ॥

अखोरखोरचः परस्य टस्य डः स्यात् । घटः । घडो । एतचिह्न्तेपि समानम् । 'अस्तोः' इति किम् । खट्टंगं । खट्टांगं । 'अखोः' इति किम् । टंको । 'अचः' इति किम् । घंटा । क्वचिन्न भवति । अटैति । अटइ ॥

---

अथ तैवर्गादेशाः ॥

वेतस इति तोः ॥ १ । ३ । ३२ ॥

---

१ M. drops टस्य. २ My. drops डस्य. ३ अटइ । अटति । M. ४ M., R., and T. drop अथ. ५ तवर्गस्यादेशाः Mr., P.

'टो डः' इत्यतः 'डः' इत्यनुवर्तते। अत्रादेरवर्णस्य स्वप्नादित्वादित्वे सति तोस्तवर्गस्य उत्वं भवति। वेडिसो। 'इति' इति किम्। वेअसो।

**प्रतिगेऽप्रतीपगे ॥ १ । ३ । ३३ ॥**

'तोः' इत्यनुवर्तते। प्रत्यादिषु तवर्गस्य डो भवति। अप्रतीपगे। प्रतीपादीन् वर्जयित्वा। प्रतिपन्नः। पडिवण्णो। प्रतिभासः। पडिहासो। इत्यादि। प्रत्यादि—प्रतिपन्न। प्रतिभास। प्रतिहार। प्रतिस्पर्धि। प्रतिनिवृत्त। प्रतिकरोति। प्रतिपद्। प्रतिश्रुत्। प्रतिमा। प्रभृति। भृत। भिन्दिपाल। पताका। प्राभृतक। विभीतक। व्यापृत। कन्दलिका। हरीतकी। इत्यादि। 'अप्रतीपगे' इति किम्। प्रतीपम्। पईवेम्। प्रतीपादि—प्रतीप। प्रतिशान। प्रतिसमय। प्रतिष्ठा। प्रतिष्ठान। इत्यादि॥

**दम्भदरदर्भगर्दभदष्टदशनदग्धदाहदोहददोलादण्डकदने तु ॥ १ । २ । ३५ ॥**

'डः' इत्यनुवर्तते। 'तोः' इति च। दम्भादिषु तवर्गस्य डो वा स्यात्। डंभो। डरो। डब्भो। डट्ठो। पक्षे। दंभो। दरो। दब्भो। दट्ठो। दरशब्दोऽत्र भयार्थ एव ग्राह्यः। अन्यत्र। दरदलिआ। दरदलिता। दोहदे दम्भादिसाहचर्यादायस्यैव। डोहओ॥

**तुच्छे चच्छौ ॥ १ । ३ । ३६ ॥**

अत्र तवर्गस्य चकारच्छकारौ क्रमाद्भवतः। तुच्छः। चुच्छो। छुच्छो॥

**टल् त्रसरवृन्ततूवरतगरे ॥ १ । ३ । ३७ ॥**

एषु तवर्गस्य टकारो भवति। लित्वान्नित्यम्। टसरो। टूवरो।

---

१ इत्यनुवर्तते M.; इत्यतो ऽत्वमनुवर्तते T. २ P., My., and M. drop प्रतिपद्. ३ भिन्दिवाल। Mr., P., M. ४ R. and T. have after this प्रपादः। प्रतिपदम् पइपदम्। ५ प्रतिशा। संप्रति। R., T. ६ M. and R. drop अत्र. ७ भयार्थो वृत्तौ T., R. ८ एवात्र ग्राह्यः। M. ९ R. drops ग्राह्यः।

तूवरः शृङ्गरहितोऽनड्वान् श्मश्रुरहितो वा । टगरो औषधविशेषो वृक्षविशेषो वा ॥

**हः कातरककुदवितस्तिमातुलुङ्गेषु ॥ १ । ३ । ३८ ॥**

'तोः' इत्यनुवर्तते । एषु तवर्गस्य हत्वं भवति । काहरो । कहो । मातुलुङ्गप्रियः । माहुलुंगप्पिओ ॥

**तु वसतिभरते ॥ १ । ३ । ३९ ॥**

'हः' इत्यनुवर्तते । अनयोस्तवर्गस्य हकारो वा स्यात् । भरहो । भरओ ॥

**लः पलितनितम्बकदम्बे ॥ १ । ३ । ४० ॥**

'तु' इत्यनुवर्तते । एषु तवर्गस्य लो वा स्यात् । पलितकेशः । पलिलकेसो । [6]नितम्बः । निलंबो । कदम्बः । कलंबो । पक्षे । पलिअकेसो । इत्यादि ॥

**दोहदप्रदीपशातवाहनातसाम् ॥ १ । ३ । ४१ ॥**

'लः' इत्यनुवर्तते । दोहदे प्रपूर्वे दीप्यतौ च शातवाहनशब्दे अतसीशब्दे च तवर्गस्य लत्वं भवति । पृथक्त्वान्नित्यम् । दोहलो । पलीवो । प्रदीपः । सालाहणो । शातवाहनः । अळसिप्पसूणवण्णो । अतसीप्रसूनवर्णः ॥

**रल् सप्तत्यादौ ॥ १ । ३ । ४२ ॥**

तवर्गस्य रत्वं भवति । लित्वान्नित्यम् । इति सप्तत्यादिगणपठितगद्गदशब्दे तवर्गस्य रः । गग्गरो । सप्तत्यादि—सप्तति । सप्तदश । एकादश । द्वादश । त्रयोदश । पञ्चदश । अष्टादश । गद्गद इत्यादि ॥ 'कदर्थिते खोर्वः' इत्यतः 'वः' इत्यधिहृत्य

---

१ एतद्रहितः । P., My., M. २ वा दरभः M.; दुरो वा R., T. ३ R. drops तु. ४ R. has तु after it. ५ हत्वं R. ६ M. has निम्बः । णिंबो for नितम्बः । निलंबो । ७ शब्दे च M. ८ M. has गद्गदः । before it. ९ इत्यधिहृत्य M.

**पीते ले वा ॥ १ । ३ । ४५ ॥**

पीते स्वार्थिके लकारे सति तोर्वकारो वा स्यात् । पीवलो । पीअलो[1] । 'ले' इति किम् । पीओ । अत्र 'स्वार्थे तु कश्च' इत्यधिकृत्य 'लो वा विद्युत्पीतयोः' इत्यनेन स्वार्थे वा लः ॥

**ढः पृथिव्यौषधनिशीथे ॥ १ । ३ । ४७ ॥**

'वा' इत्यनुवर्तते । एषु तवर्गस्य ढत्वं वा भवति । औषधगुणः । ओसढगुणो । पक्षे । ओसहगुणो । अत्र 'खघथधभाम्' इति हत्वम् । णिसीढो । णिसीहो । निशीथः ॥

**र्णो दिना रुदिते ॥ १ । ३ । ४९ ॥**

अत्र दिना दीत्यवयवेन सह णत्वं रिर्द्वैवति । रित्वाद्द्वित्वम् । रुदितकरः । रुण्णअरो । 'णो वातिमुक्तके' इत्येतः 'णो वा' इत्यधिकृत्य

**गर्भिते ॥ १ । ३ । ५१ ॥**

अत्र तवर्गस्य णत्वं भवति । गब्भिणो । गब्भिओ ॥

**नः ॥ १ । ३ । ५२ ॥**

'णः' इत्यनुवर्तते । अस्तोरखोरचः परस्य नकारस्य णकारो भवति । मानवः । माणवो । ईशानः । ईसाणो । इत्यादि ॥

**आदेस्तु ॥ १ । ३ । ५३ ॥**

'नः' इत्यनुवर्तते । आदेर्नकारस्य णो वा स्यात् । नरः । णरो । नरो । नतः । णओ । नओ । इत्यादि । अस्तोरित्येव । न्यायः । नाओ ॥

**नापिते ह्रः ॥ १ । ३ । ५४ ॥**

---

१ M. has पीतः after पीअलो । २ R. and T. have 'पीते लो वा' इत्यतः before 'वा' इत्यनुवर्तते । ३ रिर्भवति । M. ४ इत्यधिकृत्य M. ५ भवति तु P., My. ६ माणवो । गानवः । M. ७ ईसाणो । ईशानः । M. ८ ह्रः । T.

'णः' इत्यनुवर्तते । 'नः' इति च[1] । अत्र नकारस्य णकारहकारौ वा भवतः[2] । हाविओ । णाविओ । नाविओ ॥

---

## अथ पवर्गादेशाः ॥[5]

**पो वः ॥ १ । ३ । ५५ ॥**

असंयुक्तस्यानादौ वर्तमानस्याचः परस्य पकारस्य प्रायो वः[3] स्यात् । शापः । सावो । इत्यादि । अस्तोरित्येव । विप्रः । विप्पो । अखोरित्येव । पढइ । पठति । अच इत्येव । कम्पो[8] । प्राय इत्येव । कपिः । कई । रिपुः । रिऊ । एतेन[10] प्रायो लोपवकारयोः पकारस्य युगपत् प्राप्तयोर्यत्र श्रुतिसुखमुत्पद्यते स तत्र विधेयः ॥

**फः पाटिपरिघपरिखापरुषपनसपारिभद्रेषु ॥ १ । ३ । ५६ ॥**

'पः' इत्यनुवर्तते । णिजन्ते पटिधातौ परिघादिषु च पस्य फत्वं भवति । परिघः । फलिहो । अत्र घस्य हः । हरिद्रादित्वाद्रस्य लत्वम् । पनसः । फणसो । फणसः संस्कृतेपि । परुषः । फरुसो । पारिभद्रः । फालिहद्दो । भस्य हः । हरिद्रादित्वाद्रेफस्य लत्वम् ॥

**प्रभूते वः ॥ १ । ३ । ५९ ॥**

'पः' इत्यनुवर्तते । अत्र पकारस्य वकारः स्यात् । वहुत्तो । तैलादित्वाद् द्वित्वम् ॥

**नीपापीडे मो वा ॥ १ । ३ । ५७ ॥**

नीपे आपीडे च पस्य मो वा स्यात् । णीमो । पक्षे । णीवो ।

---

१ M. drops 'नः' इति च. २ हकारो वा स्यात् । R., T. ३ स्यात् । M. ४ हाविओ । R. ५ M. and R. drop अथ. ६ पवर्गस्यादेशाः । My.; P., पस्यादेशाः । R. ७ वकारः R. ८ R. has कम्पः before कम्पो. ९ R. has इत्यादि after रिऊ । १० R. has पकारस्य for एतेन. ११ पनसपरुष M. १२ R. has पनसः । पणसो before पनसः । १३ फणसो M., R.

आमेलो । पेंक्षे । आवेलो । अत्र 'एल्पीड—' इत्यादिना ईकारस्य एत्वम् ॥

**फस्य भहौ वा ॥ १ । ३ । ६० ॥**

अस्तोरखोरचः परस्य फकारस्य भकारहकारौ यथासंभवं व्यवस्थितविभाषया भवतः । कचिद्भः । रेफः । रेभो । क्वचिद्धः । मुक्ताफलम् । मोत्ताहळं । कैचिदुभावपि । सफलम् । सभळं । सहळं । इत्यादि । अस्तोरित्येव । गुल्मः । गुम्मो । अखोरित्येव । फणी । अँच इत्येव । गुंफति । गुंफइ । प्राय इत्येव । कसणर्फणी ॥

**बो वः ॥ १ । ३ । ६१ ॥**

असंयुक्तस्यानादौ वर्तमानस्याचः परस्य बस्य वो भवति । शबलः । सवलो । इत्यादि ॥

**ङ्व्यौ कबन्धे ॥ १ । ३ । ६२ ॥**

अत्र बैंकारस्य वकारयकारौ ङितौ भवतः । ङित्वात् सानुर्नासिकउच्चारः । कवन्धो । कयन्धो ॥ 'त्वभिमन्यौ मः' ईत्यतः 'मः' इत्यधिकृत्य

**तु डो विषमे ॥ १ । ३ । ६७ ॥**

अत्र मस्य डो वा स्यात् । विसडो । विसमो ॥

**यो जर्वीयानीयोत्तरीयकृत्येषु ॥ १ । ३ । ६८ ॥**

'तु' इत्यनुवर्तते । तीये अनीये च प्रत्यये उत्तरीयशब्दे कृद्विहितप्रत्यये च यकारस्य जकारो वा स्यात् । रित्वाद् द्वित्वम् । तृतीयः । तइज्जो । पक्षे । तैंइओ । अत्र 'ऋतोत्' इत्यत्वम् । गभीरादिपाठादी-

---

१ M. drops पक्षे. २ एवं भवति । M. ३ P. and My. drop tho portion from क्वचिद्धः to इत्यादि । ४ पुप्पम् । पुप्पम् M. for गुल्मः । गुम्मो । ५ भोरित्येव । गुंफइ । for अच इत्येव । गुंफति । गुंफइ । M. ६ M. has कृष्णफणी after कसणफणी । ७ बस्य M. ८ °नासिकोच्चारः । M. ९ इत्यधिकृत्य M. १० तइज्जो M.

कारस्य इत्वं तलोपश्च । अनीये । करणीयः । करणिज्जो । करणीओ[1] । उत्तरीयपटः । उत्तरिज्जपडो । उत्तरीअवडो[2] । कृत्ये । मेयः । मेज्जो । मेओ । इत्यादि ॥

इन्मयटि ॥ १ । ३ । ६९ ॥

'यः' इत्यनुवर्तते । 'तु' इति च । मयट्प्रत्यये यकारस्य इकारो वा स्यात् । विषमयः । विसमइओ । विसमओ[3] । इत्यादि ॥

कतिपये वहशौ ॥ १ । ३ । ७२ ॥

'यः' इत्यनुवर्तते । अत्र यस्य वत्वहत्वे भवतः । हत्वे शित्वात् पूर्वस्य दीर्घः । कइवओ । कइवाहो ॥

अर्थपरे तो युष्मदि ॥ १ । ३ । ७३ ॥

'यः' इत्यनुवर्तते । अर्थपरे युष्मच्छब्दे यकारस्य तकारः स्यात् । तुह्मकेरो[4] । 'अर्थपरे' इति किम् । जुह्मअह्मप्पअरणं[5] । युष्मदस्मत्प्रकरणम् ॥

आदेर्जः ॥ १ । ३ । ७४ ॥

'यः' इत्यनुवर्तते । आदेर्यस्य जः स्यात् । यमः । जमो । इत्यादि । 'आदेः' इति किम् । अवयवो । बहुलाधिकारात् सोपसर्गस्यानादेरपि । संयोगः[6] । संजोओ । संयमः[7] । संजमो । क्वचिन्न भवति । प्रयोगः । पओओ ॥ 'भ्यौ बृहस्पतौ तु वहोः' इत्यतः 'तु' इत्यनुवर्तते । 'रो डा पर्याणे' इत्यतः 'रः' इति च ।

लो जठरवठरनिष्ठुरे ॥ १ । ३ । ७७ ॥

जठरादौ रस्य लत्वं वा स्यात् । जठरानलः । जढलाणलो । जढराणलो[8] । वढलो[9] । वढरो । अत्र 'ठः' इति ठस्य ढत्वम् । णिट्ठुलो ।

---

१ करणीदो M. २ उत्तरीअपडो M. ३ M. drops विसमओ । ४ M. and T. have युष्मदीयः before it. ५ जुह्माअह्मापअरणं । M. ६ संजोओ । संयोगः । M., R., T. ७ संजमो । संयमः । M., R., T. ८ जढरानलो M. ९ वढलो । वठरो । M.

निठुरो। अत्र 'कग—' इति षलोपे शेषस्य द्वित्वम्। भसलशब्दो भ्रमरपर्यायः संस्कृत इव ॥

**हरिद्रादौ ॥ १ । ३ । ७८ ॥**

'रः' इत्यनुवर्तते। 'लः' इति च। हरिद्रादौ रेफस्य लत्वं भवति। पृथक्त्वान्नित्यम्। चरण.। चलणो। इत्यादि। हरिद्रादि—हरिद्रा। अङ्गार। चरण। युधिष्ठिर। सुकुमार। शिथिर। सत्कार। मुखर। वरुण। किरात। रुग्ण। अपद्वार। करुण। दरिद्र। परिघ। परिखा। मत्सर। संवत्सर। पारिभद्र। दारिद्र्य। कातर। इत्यादि ॥

**किरिबेरे[2] डः ॥ १ । ३ । ७९ ॥**

किरि[3]शब्दे बेरशब्दे च रस्य डः स्यात्। [4]बेडो। बेरः। करभो मण्डूको दुन्दुभिर्वा ॥

**खोः करवीरे णः ॥ १ । ३ । ८० ॥**

'रः' इत्यनुवर्तते। अत्र खोरादे रेफस्य णत्वं स्यात्। कणवीरो ॥

**लोहललाङ्गललाङ्गूले वा ॥ १ । ३ । ८२ ॥**

अस्तोरखोरच इति निवृत्तम्। 'लो ललाटे च' इत्यतः 'लः' इत्यनुवर्तते। पूर्वसूत्रात् 'णः' इति च। लोहलादिष्वादेर्लकारस्य णो वा स्यात्। लंगलहत्थो। णोहलो। लोहलो। [5]शब्दविशेषः। [6]णंगलहत्थो। लांगलहस्तः। अत्र 'स्वरस्य बिन्द्वमि' इति ह्रस्वः। 'संयोगे' इति वा। दीर्घलाङ्गूलः। [7]दिग्घ[8]णंगूलो। दिग्घलंगूलो ॥

**वो मः शबरे ॥ १ । ३ । ८४ ॥**

अत्र वस्य मः स्यात्। [9]शबलः। [10]समरो ॥ 'नीवीसमे वा' इत्यतः 'वा' इत्यधिकृत्य

---

१ षदेव R., T. २ °भेरे M. ३ M. has 'रः' इत्यनुवर्तते before it. ४ भेरः। भेडो। M. ५ शफरविशेषः R., T. ६ लाङ्गलहस्तः। णंगलहत्थो। लंगलहत्थो। M. ७ दिग्घणंगूलो। M. ८ M. drops दिग्घलंगूलो। ९ M., R. and T. drop शबलः। १० सम्मरो। M.

हस्य घो बिन्दोः ॥ १ । ३ । ८६ ॥

बिन्दोः परस्य हस्य घो वा स्यात् । संहारः । संघारो । संहारो । सिंहः । सिंघो । अस्य विंशत्यादिपाठाद्बिन्दोः श्लोपलि शित्वात् पूर्वस्य दीर्घे सीहो इत्यपि । क्वचिदबिन्दोरपि । दाहः । दाघो ॥ 'शोः सल्' इत्यतः 'शो.' इत्यधिकृत्य

प्रत्यूषदिवसदशपाषाणे तु हः ॥ १ । ३ । ८८ ॥

एषु शोः शषसानां हकारो वा स्यात् । प्रत्यूषः । पैचूहो । पच्चूसो । अत्र 'त्योचैत्ये' इति त्यस्य चः । दिअहो । दिअसो । पाहाणो । पासाणो ॥

छल् षट्छमीसुधाशावसप्तपर्णे ॥ १ । ३ । ९० ॥

'शोः' इत्यनुवर्तते । एषु शोश्छत्वं लित् स्यात् । षण्मुखः । छम्मुहो । षट्पदः । छप्पओ । शावः । छावो । सप्तपर्णे । 'हे दक्षिणेस्य' इत्यतः 'अस्य' इत्यधिकृत्य 'समादाविल्' इत्यतः 'इल्' इति च

सप्तपर्णे फोः ॥ १ । २ । १२ ॥

अत्र द्वितीयस्यावर्णस्येत्वं लिद्भवति । छत्तिवण्णो । सुधाकरः । छुहाअरो ॥ पादपीठादिषु विशेषाः कथ्यन्ते । 'सिरायां वा' इत्यतः 'वा' इत्यधिकृत्य

लुक् पादपीठपादपतनदुर्गादेव्युदुम्बरेऽचोऽन्तर्दः ॥ १।३।९२ ॥

पादपीठादिष्वन्तर्वर्तमानस्य 'दः दकारस्य अचा सहितस्य लुग्वा स्यात् । नतपादपीठः । णअपावीढो । णअपाअवीढो । अत्र 'ठः' इति

१ P. and My. have संघारो । संहारो । संहारः । २ R. drops संहारो. ३ पूर्वस्माचो M. ४ पच्छूहो । M. ५ M. drops पच्चूसो. ६ M. has पच्छूसो before दिअहो । ७ इत्यनुवर्तते R. ८ लित् स्यात् R. ९ शिरायां M. १० इत्यधिकृत्य M., R. ११ पादेऽन्तः M. १२ R. and T. drop दः. १३ M. drops णअपाअवीढो ।

ठस्य ढत्वम् । कृतरामपादपतनः[1] । कैअरामपावडणो[2] । कैअरामपाअवडणो[3] । अत्र प्रत्यादित्वात् तस्य डः । दुर्गादेवीरमणः । दुग्गाईरमणो । दुग्गादेईरमणो । उदुम्बरः । उंबरो । उउंबरो । 'अन्तर्' इति किम् । दुर्गादेव्यामोदौ[4] मा भूत् ॥

व्याकरणप्राकारागते कगोः ॥ १ । ३ । ९३ ॥

'लुक्' अनुवर्तते । 'अचा' इति च । व्याकरणादिषु ककारगकारयोरचा सह लुग्वा स्यात् । व्याकरणपाठः । वारणपाढो । वाअरणपाढो । प्राकारः । पारो । पाँआरो[5] । आओ[6] । आअओ । आगतः ॥

एवमेवदेवकुलप्रावारयावज्जीवितावटावर्तमानतावति वः
॥ १ । ३ । ९४ ॥

एवमेवादिष्वन्तर्वर्तमानस्य[7] वँकारस्य अचा सह लुग्वा स्यात् । देवकुलनाथः । देउलणाहो[8] । देवँउलणाहो[9] । पारो । पावँारो[10] । प्रावारः[11] । जीअणाहो[12] । जीविअणाहो । जीवितनाथः । अडो । अवडो । अवटः । अत्र[13] 'टो डः' इति टस्य डत्वम् । अत्तमाणो । आवत्तमाणो । आवर्तमानः । 'अन्तर्' इति किम् । एवमेवेत्यत्रान्त्यस्य मा भूत् ॥

ज्योर्दनुजवधराजकुलभोजनकालायसकिसलयहृदयेषु
॥ १ । ३ । ९५ ॥

दनुजवधादिषु[14] ज्योर्जकारयकारयोरचा सह लुग्वा स्यात् । दणुवहो[15] । दणुअवहो । दनुजवधः । राउलप्पसूओ[16] । राअउलप्पसूओ । राजकुलप्रसूतः । भोणप्पिओ । भोअणप्पिओ[17] । भोजनप्रियः । इत्यादि ॥

---

१ कृतपादपतनः । R. २ कअपावडणो R. ३ कअपाअवडणो R. ४ ॰मादेर्मा My., P. ५ पाअरो M. ६ आगतः । आगओ । आओ । M. ७ वस्य R. ८ देउलणहो । M. ९ M. drops देवउलणाहो । १० पाअरो । M. ११ M. drops प्रावारः । १२ जीवितनाथः । जीअणाहो । जीविअणाहो । १३ M., My. and P. drop अत्र 'टो डः' इति टस्य डत्वम् । १४ दनुजादिषु R. १५ दनुजवधः । दणुवहो । M. १६ राजकुलप्रसूतः । राउलप्पसूदो । राअउलप्पसूदो । M. १७ M. drops भोअणप्पिओ ।

**अपतौ घरो गृहस्य ॥ १ । ३ । ९६ ॥**

गृहशब्दस्य अपतौ पतिशब्दः परो न भवति चेद् घर इत्यादेशो भवति । घरो । राअघरो । 'अपतौ' इति किम् । गहवई ॥ सरशब्दे

**सरकद्वोरीसरकारौ ॥ १ । ३ । १०० ॥**

अनयोर्यथासंख्यं ईसरकार इत्यादेशौ भवतः । ईसरो । पक्षे सरो । एकादशः । द्वादशः । अष्टादशः । सप्तदशः । अत्र सर्वत्र सप्तत्यादिपाठाद् दस्य रत्वम् । 'प्रत्यूष' इत्यादिना शोर्हत्वम् । एआरहो । बारहो । अत्र 'कग—' इत्यादिना दस्य लुक् । अट्ठारहो । अत्र 'ष्ठः' इति ष्टस्य ठत्वम् । सत्तरहो । अत्र 'कग—' इति पस्य लुक् । पञ्चदशः । पण्णरहो । अत्र 'पञ्चदश—' इत्यादिना स्तोर्णः । त्रयोदशः । तेरहो । अत्र 'एत्साज्झला—' इत्येत्वम् । चतुर्दशः । चोद्दहो । चउद्दहो । अत्र 'तु मयूर—' इत्यादिना आदेरचः परेण साज्झला सह वा ओत्वम् । एतेषां संख्यावाचित्वेप्युक्ता आदेशाः समाः । विशेषस्तु नकारान्तत्वादात्मशब्दवत् प्रक्रिया । पूरणप्रत्ययान्तास्तु रामशब्दवत् ॥

इत्यकारान्ताः ॥

---

अथ आकारान्तः पुंलिङ्गः सोमपाशब्दः ।

सोमपा सु इति स्थिते 'ह्रस्वलीदूतः' इत्यतः 'ह्रस्वः' इत्यधिकृत्य

**क्विपः ॥ २ । २ । ४७ ॥**

[12]क्विप्प्रत्ययान्तानां ह्रस्वः स्यात् । इति क्विप्प्रत्ययान्तानां ह्रस्वविधानेपि प्राकृतप्रतिपादकशास्त्रान्तरे क्विपादिप्रत्ययान्तानामित्यादि

---

१ M. has सप्तदशः । अष्टादशः । २ एआरहो । M. ३ My., M. and P. drop the portion from अत्र to दस लुक्. ४ The portion from अत्र to ठत्वम् is dropped in My., P. and M. ५ M., My., P. drop the portion from अत्र to लुक्. ६ चउद्दहो is omitted in M. and My. ७ इत्यादेरचः M. ८ ओकारः । M. ९ पूरणप्रत्ययान्ताः M.; पूरणप्रत्ययान्तो R., T. १० R. drops शब्द. ११ M. and T. drop अथ. १२ क्विप्प्रत्ययान्तस्य P., My.

ग्रहणदर्शनाद्विच्प्रत्ययान्तसोमपाशब्दस्यापि ह्रस्वः । यद्वा 'क्विपः' इति सूत्रे[1] क्विब्ग्रहणं विजादीनामप्युपलक्षकम्[2] । न च सूत्रे उपलक्षकत्वमदृष्टचरमिति वाच्यम् । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमित्यत्र साधर्म्यग्रहणं वैधर्म्यस्याप्युपलक्षणमिति सर्वसंप्रतिपन्नत्वात्[3] । तन्न्यायेनात्राप्युपलक्षितविच्प्रत्ययान्तस्य सोमपाशब्दस्यापि ह्रस्वः । तथा च सोमप सु इति स्थिते 'प्रायो लुक्—' इति पलोपे प्राप्ते 'नात्पः'[4] इति प्रतिषेधात्[5] पलोपाभावे[6] 'पो वः' इति पस्य वः[7] । 'सोः' इत्यादि—सूत्रैर्विधीयमाना आदेशाः पूर्ववत् । सोमवो । सोमवा । इत्यादि । रामवत् । एवं कीलालपाप्रभृतयः ॥

इकारान्तः पुंलिङ्गः कविशब्दः । कवि सु इति स्थिते । 'इदुतोर्दिः' इत्यधिकृत्य

**श्लुगनपि सोः ॥ २ । २ । २९ ॥**

इदुद्भ्यां परस्य सोः शानुबन्धो लुक् स्यात्[8] । अनपि नपुंसकलिङ्गे तु[9] न भवति । 'शिति दीर्घः' इति दीर्घः । वलोपः । कई ॥ कवि जस् इति स्थिते 'चतुरो वा' इत्यतः 'वा' इत्यधिकृत्य[10] 'इदुतोः—' इति च इदुतोरित्यस्य सुब्व्यत्ययेन पञ्चम्यन्तविपरिणामः ।

**पुंसो जसो डउ डओ ॥ २ । २ । २४ ॥**

पुंलिङ्गादिदुतोः परस्य जसः अउ अओ इत्यादेशौ डितौ वा भवतः । कवउ । कवओ[11] । पक्षे 'णो शसश्च' इति वा[12] णः । कइणो । पक्षे 'श्लुग्जश्शसोः' इति श्लुक् । कई । संबुद्धौ कवि सु इति स्थिते 'डोश्लुकौ तु संबुद्धेः' इति सोर्वा श्लुक् । शित्वात् पूर्वस्य[13] दीर्घः ।

---

१ सूत्रे is dropped in P. and My. २ °लक्षणम् R., T. ३ सर्वत्र संप्रति° R., T. ४ M. has नात्पः । अवर्णात् परस्य पकारस्य लोपः स्यात् इति पलोपाभावः । 'पो वः' इति &c. ५ R. drops प्रतिषेधात्. ६ °भावः किंतु R., T. ७ वत्वम् । R. T. ८ भवति । R. ९ M. and T. drop तु. १० इत्यधिकृत्य M., R. ११ कवओ । M. १२ णो वा । R. १३ M. drops पूर्वस्य.

दे कई । श्लुगभावे 'सोर्लुक्' इति लुक् । दे कइ । नात्र डो । अनदन्तत्वात् ॥ जसि पूर्ववत् ॥ द्वितीयैकवचने 'अमः' इति मः कइं ॥ शसि 'इदुतोर्दिः' इत्यतः 'इदुतोः' इति 'चतुरो वा' इत्यतः 'वा' इति 'पुंसो जसः—' इत्यतः 'पुंसि' इति चाधिकृत्य

णो शसश्च ॥ २ । २ । २६ ॥

पुंलिङ्गादिदुतः परस्य शसश्चाज्जसश्च णो वा स्यात् । कइणो[3] । पक्षे 'श्लुग्जश्शसोः' इति श्लुक् । कई[5] । पुंस इत्येव । बुद्धी ॥ तृतीयैकवचने कवि टा इति स्थिते 'इदुतोर्दिः' इत्यतः 'इदुतोः' इत्यधिकृत्य 'नृनपि ङसिङसोः' इत्यतः 'नृनपि' इति च

टो णा ॥ २ । २ । २८ ॥

पुंनपुंसके वर्तमानादिदुतः परस्य टावचनस्य णा भवति । कइणा ॥ कविभिस् इति स्थिते भिसि हिमादयः पूर्ववदेव विधेयाः ॥ 'भिस्भ्यस्सुपि' इत्यधिकृत्य

इदुतोर्दिः ॥ २ । २ । २२ ॥

भिस्भ्यस्सुपि परे इदुतोर्दीर्घः स्यात् । कईहिं[10] । बहुलाधिकारात् 'इदुतोर्दिः' इति दीर्घः कचिन्न भवति । दिअभूमिसु दाणजलद्दिताइं । द्विजभूमिषु दानजलार्द्रितानि ॥ पञ्चम्येकवचने कवि ङसिति स्थिते 'णो शसश्च' इत्यतः 'णो' इत्यधिकृत्य 'इदुतोः' इति च

नृनपि ङसिङसोः ॥ २ । २ । २७ ॥

पुंलिङ्गे नपुंसकलिङ्गे च वर्तमानादिदुतः परयोः ङसिङसोर्णो

१ My. and P. have हरि after कई. २ 'इदुतोर्दिः' 'चतुरो वा' 'पुंसो जसः—' इत्यतः इउ इओ इत्यधिकृत्य M. ३ My., P. and M. have हरिणो after it. ४ इति शसः श्लुकि M. ५ My., P. and M. have हरी after it. ६ रुद्दी My. ७ इत्यधिकृत्य M. ८ इति च M. ९ हरिणा after this in My., P. and M. १० M., My. and P. have हरीहिं after it. ११ दिअभूमिसु M. १२ हरि इतिति P., My., M. १३ इत्यधिकृत्य M. १४ 'दिदुतोः M.

इत्यादेशो वा स्यात्[1] । कविणो[2][3] । 'नृनपि' इति किम् । बुद्धीए । पक्षे हिंतोत्तोदोर्दवश्च[4] । कवीहिंतो[5] । कइत्तो । कईओ । कईउ । ङसिङसोर्हिरिति नास्ति । अनदन्तत्वात् ॥ भ्यसि उक्ता हिंतोप्रभृतयः सुन्तो च । 'इदुतोर्दिः' इति दीर्घः । कईहिन्तो[6] । इत्यादि ॥ षष्ठ्येकवचने 'नृनपि ङसिङसोः' इति वा[7] णो । कइणो[8] । पक्षे 'ङसोस्त्रियां सह' इति द्विरुक्तः सकारः । कइस्स[9] ॥ सप्तम्येकवचने मिरेव । कविम्मि[10] ॥ बहुवचने 'ईदुतोर्दिः'[11] इति दीर्घः । कवीसुं[12] । कवीसु ॥ शेषं रामवत् ॥

अथ इकारान्तेषु केचिद्विशेषाः प्रदर्श्यन्ते ॥ ध्वनि सु इति स्थिते 'उत्ध्वनि—' इत्यादिना बकारसंबन्धिनो वर्णस्योत्वम् । 'लवराम्—'[13] इति वलोपः । धुणी ॥

त्वथ्वद्ध्वां क्वचिच्चछजझाः ॥ १ । ४ । ६५ ॥

त्वथ्वद्ध्व इत्येषां यथासंख्यं[14] क्वचित् प्रयोगानुसारेण चछजझ इत्येते आदेशा भवन्ति । इति ध्वस्य झादेशे । झणी ॥ शेषं कविवत्[15] ॥

तित्तिरिशब्दे

रस्तित्तिरौ ॥ १ । २ । ४४ ॥

'मूषिकविभीतक—' इत्यादेरदित्यनुवर्तते[16] । 'त्वेदितः'[17] इत्यतः 'इतः' इति च । अत्र रेफसंबन्धिनः इवर्णस्यात्वं भवति । तित्तिरो ॥ शेषं रामवत् ॥ ऋषिशब्दे 'ऋतुऋजुऋणर्षिपि—'[18] इत्यादिना ऋका-

---

१ भवति for वा स्यात् R. २ My. and P. have हरिणो in place of कविणो. ३ M. has हरिणो after it. ४ °दश्च । M. ५ My., P. and M. have हरिहिंतो । हरित्तो । हरीओ । हरीउ । in place of कवीहिंतो । &c. ६ कइहिन्तो । M. ७ णो वा M. ८ M., My. and P. have हरिणो in place of कइणो । ९ M., My. and P. have हरिस्स । १० My. and P. have हरिम्मि; M. has both. ११ इदुतोरिति दीर्घः । M. १२ My. and P. have हरीसुं । १३ रवलेति वलोपः । M., T. १४ My. and P. have यथासंख्यं after प्रयोगानुसारेण. १५ कविवद्धरिवच्च । My., M., P. १६ र इत्तु° M. १७ M. drops 'त्वेदितः' इत्यतः. १८ °ऋषिऋषभ—' M.

रस्य वा रिः । रिसी । पक्षे । कृपादित्वादिल् । इसी । अग्निशब्दे 'स्नेहाग्न्योर्वा' इति सूत्रेण युक्तस्यान्त्यहलः प्राग्वा अत्वे । अगणी । पक्षे । अग्गी । अत्र 'मनयाम्' इति नैलोपः । शेषद्वित्वं च ॥ पदातिशब्दे

**तिर्यक्पदातिशुक्तेस्तिरिच्छिपायिकसिप्पि ॥ १ । ३ । १०४ ॥**

तिर्यगादेस्तिरिच्छ्यादय आदेशा यथाक्रमं वा स्युः । इति पायिकादेशे । पायिको ॥ शेषं रामवत् । पक्षे । दंतयोर्लोपे । पआई ॥ अक्षिशब्दे 'अक्ष्यर्थकुलाद्या वा' इति पुंलिङ्गतायां स्पृहादित्वात् क्षस्य छत्वे । अच्छी । अस्यैवाञ्जल्यादिपाठात् स्त्रीलिङ्गेपि प्रयोगः ॥ रश्मिशब्दे मलोपे रस्सी । नात्र 'श्मष्म—' इत्यादिना म्हादेशः । 'असरश्मौ' इति प्रतिषेधात् ॥ किरिशब्दे 'किरिवेरे[6] डः' इत्यनेन रेफस्य डत्वम् । किडी ॥ शौद्धौदनिशब्दे 'शोण्डगे' इत्यनेन शोण्डादिपाठादादेरेच उत्वम् । सुद्धोअणी ॥ बृहस्पतिशब्दे 'ऋतोत्' इत्यधिकृत्य 'इदुन्मातुः' इत्यतः 'इदुः' इति च

**तु बृहस्पतौ ॥ १ । २ । ८५ ॥**

अत्र ऋत इदुतौ वा भवतः । पक्षे अत्वम् । तथा च बिहस्पति बुहस्पति बहस्पति इति स्थिते

**भ्यौ बृहस्पतौ तु बहोः ॥ १ । ३ । ७५ ॥**

अत्र बकारहकारयोर्यथाक्रमं भकारयकारौ भवतः । तथा च भियस्पति । भुयस्पति । भयस्पति । पक्षे उक्तानि त्रीणि रूपाणि । एवं षट्स्वपि रूपेषु 'ष्पस्पोः फः' इत्यतः 'फः' इत्यधिकृत्य

**श्लेष्मबृहस्पतौ तु फोः ॥ १ । ४ । ४६ ॥**

अनयोः फोर्द्वितीयस्य स्तोः फो वा स्यात् । इति फत्वे बिहप्फई । बुहप्फई । बहप्फई । भियप्फई । भुयंप्फई । भंयप्फई । फत्वाभावे

१ प्रागत्वे M.; प्रागत्वं वा स्यात् R., T. २ नलोपः शेषद्वित्वे च । M.; नलोपे शेषद्वित्वम् । R. ३ °त्तिरिच्छि° M. ४ तदयोर्लोपे My., P. ५ म्हादेशः । M. ६ °वेरे M. ७ इति च M. ८ तु भवतः । M. ९ भुअप्फई । M. १० भअप्फई । M.

**सो बृहस्पतिवनस्पत्योः ॥ १ । ४ । ७४ ॥**

'[1]तो ढोरश्चारब्धे तु' इत्यतः 'तु' इत्यनुवर्तते । अनयोर्युक्तस्य वा[2] सः स्यात् । इति स्पस्य वा सत्वे । बिहस्सई । बुहस्सई । बहस्सई । भियस्सई । भुयस्सई । भयस्सई ॥ यदा युक्तस्य फत्वसत्वयोरभावस्तदा 'कग—' इति सलोपे शे[3]षस्य द्वित्वे बिहप्फई [4]इत्यादीनि षड् रूपाण्युदाहर्तव्यानि । इति बृहस्पतिशब्द[5]स्याष्टादश प्रकाराः ॥ वनस्पतिशब्दे 'सो बृहस्पतिवनस्पत्योः' इति वा युक्तस्य [6]सत्वे वणस्सई । सत्वाभावे 'ष्पस्पोः' इति फः । वणप्फई ॥ द्विशब्दस्य [7]सर्वत्र बहुवचनमेव । 'चतुरो जश्शस्भ्याम्—' इत्यतः 'जश्शस्भ्याम्' इत्यधिकृत्य

**दोण्णि दुवे वेण्णि द्वेः ॥ २ । ३ । ३० ॥**

द्विशब्दस्य जश्शस्भ्यां सह दोण्णि दुवे वेण्णि इति त्रय आदेशा भवन्ति । दोण्णि । दुवे । वेण्णि । इति स्थिते 'संयोगे' इति ह्रस्वे कर्तव्ये अनुक्तमन्यन्यायेन एच इग्घ्रस्वादेश इति इगेव भवति । दुण्णि पुरिसा । विण्णि पुरिसा । अत्रानुक्तन्यायेन ईग्घ्रस्वो[8] नास्तीति केचित् । तदा दोण्णि । वेण्णि । दुवे । 'दोवे टादौ च' इति विधास्यमानौ दो वे इत्यादेशावपि । तथा च जसि । [9]दोण्णि । दुण्णि । वेण्णि । विण्णि । दो । वे । दुवे[10] । शस्येतान्येव ।

**दो वे टादौ च ॥ २ । ३ । ३१ ॥**

[11]'द्वेः' इत्यनुवर्तते । द्विशब्दस्य टादौ [12]तृतीयादौ सुपि परे चकाराज्जश्शस्भ्यां सह दो वे इत्यादेशौ भवतः । अत्र सूत्रे 'टादौ' इत्यत्र[13]तद्गुणं बहुव्रीहिमङ्गीकृत्य टावचनस्य विधेयान्वयः परिहर्तव्यः । अन्यथा

१ M. drops 'तो ढो रश्चारब्धे तु' इत्यतः 'तु' इत्यनुवर्तते २ सो वा M. ३ शेषद्वित्वे M. ४ इत्यादि M. ५ °शब्दरूपस्य M. ६ सत्वम् । T. ७ My. and P. drop सर्वत्र. ८ ह्रस्वो M. ९ M. drops दोण्णि । १० R. and T. add इति सप्तादेशाः after it. ११ My. M. and P. drop 'द्वेः' इत्यनुवर्तते । १२ तृतीयादौ is dropped by M., R., T. १३ 'अतद्गुणसंविज्ञानबहुव्रीहि' P., My.

तत्रापि दो वे स्याताम् । तथा च द्विशब्दस्याप्येकवचनतापातः । तत्तु विरुद्धम् । तस्मादतद्गुणबहुव्रीहिमाश्रित्य [1]भिसादीनामेव विधेयान्वयो न तु टावचनस्य । अथ यद्यतद्गुणबहुव्रीह्याश्रयणाद्भिसादीनां विधेयान्वयस्तर्हि ङेसाद्येकवचनानामपि भिसादित्वात् तेषामपि विधेयान्वयापात इति तदिदम्[2]विदितमीमांसावृत्तान्तस्य भाषितम् । यथा हस्तेनावद्यति । स्रुवेणावद्यति । स्वधितिनावद्यति । इत्यत्र हस्तादीनां सामान्येन द्रवसहिताज्यमांसपुरोडाशाद्यवदानसा[3]धनत्वे प्रतीतेपि सामर्थ्यपर्यालोचनया हस्तादीनामवदानविशेषान्वयः कल्पितस्तथात्रापि भिसादीनां सर्वेषां सामान्येन विधेयान्वये प्रतीतेपि एकवचनसामर्थ्यपर्यालोचनया ङेसा[4]द्येकवचनानां द्विश[5]ब्दे विधेयान्वयः परिहर्तव्यः । यद्वा 'दो वे टादौ' इत्यत्र द्विशब्दस्य नित्यद्विवचनवाचित्वेपि गौणतायामेकवचनस्यापि संभवाट्टाद्येकवचनेष्वप्येतयोः प्रयोग इत्यलं सूत्रकलहचर्चया । प्रकृतमनुसरामः । भिसि दो भिस् वे भिस् इति स्थिते हिमादयः पूर्ववद् भिसादीनां वि[6]धेयाः । दोहिं । दोहिँ । दोहि । एवं वेहिं । इत्यादि । भ्यसि । दोहिंतो । दोत्तो । दोओ । दोउ । दोसुंतो । एवं वेहिंतो । इत्यादि । आमि

**ण्ह ण्हं संख्याया आमोविंशतिगे ॥ २ । ३ । २३ ॥**

संख्यायाः परस्यामः ण्ह ण्हं इत्येतावादेशौ भवतः अविंशतिगे विंशत्यादीन् वर्जयित्वा । दोण्ह । दोण्हं । वेण्ह । वेण्हं[7] । दोसुं । दोसु । वेसुं । वेसु ॥ त्रिशब्दस्य 'चतुरो जश्शस्भ्याम्—' इत्यतः 'जश्शस्भ्याम्' इत्यनुवर्तते ।

**तिण्णि त्रेः ॥ २ । ३ । २९ ॥**

त्रिशब्दस्य जश्शस्भ्यां सह तिण्णि इत्यादेशो भवति । जसि । तिण्णि । शसि । तिण्णि । 'दो वे टादौ च' इत्यतः 'टादौ' इत्यधिकृत्य

---

१ °द्भिसादीनामेव M. २ °मविदितं T. ३ °साधनत्वेपि My., P.
४ ङसा° M. ५ द्विशब्देन M. ६ हेयाः T. ७ वेहं । वेह्र । M.

**ति त्रेः ॥ २ । ३ । ३२ ॥**

त्रिशब्दस्य टादौ तृतीयादौ सुपि परे ति इत्यादेशो भवति । तिहिं । तिहिँ । तिहि । शेषं द्विशब्दवत् । द्वित्र्योर्लिङ्गत्रयेपि समानं रूपम् ॥ विधिशब्दे धस्य हत्वे विही । अस्याञ्जल्यादिपाठात् स्त्रीलिङ्गेपि प्रयोगः । एवं बलिनिधिग्रन्थीनामपि स्त्रीलिङ्गे प्रयोगः ॥

इति इकारान्ताः ॥

---

ईकारान्तः पुंलिङ्गो ग्रामणीशब्दः । 'क्विपः' इति ह्रस्वः । गामणी ॥ जसि । गामणउ । गामणओ । गामणिणो ॥ संबुद्धौ तु 'डोश्लुकौ तु सबुद्धेः' इत्यतः 'संबुद्धेः' इत्यधिकृत्य

**ह्रस्वलीदूतः ॥ २ । २ । ४६ ॥**

संबुद्धिनिमित्तयोरीदूतोर्ह्रस्वो लिग्भवति । दे गामणि । शेषं कविशब्दवत् ॥ एवमग्रणीसेनानीवातप्रमीसुधीसुश्रीप्रभृतयः ॥

ईति ईकारान्ताः ॥

---

उकारान्तः पुंलिङ्गः कारुशब्दः । एकवचनं कविशब्दवत् । कारू ॥ जसि । 'पुंसो जसो डउ डओ' इत्यधिकृत्य 'चतुरो वा' इत्यतः 'वा' इति च

**डवो उतः ॥ २ । २ । २५ ॥**

पुंलिङ्गादुतः परस्य डित् अवो ईत्यादेशो वा भवति । कारवो । पक्षे डउ डओ च । कारउ । कारओ ॥ सबुद्धौ 'डोश्लुकौ तु संबुद्धेः' इति वा श्लुक् । दे कारू । श्लुगभावे 'सोर्डक्' इति डुक् । दे कारु । उकारान्तत्वमेव विशेषः । शेषं कविवत् । एवं वायुसेतुप्रभृतयः ॥

---

१ तीहिं । तीहि । तिहि । P., My., M. has तिहि । तिहिइ । तीहि । २ ह्रस्वमिकृत्य M. ३ T. drops शब्द. ४ °सुधीसुधी° T. ५ M. drops इति ईकारान्ताः । ६ M., R. and T. drop शब्द. ७ इति वा । M. ८ स्यात् । M.

अथोकारान्तेषु केचिद्[1]विशेषाः प्रदर्श्यन्ते । पशुशब्दे वक्रादित्वा-द्बिन्दुः । पंसू ॥ पांसुशब्दे 'लुङ् मांसादौ' इति मांसादित्वा[2]दित्वाद् बिन्दोर्वा लुक् । पासू । पक्षे 'स्वरस्य बिन्दुमि' इति ह्रस्वे । पंसू ॥ स्थाणुशब्दे 'स्तोः' इत्यधिकृत्य 'क्ष्वेडकगे खल्' इत्यतः 'खल्' इति च ।

**स्थाणावहरे ॥ १ । ४ । ९ ॥**

अहरवाचिनि स्थाणुशब्दे स्तोः खत्वं लित् स्यात् । खाणू । अस्य दैवादिपाठाद् द्वित्वे खण्णू । हरे तु थाणू । अत्र 'कग—' इति सलोपः । इक्षुप्रवासिशब्दयोः 'द्विनीक्षुप्रवासिषु' इत्यनेन आदेरित उत्वम् । उच्छू । अस्य स्पृहादित्वात् क्षस्य छः । पवासू[3] । पावासू । पवासी । अत्र समृद्ध्यादिपाठादादेरचो वा दीर्घः ॥ कृशानुशब्दे कृपादित्वादृत इत्[4] । किसाणू । भृगुः । भिऊ । मृत्युशब्दे 'शृङ्गमृगाङ्क-मृत्यु—' इत्यादिना वा ऋत इत्वम् । मिच्चू[5] । पक्षे उत्वम्[6] । मच्चू[7] । उभयत्र 'त्योचैत्ये' इति त्यस्य चः ॥ ऋतुऋजुशब्दयोः ऋत्वादि[8]पाठादृत उत्वम्[9] । ऋतुः । उऊ । ऋजुः । उज्जू । अत्र तैलादित्वाद् द्वित्वम् । अनयोरेव 'ऋतुऋजुऋण—'[10] इत्यादिना ऋतो वा रित्वे[11] रिऊ । रिज्जू ॥ अभिमन्युशब्दे 'वो वः' इत्यतः 'वः' इत्यधिकृत्य

**त्वभिमन्यौ मः ॥ १ । ३ । ६५ ॥**

अत्र मस्य वो वा भवति । अहिवण्णू । अहिमण्णू ॥ अत्रैव

**त्वभिमन्यौ जञौ ॥ १ । ४ । २५ ॥**

'स्तोः' इत्यनुवर्तते । अत्र स्तोः जञ् ज इत्येतावादेशौ वा भवतः ।

---

१ केषुचिद् T. २ My. and P. drop मांसादित्वात्. ३ My. has पावासू । पवासू । प्रवासी । ४ इल् My. ५ मिङ्कू T. ६ ऋतं अत्वम् M., T. ७ मच्चू M. ८ ऋत्वादित्वात् M. ९ उः My, P. १० 'ऋतुऋण—' इत्यादिना My. ११ ऋत्वे My.

आदिमेरित्वाद् द्वित्वम् । अहिवज्जू । अहिमज्जू । अहिवजू । अहिमजू ॥ मन्युशब्दे

**वा न्तन्धौ मन्युचिह्नयोः ॥ १ । ४ । ३२ ॥**

'स्तोः' इत्यनुवर्तते । अनयोर्यथाक्रमं त न्ध इत्यादेशौ वा भवतः । मन्तू । पक्षे । मण्णू । अत्र 'मनयाम्' इति । यलोपः ॥ कट्टुशब्दे 'सरकट्टोरीसरकारौ' इति कट्टुशब्दस्य वा कारादेशे । कारो । इत्यादि रामवत् । पक्षे । कट्टु इत्याद्यूह्यम् ॥ उकारान्तः पुंलिङ्गः क्रोष्टुशब्दः । क्रोष्टु सु इति स्थिते 'तृज्वत् क्रोष्टुः' 'विभाषा तृतीयादिष्वचि' इति यदा तृज्वद्भावस्तदा 'उद्दतां त्वसमामि' इत्यतः 'ऋतः' इत्यधिकृत्य

**आ सौ वा ॥ २ । २ । ५२ ॥**

ऋदन्तस्य सौपरे आत्वं वा स्यात् । क्रोष्टा सु इति स्थिते 'लवराम्—' इति रेफलोपः । 'ष्टः' इति ष्टस्य ठत्वे 'सोर्ठ्लुक्' इति सोर्लुक् । कोट्ठा । यदा आत्वाभावस्तदा

**आरः सुपि ॥ २ । २ । ४९ ॥**

'ऋताम्' इत्यनुवर्तते । ऋदन्तस्य सुपि परे आर इत्यादेशो भवति । कोट्ठारो । इत्यादि सर्वत्र वचनेषु रामवत् । समासे त्वन्तर्वर्तिनीं विभक्तिमाश्रित्य रादेशस्तेन कोट्ठारकअमित्याद्यपि सर्वत्र ऋकारान्तेषु संचारणीयम् । लुप्तविभक्त्यपेक्षया भर्तार विहिअमिति भवतीति त्रिविक्रमदेववचनात् ।

**उद्दतां त्वसमामि ॥ २ । २ । ४८ ॥**

'आरः सुपि' इत्यतः 'सुपि' इत्यनुवर्तते । ऋदन्तानामुत्वं वा स्यादसमामि सु अम् आम् वर्जिते सुपि परे ॥ अत्र 'ऋताम्' इति बहुवचनं व्याप्त्यर्थम् । तेन यथादर्शनं नाम्युत्वं भवतीति वेदितव्यम् । इति यत्रोत्वं तत्र कारुवत् । सौ । कोट्ठारो । जसि । कोट्ठओ ।

---

१ कट्टुशब्दस्य My. २ इत्यधिकृत्य M. ३ M. has कोट्ठार after it.
४ °ष्वपेक्ष M. ५ °रान्तेष्वपि M. ६ त्रिविक्रमवचनात् R., T.

कोट्टुउ । कोट्टुणो । कोट्टवो । उत्वाभावे आरः । कोट्टारा । अमि । कोट्टारं । आमि । कोट्टाराणं । नात्रोत्वम् । 'अस्रमामि' इति प्रतिषेधात् । शेषं रामवत् कारुवच्च ॥ ऊकारान्तः पुंलिङ्गः खलपूशब्दः । 'क्विपः' इति ह्रस्वः । पस्य वः । खलपू । इत्यादि । कारुवत् । एवं कांडलू स्वयंभू मनोभू प्रतिभूप्रभृतयः ॥

इत्यूकारान्ताः ॥

---

ऋकारान्तः पुंलिङ्गः पितृशब्दः ॥ पितृ सु इति स्थिते 'असौ' इति ऋत अत्वं तलोपः । सोर्डुक् । पिआ । 'आरः सुपि' इत्यधिकृत्य

**संज्ञायामरः ॥ २ । २ । ५१ ॥**

ऋदन्तस्य संज्ञायां सुपि परे अर इत्यादेशो वा स्यात् । पिअरो ॥ जसि पिअरा । 'उद्दतां त्वस्रमामि' इत्युत्वं च । पिअओ । पिअउ । पिअवो । पिउँ । णो पिउ । संबुद्धौ 'डोस्लुकौ तु संबुद्धेः' इत्यतः 'संबुद्धेः' इत्यधिकृत्य

**ङ ऋदन्तात् ॥ २ । २ । ४३ ॥**

ऋकारान्तान्नाम्नः परस्य संबुद्धेर्डत्वं हुँ स्यात् । दे पिअ ।

**नाम्नि डरम् ॥ २ । २ । ४४ ॥**

'संबुद्धेः' इत्यनुवर्तते । नाम्नि संज्ञायां ऋदन्तात् परस्य संबुद्धेः डित् अरमित्यादेशो वा स्यात् । दे पिअरं । 'नाम्नि' इति किम् । दे कत्तार । अरादेशे दे पिअरो । दे पिअर । अमि । पिअरं । आमि । पिअराणं । पिअराण । नात्रोत्वम् । 'अस्रमामि' इति प्रतिषेधात् । आरादेशे रामवदुत्वे कारुवत् । एवं भ्रातृजामातृप्रभृतयः ॥ कर्तृशब्दस्य तु 'र्तस्याधूर्तादौ टः' इति र्तस्य टत्वम् । बहुलाधिकारादत्र विकल्पि-

---

१ कोट्टारो M. २ असौ चेत्युत आत्वम् M. ३ भवति for वा स्यात् M., R. ४ पिअणो for पिउ । णो पिउ M. ५ इत्यधिकृत्य M. ६ भवति for स्यात् M.

तम्। टत्वपक्षे 'आ सौ वा' इत्यात्वम्। कट्टा। टत्वाभावे 'लवराम्—' इति रेफलोपः । शेषे[1]द्वित्वम्। कत्ता । 'आ॒रः सुपि' इत्यारश्च। कट्टारो। कत्तारो॥ जसि। कट्टारा। कत्तारा । 'उदृताम्' इत्युत्वे[2]। कट्टउ। कत्तउ । इत्यादि। संबुद्धौ 'उ ऋदन्तात्' इत्युत्वम्। दे कट्ट। दे कत्त । नात्र डरमरौ। तयोः संज्ञाविषयत्वात्। शेषमारादेशे रामवदुत्वादेशे कारुवत् । एवं भर्तृहर्तृनेतृप्रभृतयः । ॠकारान्तऌकारान्तऐ[3]कारान्तश्चा[4]प्रसिद्धाः। ऐकारान्तः पुंलिङ्गः सुरैशब्दः। 'ऐच एङ्[5]' इत्येत्वे एदन्तस्य प्रयोगाभावात् 'स्वार्थे तु कश्च' इति कप्रत्ययः। ककारलोपः। सुरेओ॥ जसि । सिद्धावस्थापेक्षया [6]सुरा। दे [7]सुरेअ। दे [8]सुरेओ। [9]सुरेअं । इत्यादि रामवत् । भिस्भ्यस्सुपि सिद्धावस्थापेक्षया 'रायो हलि' इत्याकारश्च। सुराहि । सुराहिंतो। सुरासु। इत्यादि॥ ओकारान्तः पुंलिङ्गो गोशब्दः। गो सु इति स्थिते 'चपेटकेसरदेवरसैन्यवेदनास्वेचरस्त्वित्' इत्यतः 'एचः' इत्यनुवर्तते।

गव्य उदाइत्॥ १। २। ९९॥

गोशब्दे एच अउ औं[10]इ इत्यादेशौ भवतः। गऊ ॥ जसि। [11]गवउ। गवओ। गववो। इत्यादि। कारुवत् । गाई कविवत्॥ औकारान्तः पुंलिङ्गो ग्लौशब्दः। लादक्लीबेष्वन्त्यहलः प्रागित्वम्। ऐच एङ्। कप्रत्ययः। गिळोओ। गिळोआ । इत्यादि। रामवत्॥ हसितव्य इत्यादिषु 'अदेल्लुक्यात् खोः—' इत्यतः 'अतः' इत्यधिकृत्य 'मोमसुप्विच्च' इत्यतः 'इत्' इति च।

एच क्त्वातुमुत्तव्यभविष्यति॥ २। ४। १८॥

क्त्वादिषु परेषु भविष्यत्कालविहिते च प्रत्यये परतोत एत्वं

---

१ शेषद्वित्वानि M., R. २ इत्युत्वं च M. ३ ओकारान्त M. ४ °श्चाप्रसिद्धाः। My. ५ एच् M. ६ सुराआ। M. ७ सुरेओ M. ८ सुरेआ M. ९ सुरेओ M. १० आयि M. ११ गउ गओ गवो M.

चकारादित्वं च वा स्यात् । हसिअव्वो । हसेअव्वो । णंदिअव्वो । णंदेअव्वो । इत्याद्यूह्यम् । एवं हलन्तेषु अगागमे सर्वत्रोह्यम् ॥

इत्यजन्ताः पुंलिङ्गाः ॥

---

## अथाजन्ताः स्त्रीलिङ्गाः ॥

आकारान्तः स्त्रीलिङ्गो जायाशब्दः । जाया सु इति स्थिते यकारस्य 'प्रायो लुक्—' इति लोपे 'यश्रुतिरः' इत्याकारस्य यश्रुतित्वम् । 'सोर्लुक्' इति सोर्लुक् । जाआ ॥ जसि जाआ जसिति स्थिते 'श्वि शिं शिङ् जश्शसोः' इत्यतः 'जश्शसोः' इत्यधिकृत्य

**शो शु स्त्रियां तु ॥ २ । २ । ३२ ॥**

स्त्रियां वर्तमानान्नाम्नः परयोः जश्शसोः ओ उ इत्यादेशौ शितौ वा भवतः । जाआओ । जाआउ । शित्करणस्यात्र प्रयोजनाभावेपि इकारान्तस्त्रीलिङ्गादौ दीर्घार्थं भविष्यति । पक्षे 'श्लुग्जश्शसोः' इति श्लुक् । जाआ । संबुद्धौ 'डोर्ल्लुकौ तु संबुद्धेः' इत्यतः 'तु संबुद्धेः' इत्यधिकृत्य

**टापो डे ॥ २ । २ । ४५ ॥**

टाबन्तात् परस्य संबुद्धेरेत्वं डिद्वा भवति । दे जाए । पक्षे सोर्लुक् । दे जाआ । बहुलाधिकारात् क्वचिदोत्वमपि । दे जाओ ॥ अमि जाआ अमिति स्थिते 'अमः' इत्यमो मत्वम् । 'स्वरस्य विन्द्वमि' इति ह्रस्वः । जाअं ॥ शसि जस्वत् ॥ जाआ टा इति स्थिते 'ङसेः श शा शि शे' इत्यतः 'श शा शि शे' इत्यधिकृत्य

**टाङिङसाम् ॥ २ । २ । ३५ ॥**

---

१ हसेअम्वो । हसिअम्वो । M. २ णदेअम्वो । णंदेअम्वो । णंदिअम्वो । M. ३ अथाजन्तस्त्रीलिङ्गाः My., P., M. ४ यलोपे T., R. ५ इत्यधिकृत्य M., T., R. ६ वर्तमानयोर्नाम्नः T., R. ७ दो M., R. ८ इत्यधिकृत्य M., T., R. ९ जाया M. १० इति मत्वम् T. ११ जाया M. १२ इत्यधिकृत्य M., T., R.

स्त्रियां नाम्नः परेषां टाङिङस् इत्येतेषां[1] स्थाने अ आ इ ए इत्येते चत्वार आदेशाः शितो भवन्ति । पृथक्त्वान्नित्यम् । जाआअ । जाआइ । जाआए । अत्रापि शित्करणस्य इकारान्तस्त्रीलिङ्गेषु[2] फलम् ।

नातः शा ॥ २ । २ । ३६ ॥

स्त्रियां वर्तमानान्नाम्नः परेषां टाङिङसां भ्यासं[3] शा इति शिदात्व[4]माकारान्तान्न भवति । इति प्रतिषेधादत्र शौकारस्योदाहरणं[5] न संभवति ॥ भिसि जाआहिं । इत्यादि पूर्ववत् ॥ ङसौ

ङसेः श शा शि शे ॥ २ । २ । ३४ ॥

'शो शू स्त्रियाम्' इत्यतः 'स्त्रियाम्' इत्यनुवर्तते । स्त्रियां वर्तमानान्नाम्नः परस्य ङसेः अ आ इ ए इति चत्वार आदेशाः शितो भवन्ति ॥ जाआअ । जाआआ । जाआइ । जाआए । अत्र सर्वत्र 'अपदे' इति प्रतिषेधान्न संधिः । पक्षे हिन्तोत्तोदोदवश्च । भ्यसि सुंतो च । जाआहिन्तो । इत्यादयः । पूर्ववत् । 'भिसभ्यस्सुपि' ईति[6] एत्वं न भवति । अनदन्तत्वात् । शेषं पूर्ववत् । एवं मालादयः ॥ जराशब्दस्य तु अनुक्तमन्यन्यायेन 'जराया जरसन्यतरस्याम्' इति यत्र यत्र जरसादेशस्तत्र तत्र[7] 'अन्त्यहलोऽश्रदुदि' ईत्यतः 'अन्त्यहलः' इत्यधिकृत्य[8]

अविद्युति स्त्रियामात्[9] ॥ १ । १ । २९ ॥

स्त्रीलिङ्गे वर्तमानस्यान्त्यहल आत्वं भवति । लित्वान्नित्यम् । इति सस्यात्वे जरआ । जरआओ । जरआउ[10] । इत्यादि । जायावत् । जरसभावे जरा इत्यादि । जायावत् । वृक्षत्वं कवित्वमित्यादौ त्वप्रत्ययस्य

त्वस्य तु डिमात्तणौ ॥ २ । १ । १३ ॥

---

१ इत्येषां M. २ स्त्रीलिङ्गे परम् M. ३ भ्यासः My., P. ४ शिदाकारः My., P. ५ शाप्रत्ययस्यो° My., P. ६ इत्येतेष्वेत्वं T., R. ७ M. drops one तत्र. ८ इत्यधिकृत्य M., R., T. ९ °मात् T., R. १० जरआइ । My.

स्त्वप्रत्ययस्य डित् । इमात्तण इत्यादेशौ वा भवतः । इति त्वसेमादेशे 'स्त्रियामिमांजलिगाः' इति स्त्रीलिङ्गतायां अनुक्तमन्यन्यायेन डित्वाट्टिलोपे रुक्खिमा । वंच्छिमा । कइमा । इत्यादि । जायावत् ।

अथाकारान्तेषु केषुचिद्विशेषाः प्रदर्श्यन्ते । सास्नाशब्दे 'हे दक्षिणेस्स' इत्यतः 'अस्स' इत्यधिकृत्य 'उलूध्वनि गवयविप्वचि वः' इत्यतः 'उल्' इति च

स्नावकसास्ने ॥ १ । २ । १८ ॥

अनयोरादेरवर्णस्योल् स्यात् ॥ 'श्नष्ण—' इत्यादिर्ना ण्हादेशः । सुण्हा । नात्र 'स्नौ' इत्युत ओत्वम् लाक्षणिकत्वाद्बहुलाधिकाराद्वा संभावतोनुदन्तत्वाद्वा ॥ आर्याशब्दे

आर्यायां र्यः श्वश्र्वामूल् ॥ १ । २ । २१ ॥

श्वश्रूवाचिन्यार्यशब्दे र्यकारसंबन्धिनोवर्णस्य ऊत्वं लित् स्यात् । 'धय्यर्या जः' इति र्यस्य जत्वम् । 'संयोगे' इति ह्रस्वः । उज्जू । रूपाणि तु वक्ष्यमाणोकारान्तस्त्रीलिङ्गवत् । 'श्वाश्र्वाम्' इति किम् । अज्जा ॥ जिह्वाशब्दे 'ऊर्ध्वे भो वा' इत्यतः 'भः' इत्यधिकृत्य

द्दः ॥ १ । ४ । ५१ ॥

ह्रस्य भो वा स्यात् ॥ जिब्भा । पक्षे 'लवराम्—' इति वलोपे 'शोर्लुसयवरशोर्दिः' इति इति लुप्तयादीनां शषसानामादेरचो दीर्घप्रसङ्गे बहुलाधिकारादन्यस्याप्यादेरचो दीर्घ इति त्रिविक्रमदेवेन जिह्वाशब्दस्योदाहरणादादेरचो दीर्घे जीहा इत्यादिषु दीर्घप्रयोगः सिद्धः ।

---

१ M. drops वच्छिमा । कइमा । २ T. and R. add after it—'अत्र गर्भत्र डित्वाट्टिलोप' । ३ इत्यधिकृत्य M.; इत्यनुवर्तमाने T. ४ इति च M., T. ५ °रवर्णस्य उ स्यात् M., T., R. ६ इत्यादिना णुत्वम् M., R. ७ My. and P. drop संभावतोनुदन्तत्वाद्वा । ८ R. has हे दक्षिणेस्सेत्यधिकृत्य after it. ९ अइ । M., T. १० इत्यधिकृत्य M., T. ११ °दन्तस्यादे° M., T., R. १२ जिम्भते T., R.

[1]दीर्घाभावपक्षे जिहा । नात्र शेषत्वेपि ह्रस्व द्वित्वम् । 'अर्हे' इति प्रतिषेधात् । इष्टाशब्दे 'भ्रवृत्तसन्दष्ट—' इत्यादिनो स्तोष्टत्वम् । इट्टा ॥[2]
[3]'त्वेदितः' इत्येतः 'एदितः' इत्यनुवर्तमाने[4]

**मिरायां लित् ॥ १ । २ । ४२ ॥**

अत्र इत एत्वं लित् स्यात् । मेरा । सीमेति[5] यावत् ॥ स्थूणाशब्दे 'ओत्स्थूणातूर्ण—' इति वा[7] ऊत ओत्वम् । [8]थोणा । पक्षे थूणा[6] । कृशाशब्दे 'वा मृदुत्वमृदुककृशासात्' इति ऋत आत्वं वा । कासा[9] । पक्षे अत्वम् । कसा । चपेटावेदनाशब्दयोः '[10]चंपेटा' इत्यादिना एचो वा इत्वम् । चविडा । चवेडा । विअणा । वेअणा । सिरविअणा । सिरवेअणा । इत्येतौ शिरोवेदनायाः साध्यमानसिद्धावस्थयोरेव भवतः ॥ यमुनाचामुण्डाशब्दयोः 'कामुकयमुना—' इत्यादिना मकारस्य लुकि शेषस्य सानुनासिक उच्चारः । यस्य जः । जउँणा । चाउँडा । चन्द्रिकाशब्दे 'पुन्नागभागिनी—' इत्यादिना कोर्मत्वम् । [11]चन्दिमा । चन्द्रिमा । [12]अत्र 'धात्रीदे रस्तु' इति वा रेफलोपः[13] । छायाशब्दे 'यो जर्ती—' इत्यादेः 'यः' इत्यधिकृत्य

**छायायां होकान्तौ ॥ १ । ३ । ७० ॥**

अकान्तौ वर्तमाने छायाशब्दे यकारस्य हकारो वा स्यात् । इति वा ह्रत्वे 'पुंसोजातेर्ङीव्वा' इत्येतः 'ङीब् वा' इत्यधिकृत्य[14]

**हरिद्राच्छाया ॥ २ । २ । ३९ ॥**

---

१ दीर्घाभावे M.; My. and P. drop दीर्घाभावपक्षे. २ संयुक्तस्य उत्वम् T.; संयुक्तस्य एत्वम् R. for स्तोष्टत्वम्. ३ M. has मिराशब्दे before it. ४ इत्यनुवर्तमाने T., R.; इत्यनुवर्तते M. ५ सीमा। My., P. ६ सूणा My. ७ M. drop वा. ८ M. has 'कग—' इत्यादिना सलोपः before थोणा; T. has 'कग—' इति सलोपः before थोणा. ९ 'कृशाभूते स्यात् M. १० 'चपेटाकेसरी—' इत्यादिना M., T. ११ M. drops चन्दिमा । चन्द्रिमा । १२ M. drops अत्र. १३ रेफस्य लोपः । T. १४ इत्यधिकृत्य M., T.

अनयोः ङीब् वा स्यात् । इति [1]ङीपि अनुक्तमन्यन्यायेन 'यस्येति च' इत्यकारलोपे । छही । गौरीवत् । ङीबभावे । छाहा । हत्वाभावे । छाऊ । छाआ । उभयत्र यलोपः ॥ हरिद्राशब्दे 'हरिद्रादौ' इति रेफस्य लत्वम् । 'मूषिकविभीतक—' इत्यादिना इत अत्वम् । युक्तरेफस्य वा लोपः । द्वित्वम् । पूर्वसूत्रेण वा ङीप् । हळद्दी । हळद्दा । अत्र युक्तरेफलोपस्य विकल्पितत्वात् हळद्री । हळद्रा । इत्यप्यस्ति ॥ स्नुषाशब्दे 'शोः सल्' इत्यतः 'शोः' इत्यधिकृत्य 'प्रत्यूषदिवसदशपाषाणे तु हः' इत्यतः 'तु' इति च

**स्नुषायां ण्हः फोः ॥ १ । ३ । ८९ ॥**

अत्र फोः द्वितीयस्य शोः ण्ह इत्यादेशस्तु स्यात् । सुण्हा । नात्र 'स्तौ' इत्युत ओत्वम् । बहुलाधिकारात् । पक्षे 'मनयाम्' इति नलोपे । सुसा । नन्वत्र पुरस्स्फूर्तिकत्वात् 'कग—' इति सलोप एव किमिति न भवति । उच्यते । अनुक्तमन्यन्यायेन विप्रतिषेधे परं कार्यमिति 'मनयाम्' इति सूत्रस्य परत्वान्नलोप एव युक्त इति सन्तोष्टव्यम् ॥ सुधाशब्दे 'छल्षट्छमी—' इत्यादिना शोश्छत्वम् । छुहा । सिराशब्दे 'शोः सल्' इत्यतः 'शोः' इत्यधिकृत्य 'छल्षट्छमी—' इत्यादेः 'छल्' इति च

**सिरायां वा ॥ १ । ३ । ९१ ॥**

अत्र शोश्छत्वं वा स्यात् । छिरा । पक्षे सिरा ॥ स्पृहाशब्दे 'स्पृहादौ' इति युक्तस्य छत्वम् । कृपादित्वादृत इत्वम् । छिहा ॥ श्रद्धाशब्दे 'ढोधर्द्धि—' इत्यादिना युक्तस्य वा ढः । सड्ढा । पक्षे सद्धा । दंष्ट्राशब्दे 'दग्धविदग्ध—' इत्यादिना युक्तस्य ढत्वम् । 'विंशतिषु त्या ल्लोपल्' इत्यनेन विंशत्यादिपाठाद् बिन्दोः ल्लोपलि शि-

१ ङीप् M. २ छाई M., T.; T. has छाआ । छाई । ३ हळद्दि । M. ४ हळद्दि । M. ५ इत्यधिकृत्य M., T. ६ इति च M., T. ७ युक्तः T. ८ इत्यधिकृत्य T.

त्वात् पूर्वस्य दीर्घे दाढा । मनःशिलाशब्दे वक्रादौ मनस्विन्याद्यवान्तरगणपाठात् द्वितीयादचः परे बिन्दौ मणंसिळा । मणासिळा इति च दृश्यते । श्लाघाशब्दे 'प्राक् श्लाघा—' इत्यादिना लात् प्रागत्वम् । घस्य हत्वम् । सळाहा ॥ क्रियाशब्दे 'हर्षामर्ष—' इत्यादिना युक्तस्यान्त्यहलः प्रागित्वम् । किरिआ ॥ ज्याशब्दे 'ईल् ज्यायाम्' इत्यनेनान्त्यहलः प्रागील् । जीआ । सटाशब्दे 'ढः कैटभशकटसटे' इति टोर्ढत्वम् । सढा ॥ वनिताशब्दे

**स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीदआविळआ वा ॥ १ । ३ । ९७ ॥**

स्त्रीप्रमुखानां इत्थी प्रमुखा आदेशा वा स्युर्यथाक्रमम् ॥ विळआ । वनिता । विळया संस्कृतेपीति केचित् । इत्यादिविशेषा ऊह्याः ॥ इकारान्तः स्त्रीलिङ्गो रुचिशब्दः । 'श्लुगनपि सोः' इति शोः श्लुक् । रुई । जसि 'शोशु स्त्रियां तु' इति शितावोदुतौ । रुईओ । रुईउ । पक्षे रुई । संबुद्धौ कविवत् । अमि रुइं । शसि जस्वत् । 'टाङिङसाम्' इति शशा शिशे रुईअ इत्यादि । भिसि रुईहि । इत्यादि । जसौ उक्ताः शादयः । पक्षे हितो इत्यादयः । ङसि ङौ च उक्ता आदेशाः । ङौ मिङ् च । शेषं कविवत् । एवं मतिप्रभृतयः ॥ विशेषास्तु बुद्धिशब्दे ऋत्वादिपाठाद्दत उत्वे 'ढोधर्द्धि—' इत्यादिना युक्तस्य वा ढत्वे उढी । अस्त्येव कृपादिपाठाद्दत इत्वे इड्ढी । ड्त्वाभावे । उद्धी । इद्धी ॥ आलीशब्दे 'हे दक्षिणेस्य' ईत्यतः 'अस्य' इत्यधिकृत्य 'आदेः' इति च

**ओदाल्यां पङ्क्तौ ॥ १ । २ । २९ ॥**

पङ्क्तिवाचिन्यालीशब्दे आदेरवर्णस्य ओत्वं स्यात् । ओळी । 'पङ्क्तौ'

---

१ M. drops द्वितीयाद्. २ इत्यपि My., P. ३ M. has द्वितीया before it. ४ प्रागित्वम् । T. ५ जिआ । M. ६ यथाक्रमं वा स्युः । T.; वा यथाक्रमं स्युः । M. ७ रुइं My. ८ इत्यधिकृत्य R. ९ ओत्वं वा स्यात् T., R.

इति किम् । आळी सखी ॥ मृत्तिशब्दे 'प्रवृत्तसन्दष्ट—' इत्यादिना त्तोर्ट्टत्वम् । ऋतः अत्वम् । मट्टी । छदिवितर्योः 'डल् फोर्मर्दित—' इत्यादिना त्तोर्डत्वम् । छड्डी । विअड्डी ॥ समृद्धिप्रवृद्धिप्रतिसिद्ध्यभिजातिषु तु 'समृद्ध्यादौ' इति समृद्ध्यादित्वादादेरचो वा दीर्घः । सामिद्धी । समिद्धी । अत्र कृपादित्वादृत इत्वम् । पासिद्धी । पसिद्धी । पाडिसिद्धी । पडिसिद्धी । अत्र प्रत्यादित्वात्तस्य डत्वम् । आहिआई । अहिआई[2] । अत्र तजयोर्लोपः । भस्य हः ॥ कृतिसृष्टिशब्दयोः कृपादित्वादृत इत्वम् । किई । सिट्ठी । अत्र 'ष्टः' इति ष्टस्य ठत्वम् ॥ गृष्टिशब्दे वैक्रादित्वाद्बिन्दुः । कृपादित्वादृत इत्वं चे । गिंठी गिट्ठी इति च दृश्यते । प्रभृतिनिर्वृतिप्रवृत्तिवृद्धिषु ऋत्वादित्वादृत उत्वम् । पहुडि । पाहुडी । अत्र भस्य हः । प्रत्यादित्वात्तस्य डेत्वम् । समृद्ध्यादित्वादादेरचो वा दीर्घः । भृतिः । भुई । निर्वृतिः । णिवुई । प्रवृत्तिः । पउत्ती । वृद्धिः । उड्ढी ॥ वितस्तिशब्दे 'हः कातर—' इत्यादिना तस्य हत्वम् । 'स्तः' इति थेत्वम् । विहत्थी ॥ वसतिशब्दे तु 'वसतिभरते—' इत्यनेन तस्य हेत्वं वा स्यात् । वसही । पक्षे वसई ॥ पापर्धिशब्दे 'पो वः' इत्यतः 'पः' इत्यनुवर्तते 'अखोः' इति च

रत्पापर्धौ ॥ १ । ३ । ५८ ॥

अत्राखोः पस्य रत्वं लित् स्यात् । पारद्धी । मृगया । धृतिशब्दे 'मलिनधृति—' इत्यादिना धृतिशब्दस्य वा दिहि इत्यादेशे दिही । पक्षे धिई ॥ शुक्तिशब्दे 'तिर्यक्पदाति—' इत्यादिना शुक्तेः शिप्पि इत्यादेशे सिप्पी । पक्षे सुत्ती । बहुलाधिकारान्नात्र 'स्रौ' इत्युत ओत्वम् । सोत्तीति केचित् । उभयत्र 'कग—' इति पलोपद्वित्वे ॥ सप्ततिशब्दे 'रल् सप्तत्यादौ' इति तस्य नित्यं रत्वम् । सत्तरी । अत्र

---

१ पुष्कस्य उत्वम् T; पुष्कस्य उत्वे एत्वम् R. २ M. has अभिजातिः after it. ३ वक्रादित्वादादिस्वराद्बिन्दुः । M. ४ M. drops च. ५ हः । T. ६ समृद्ध्यादित्वाद्वा दीर्घः । M. ७ स्तोःथत्वम् M. ८ तकारस्य My., P. ९ वा हत्वम् । My., P., M.

'फग—' इति पलोपद्वित्वे। विंशतिः त्रिंशत् पञ्चाशत्—अत्र सर्वत्र 'विंशतिषु त्या ल्लोपल्' इति विन्दोः 'ति' इत्यवयवेन सह लोपे शित्वात् सर्वस्य दीर्घे। वीसा। विंशतिः। तीसा त्रिंशत्। पञ्चाशत्। पण्णासा। अत्र 'पञ्चदशदत्तपञ्चाशति णः' इति स्तोर्णत्वम्। त्रयाणां रूपाणि जायावत्। सप्तविंशतिः पञ्चविंशतिः इत्यादौ 'दिहौ मिथः सः' इति ह्रस्वस्य दीर्घे। सत्तावीसा। पण्णावीसा। शेषं जायावत्॥ अन्तर्वेदिः। अत्र रेफलोपे पूर्ववद्दीर्घः। अंतावेई॥ ईकारान्तः स्त्री लिङ्गो गौरीशब्दः। 'ऐच एङ्' इत्योत्वम्। गोरी सु इति स्थिते 'श्चि शिं शिङ् जश्शसोः' ईत्यतः 'जश्शसोः' इत्यधिकृत्य 'शो शु स्त्रियां तु' ईत्यतः 'स्त्रियां तु' इति च

**आदीतः सोश्च॥ २। २। ३३॥**

स्त्रियामीकारान्तान्नाम्नः परस्य सोः चकाराजश्शसोश्च आत्वं तु भवति। गोरीआ। पक्षे सोर्लुक्। गोरी। जसि। गोरी। गोरीओ। गोरीउ। आत्वे। गोरीआ। संबुद्धौ 'ह्रस्वलीदूतः' इति ह्रस्वः। हे गोरि। शसि जस्वत्। टादौ टाङिङसांङसेः शशाशिशे इत्यादि सर्वं रुचिशब्दवत्। एवं तरुणीरमणीप्रभृतयः॥ स्त्रीशब्दस्य 'स्त्रीम-गिनी—' इत्यादिना इत्थीत्यादेशः। इत्थी॥ श्रीशब्दस्य 'हर्षामर्ष—' इत्यादिना अन्त्यहल. प्रागित्वम्। सिरी। एवं हिरी। अत्रापि 'क्विपः' इति ह्रस्वः। शेषं गौरीवत्॥ नीलीत्यादिषु

**पुंसोजातेर्ङीब् वा॥ २। २। ३७॥**

अजातिवाचिनः पुंलिङ्गात् स्त्रियां वर्तमानात् ङीप् प्रत्ययो वा स्यात्। नीली। पक्षे नीला। सहमाणी सहमाणा। सुंप्पणही। सुप्पणहा। काळी। काळा। इत्यादि। 'अजातिवाचिनः' किम्।

---

१ पलोप. M. २ इत्यधिकृत्य M., R., T. ३ इति च। M., R., T. ४ T. drops शब्द. ५ R. and T. drop रमणी. ६ R. and T drop एवम् ७ सुप्पणहा। सुप्पणही। M.

अजा । अआ । एडका । एडआ । अमासे विभाषाविधिरयम् । तेन गौरीकुमारीत्यादिषु संस्कृतवदेव नित्यं ङीप् । पृष्ठशब्दस्याङ्गल्यादिपाठात् स्त्रीलिङ्गतायां पूर्वसूत्रेण वा ङीप् । 'पृष्ठेनुत्तरपदे' इत्यनेन ऋतो वा इत्वम् । पिट्टी । ऋत इत्वाभावे 'ऋतोत्' इत्यत्वे पट्ठी । इति द्वयं सिद्धम् ॥ साधनीत्यादिषु

ङीप् प्रत्यये ॥ २ । २ । ३८ ॥

'वा' इति वर्तते । 'टिड्ढाणञ्—' इत्यादिसूत्रेण प्रत्ययनिमित्तो यो ङीप् प्रत्ययो विहितः स स्त्रियां वर्तमानान्नाम्नो वा भवति । साहणी । साहणा । कुरुअरी । कुरुअरा । ऊरुद्दसी । ऊरुद्दसा । ऊरुद्दघी । ऊरुद्दघा । ऊरुमेत्ती । ऊरुमेत्ता । अत्र 'उत्करवल्ली—' इत्यादिना मात्रचोकारस्य एत्वम् । सोवण्णेई । सोवण्णेआ । पक्षे विकल्पसामर्थ्यादेव टाप् । समशिष्टयोरेव विकल्प इति न्यायात् ॥

अथ ईकारान्तस्त्रीलिङ्गेषु विशेषाः प्रदर्श्यन्ते । भगिनीशब्दे 'स्त्रीभगिनी—'इत्यादिना बहिणीत्यादेशो वा स्यात् । बहिणी । पक्षे भइणी ॥ वल्लीशब्दे 'उत्करवल्ली—' इत्यादिना अवर्णस्य एत्वम् । वेल्ली ॥ पृथिवीशब्दे 'मूषिकविभीतक—' इत्यादिना आदेरिवर्णस्यात्वम् । ऋत्यादिपाठादृवर्णस्योत्वम् । थस ढः । पुढई । 'ढः पृथिव्यौषधनिशीथे' इत्यादिना थस्य ढत्वे पुढई ॥ पृथ्वीशब्दे कृपादित्वादृत इत्वे 'त्यथ्यद्व्यां क्वचिच्छजझाः' इति सूत्रेण थ्यस्य यथाक्रमं छत्वे पिच्छी ॥ पिशाचीशब्दे 'प्रायो लुक्—' इति चलोपे प्राप्ते बहुलाधिकारात् क्वचिदन्यदेवेति वच-

---

१ °कुमार्यादिषु M. २ °सूत्रेण M. ३ इत्वे M., T. ४ पिट्ठी । M. ५ ऋतः अत्वे M., T. ६ My. and P. drop इति द्वयं सिद्धम्. ७ इत्यनुवर्तते । M. ८ °भवति । R., T. ९ कुरुअरी । कुरुअरा M., R. १० My. and P. give ऊरुद्दघी । ऊरुद्दघा after मात्रचोकारस्य एत्वम् । ११ सोवण्णेई M. १२ My., P., and T. drop अथ. १३ भवति M., My. and P. drop स्यात्. १४ M. has भगिनी after it. १५ M. drops ऋत्यादिपाठादृवर्णस्योत्वम् । १६ इत्वं च । T.

नाचस्य जः । पिसाजी ॥ हरीतकीशब्दे 'ईतः कास्मीर—' इत्यादिना आदेरीकारस्यात्वम् । प्रत्यादित्वात्तस्य वा डत्वम् । हरडई । डत्वाभावे[1] हरअई । अत्र[2] 'प्रायो लुक्—' इति तलोपः ॥ गुलूचीशब्दे मुकुलादिपाठा-[3] दादेरुतोत्वम् । 'ओलस्थूणातूण—' इत्यादिना ऊत ओत्वम् । गळोई ॥ भ्रुकुटीशब्दे 'रो भ्रुकुटीपुरुषयोः—' इत्यनेन रेफसंबन्धिन उकारस्येत्वं कलोपघस्य डत्वम् । भिउडी ॥ कूश्माण्डीशब्दे 'ओलस्थूणातूण—' इत्यादिना ऊत ओत्वे 'बाष्पे होश्रुणि' ईत्यतः[4] 'हः' इत्यधिकृत्य

कूश्माण्ड्यां ण्डश्च तु लः ॥ १ । ४ । ६४ ॥

अत्र युक्तस्य हः स्यात् तत्संनियोगेन ण्डस्य वा लः । कोहली । कोहण्डी ॥ ताम्बूलीशब्दे 'ओलूस्थूणा—' इत्यादिना ऊत ओत्वे 'स्वरस्य बिन्दुमि' इति ह्रस्वे तंबोली ॥ भागिनीशब्दे 'पुन्नागभागिनी–' इत्यादिना कोर्मत्वम् । भामिणी ॥ अतसीशब्दे 'दोहदप्रदीप—' इत्यादिना तस्य लत्वम् । अलसी ॥ कदलीशब्दे 'वेतस इति तोः' इत्यतैः[5] 'तोः इत्यधिकृत्य 'रल् सप्तत्यादौ' ईत्यतः[6] 'रल्' इति च

अद्रुमे कदल्याम् ॥ १ । ३ । ४३ ॥

अद्रुमवाचिनि कदलीशब्दे तोः रत्वं भवति । करळी । 'अद्रुमे' इति किम् । कअळी ॥ बिसिनीशब्दे 'बो वः' ईत्यतः[7] 'बः' इत्यनुवर्तते ।

बिसिन्यां भः ॥ १ । ३ । ६३ ॥

अत्र बस्य भो भवति । भिसिणी ॥ नीवीशब्दे 'नीवीस्वप्ने वा' इति वकारस्य वा मः । णीमी । पक्षे णीवी ॥ शमीशब्दे 'छल् षट्छमी' इत्यादिना शोश्छत्वम् । छमी ॥ वाराणसीशब्दे 'हृश्च महाराष्ट्रे ह्रोर्व्यत्ययः' इत्यतः 'व्यत्ययः' इत्यधिकृत्य

---

१ डत्वाभावे तलोपः । M., R., and T. २ M., R., and T. drop अत्र 'प्रायो लुक्–' इति तलोप.। ३ मुकुलादित्वादा° M. ४ इत्यधिकृत्य M., R., T. ५ इत्यधिकृत्य M. ६ इति न M. ७ इत्यनुवर्तते। M.

वाराणसीकरेण्वां रणोः ॥ १ । ४ । ११३ ॥

अत्र रेफणकारयोर्व्यत्ययः स्यात् । वाणारसी ॥ मनस्विनीशब्दे यक्रादौ मनस्विन्यादित्वाद् द्वितीयादचः परो बिन्दुः । वलोपे[1] मणंसिणी । समृद्ध्यादिपाठाद् विकल्पेन दीर्घे माणंसिणी । उभयत्र 'लवराम्—' इति वलोपः । शेषत्वेपि नात्र सकारस्य द्वित्वम् । अचः परत्वाभावात् । न चानुक्तमन्यन्यायेन विप्रतिषेधे परं कार्यमिति न्यायेन परत्वाद् द्वित्वमेव युक्तम् । सामान्यविशेषयोर्विशेषो बलवानिति न्यायात् । बहुलाधिकाराद्वा बिन्दुरेव पूर्वमित्यलमतिप्रपञ्चेन[2] ॥ तन्वीप्रभृतिषु 'क्ष्मारत्नेन्त्यहलः' इत्यतः[3] 'अन्त्यहलः' इत्यधिकृत्य 'अर्हत्यु च' इत्यतः 'उँ' इति च[4]

तन्व्याभे ॥ १ । ४ । १०६ ॥

उकारान्तात् ङीप्रत्ययान्ताः तन्व्याभाः तेषु संयुक्तस्यान्त्यहलः प्रागुत्वम् । तन्वी । तणुई । लघ्वी । लहुई । अत्र घस्य हत्वम् । गुर्वी । गरुई । [5]गुरुकुलादित्वादुत अत्वम् । बह्वी । बहुई । मृद्वी । मउई । [6]अत्र ऋतोत्वम् । पृथ्वी । पहुई । अत्रापि ऋतोत्वम् । थस्य हत्वम् । इत्याद्यूहनीयम्[7] ॥ उकारान्तः स्त्रीलिङ्गस्तनुशब्दः । 'नः' इति नस्य णत्वम् । तणू । 'शो शु स्त्रियां तु' इति जश्शसोरोदुतौ । तणूउ । तणूओ[8] । 'टाङिङसाम्' 'ङसेः श शा शि शे' । इत्यादि । रुचिवत् । एवं रज्जुधेनुप्रभृतयः ॥ ऊकारान्तः स्त्रीलिङ्गो जम्बूशब्दः । सौ जंबू । जसि जंबू । जंबूओ । जंबूउ । संबुद्धौ 'ह्रस्वलीदूतः' इति ह्रस्वः । दे जंबु । इत्यादि । गौरीवत् । एवं वधूचमूश्वश्रूयवागूप्रभृतयः[9] ॥ अलाबूशब्दे

---

१ M., R., and T. drop वलोपे. २ °मतिप्रपञ्चेन । My., P., R. ३ इत्यश्चिहल M. ४ उदिति च M. ५ M. has अत्र before गुरुकुलादित्वाद्. ६ My., P., T., and R. drop अत्र ऋतोत्वम्. ७ °हूनम् My., P., M. ८ तनूओ । तणुउ । M. ९ My., P., and M. drop श्वश्रूयवागू.

बालाव्वरण्ये ॥ १ । २ । ४ ॥

'लुगव्यय—' इत्यादिना लुगनुवर्तते । 'आदेः' इति च । अला-ब्वरण्ययोरादेरचो लुग्वा स्यात् । इत्यादेरचो वा लुक् । लाबू अलाबू ॥ भ्रूशब्दे 'स्वार्थे तु कश्च' इत्यतः 'स्वार्थे' इत्यधिकृत्य

डुमयडमयौल् भ्रुवः ॥ २ । १ । २५ ॥

भ्रूशब्दात् स्वार्थे उमय अमय इत्येतौ डितौ लितौ स्तः । रेफ-लोपः । भुमय भमय इति स्थिते अनुक्तमन्यन्यायेन टाप् । भुमया भमया । इत्यादि । जायावत् ॥ करेणुशब्दे 'वाराणसीकरेण्वां रणोः' इति रणोर्व्यत्ययः । कणेरू । 'करेण्वाम्' इति स्त्रीलिङ्गनिर्देशादन्यत्र न भवति । एसो करेणू । इदुतोरीदूतोरन्येषां च 'स्वार्थे तु कश्च' इति कप्रत्यये जायावद्रूपम् ॥ ऋकारान्तः स्त्रीलिङ्गो मातृशब्दः । 'आरः सुपि' इत्यतः 'सुपि' इत्यधिकृत्य

मातुरा आरा ॥ २ । २ । ५० ॥

बहुलाधिकाराज्जननीदेवतार्थयोर्मातृशब्दयोः क्रमात् आ आरा इत्येतावादेशौ भवतः सुपि परे ॥ माआ । माआरा । माआओ । मा-आरारो । इत्यादि । उभयत्र जायावत् ।

इदुन्मातुः ॥ १ । २ । ८३ ॥

'ऋतोत्' इत्यतः 'ऋतः' इत्यनुवर्तते । अत्र ऋत इदुतौ भवतः ॥ माई । माऊ । शेषमुभयत्र रुचिवत्तनुवच्च । सर्वत्र तलोपः । यद्यपि 'इदुन्मातुः' इत्यत्र 'गौणस्य' इत्यनुवर्तते तथापि क्वचिदगौणस्यापि भवतीति त्रिविक्रमदेवेन माईणमिति प्रदर्शनाद्बहुलाधिकारादगौण-

१ इत्यतो M., R., T. २ My., M., and P. drop इत्यादेरचो वा लुक् । ३ इत्यधिकृत्य M., R., T. ४ भवतः T. ५ इत्युभावादेशौ M. ६ इत्यनुवर्तते । M., R. ७ The portion from यद्यपि to मातृशब्दस्येदुतौ भवतः is omitted in R. and T. ८ °दगौणस्यापि हेमचन्द्रवचनादपि भवतीति शास्त्रान्तरेऽपि केवलस्य &c. M.

स्यापि भवतीति हेमचन्द्राचार्यवचनादपि केवलस्य मातृशब्दस्येदुतौ भवतः ॥ स्वसृशब्दस्य विशेषः ।

**स्वस्रादेर्डा ॥ २ । २ । ४१ ॥**

स्वसादेः स्त्रियां डाल् स्यात् । ससा । णणंदा ॥ दुहितृशब्दस्य '*स्त्रीभगिनी—*' *इत्यादिना वा दूआ इत्यादेशः* । दूआ । पक्षे दुहिआ । इत्यादि । जायावत् ॥ ओकारान्तः स्त्रीलिङ्गो द्योशब्दः । कप्रत्ययः । जोआ । जोआओ । जायावत् ॥ गोशब्दस्य 'गव्यउदाइत्' इति अउत्वे गऊ । आइत्वे गाई । इत्यादि । तनुवद्धेनुवच्च ॥ रैशब्दे कप्रत्ययः । 'ऐच एड्' । रेआ । रेआओ । जायावत् ॥ नौ शब्दे

**नाव्यावः ॥ १ । २ । १०५ ॥**

'ऐच एड्' इत्यतः 'ऐचः' इत्यनुवर्तते । अत्रैचः आव इत्यादेशो भवति । टाप् । णावा । इत्यादि । जायावत् ॥

इत्यजन्तस्त्रीलिङ्गाः ॥

---

## अथाजन्तनपुंसकलिङ्गाः ।

अकारान्तनपुंसकलिङ्गो वनशब्दः । वॅन सु इति स्थिते 'स्लुगनपि सोः' इत्यतः 'सोः' इत्यधिकृत्य

**मड्लुगसंबुद्धेर्नपः ॥ २ । २ । ३० ॥**

नपुंसकलिङ्गात् परस्य सोर्मकारो डानुनन्धो लुक् च भवति । असंबुद्धेरामन्त्रणार्थे न भवति । वॅणं । बहुलाधिकारादकारान्तेषु लुङ् न दृश्यते ॥ जश्शसोः

**श्निशिंशिङ्जश्शसोः ॥ २ । २ । ३१ ॥**

---

१ After this M. has टिति अकारो डित् स्यात्. २ The heading is dropped in P. and My. ३ °ल्गि: पुंस्कशब्द: M., R. ४ पुंस for वन M., R., T. ५ इत्यधिकृत्य M., R ६ R. drops च. ७ पुंसं T.

'नपः' इत्यनुवर्तते । नपुंसकलिङ्गात् परयोः जश्शसोः नि इं इ इति त्रय आदेशा भवन्ति । शानुबन्धत्वाद्दीर्घः । कुण्डाणि[1] । कुंडाइं । कुंडाइ । वेणानि । वणाइं । वणाइ । एवं शस्यपि ॥ अन्यत्र रामवत् । एवं सदनवदनप्रभृतयः ॥ सर्वादौ 'सर्वादेर्जसोतो डेत्' इत्यस्य पुँल्लिङ्ग-विषयत्वात् ञिर्शिशिड एव भवन्ति । सव्वं । सव्वाणि । सव्वाइं । सव्वाइ । इत्यादि । शेषं पुँल्लिङ्गसर्वशब्दवत् ।

अथ अकारान्तनपुंसकलिङ्गेषु विशेषाः प्रदर्श्यन्ते । पतिगृहम् । वेणुवनम् । शिलास्खलितम् । यमुनातटम् । वधूमुखम्—इत्यादिषु 'दिहौ मिथः से' इति दीर्घह्रस्वयोरन्योन्यादेशे । पईघरं । वेणूवणं । दीर्घस्य ह्रस्वः । सिळखलिअं । जँउणतडं । वहुमुहं । पक्षे । पइघरं वहूमुहं इत्यापि ॥ गुणदेवमण्डलाग्रकररुहवृक्षादीनां 'क्लीबे गुणगाः' इति यदा नपुं-सकता तदा वनवत् ॥ निर्माल्यशब्दे 'निष्प्रतीओत्—' इत्यादिना निरः ओ इत्यादेशः । 'सयोगे' इति ह्रस्वः । ओमल्लं ॥ अरण्यशब्दे 'वालाब्वरण्ये' इत्यादेरचो वा लुक् । रण्णं । अरण्णं ॥ पक्वललाटयोः । 'पक्वाङ्गारललाटे तु' इत्यवर्णस्य वा इत्वे । पिक्कं । पक्कं । ललाटे 'खोः फरवीरे णः' इत्यतः 'खोः' इत्यधिकृत्य

**लो ललाटे च ॥ १ । ३ । ८१ ॥**

अत्रादेर्लस्य णत्वं भवति । णिलाट इति स्थिते 'टो डः' इति टस्य डत्वे 'हश्च महाराष्ट्रे ह्रोर्व्यत्ययः' इत्यतः 'व्यत्ययः' इत्यधिकृत्य

**ललाटे डलोः ॥ १ । ४ । ११४ ॥**

अत्र डकारलकारयोर्व्यत्ययः स्यात् । णिडालं । इत्वाभावे णडालं ॥ द्वारशब्दे 'उत्करवल्ली—' इत्यादिना आदेरवर्णस्य वा एत्वे 'लव-राम्—' इति वलोपे । देरं । दारं । 'वा छद्म—' इत्यादिना वकारात्

---

१ कुण्डानि M., R. २ M., R., and T. drop वणानि । वणाइं । वणाइ । ३ M. drops शब्द. ४ °नपुंसके R., T. ५ जउणअडं M. ६ कुण्डवत् M., R., T. ७ इत्यधिकृत्य M., R. ८ इत्यधिकृत्य M., R., T.

प्रागुत्वे । दुवारं । तदैव च वलोपे । दुआरं । 'कग—' इति दलोपे । वारं । वेरमित्यपि ॥ आर्द्रशब्दे 'हे दक्षिणेस' इत्यतः 'अस' इत्यधिकृत्य

त्वार्द्रे उदोत् ॥ १ । २ । २७ ॥

आर्द्रशब्दे आदेरवर्णस्य उत्वमोत्वं च वा भवतः । आर्द्रं । उद्रं । ओद्रं । इति स्थिते 'लो वार्द्रे' 'स्तोः' इत्यनुवर्तते । अत्र स्तोर्लो वा स्यात् इति वा लत्वे रेफलोपे शेषस्य द्वित्वे 'संयोगे' इति ह्रस्वे चै । अल्लं । उल्लं । ओल्लं । लत्वाभावे । अद्दं । उद्दं । ओद्दं ॥ स्त्यानशब्दे 'ईल्खल्वाट—' इत्यादिना अकारस्य ईत्वम् । 'स्त्यानचतुर्थे—' इत्यादिना स्तस्य वा ठत्वम् । ठीणं । ठत्वाभावे 'स्त्योस्पन्दे' इत्यनुवर्तमाने एतत्सूत्रे चकारानुकृष्टं थत्वम् । थीणं । देवादित्वाद् द्वित्वे थिण्णं ॥ तालवृन्ते उत्खातादिपाठादाकारस्य विकल्पेन ह्रस्वे तलवृन्त तालवृन्त इति स्थिते 'ऋतोत्' इत्यधिकृत्य

वृन्त इदेङ् ॥ १ । २ । ८७ ॥

अत्र ऋत इदेतौ वा भवतः । 'टल् त्रसरवृन्त—' इत्यादिना तस्य टत्वम् । तलविंटं । तलवेंटं । तालविंटं । तालवेंटं ॥ 'संयोगे' इत्यधिकृत्य

त्वेदितः ॥ १ । २ । ४१ ॥

इत आदेरिकारस्य संयोगे परे वा एकारः स्यात् । धेम्मेल्लं । धम्मिल्लं । सेंदूरं । सिंदूरं । पेंडं । पिंडं । इत्यादि ॥ क्षुतशब्दे 'स्वदुत उपरि गुरुके' इत्यतः 'उतः' इत्यधिकृत्य

क्षुत ईत् ॥ १ । २ । ६१ ॥

---

१ इत्यधिकृत्य M., R. २ आर्द्रं M. ३ उद्रं M. ४ ओद्रं M. ५ M. and R. drop च ६ तालविंटं is dropped in P., R., T., My. ७ धमेंग । धमिंग My. ८ क्षुते M. ९ इत्यधिकृत्य M.

अत्रोत ईत्वं[1] भवति । स्पृहादित्वात् क्षस्य छः । छीअं[3] ॥ 'सूक्ष्मे-द्वोतः' ईत्यतः 'ऊतः' इत्यधिकृत्य

अल् दुकूले ॥ १ । २ । ६८ ॥

अत्र ऊतः अलित्यादेशो वा । लकारो नानुबन्धः । कलोपः । दुअल्लं । अत्रादेशलकारस्वभावलकारयोर्मेलनाद् द्वित्वम् । पक्षे दुऊलं ॥ 'उलकण्डूय—' इत्यतः 'उल्' इत्यनुवर्तमाने 'ऊतः' इति च

वा मधूके ॥ १ । २ । ७१ ॥

अत्र ऊत उत्वं वा स्यात् । धस्य हः । महुअं । पक्षे महूअं ।

इदेन्नूपुरे ॥ १ । २ । ७२ ॥

'ऊतः' इत्यनुवर्तते । अत्र ऊत इदेतौ वा भवतः । णिउरं । णेउरं । पक्षे णोउरं । अत्र सर्वत्र पलोपः ॥ 'ऋतोत्' ईत्यतः 'ऋतः' इत्यधिकृत्य 'उद्वृषभे वुः' इत्यतः 'उत्' इति च

गौणान्त्यस्य ॥ १ । २ । ८२ ॥

गौणपदस्य योन्त्य ऋत् तस्य उद्भवति । मातृमुदितम् । माउ-मुइअं । मातृगृहम् । माउघरं । पितृकुलम् । पिउकुळं । इत्यादि ॥ लवणशब्दे 'तु मयूर—' इत्यादिना आदेरचः परेण साज्झला सह वा ओत्वे लोणं । लवणं ॥ उलूखलेऽपि पूर्ववत् । ओहलो । उऊहळं ॥ मृदुत्वशब्दे 'कः शक्त—' इत्यादिना युक्तस्य वा कत्वे 'ऋतोत्' इत्यतः 'ऋतः' इत्यधिकृत्य

आद्वा मृदुत्वमृदुककृशासु ॥ १ । २ । ७५ ॥

---

१ ईद्वा स्यात् R., T. २ संयुक्तस्य छत्वम् for क्षस्य छः । R. ३ R. and T. have पक्षे छुअं after it. ४ इत्यनुवर्तमाने M. ५ वा स्यात् M. ६ M. drops पक्षे. ७ M. and R. drop पक्षे णोउरं. ८ इत्य-धिकृत्य M., R. ९ माउमुइअं । मातृमुदितम् । माउघरं । मातृगृहम् । पिउ-कुळं । पितृकुलम् । My., P. १० M. has बहुलम् after पूर्ववत्. ११ मृदुत्वेM., R., T. १२ इत्यधिकृत्य M.

एषु ऋत आद्वा स्यात् । इत्यतो वा आत्वे माउक्कं । पक्षे अत्वम् । मउक्कं । कत्वाभावे ‘त्वस्य तु डिमात्तणौ’ इति त्वस्य वा तणादेशे । माउत्तणं । मउत्तणं । तणाभावे । माउत्तं । मउत्तं । अत्र सर्वत्र दलोपः ॥ पत्तनशब्दे ‘प्रवृत्तसंदष्ट—’ इत्यादिना स्तोष्टत्वम् । पट्टणं ॥ प्रवृत्तशब्दे पूर्वसूत्रेणैव स्तोष्टत्वम् । पवट्टं । अत्र ‘ऋतोत्’ इत्यत्वं च । आश्चर्यशब्दे ‘र्यः सौकुमार्य—’ इत्यादिना ‘र्यः’ इत्यनुवर्तमाने

अररिअरिज्जमाश्चर्ये ॥ १ । ४ । ५६ ॥

अत्र र्यस्य अर रिअ रिज्ज इति त्रय आदेशा भवन्ति । अच्छअरं । अच्छरिअं । अच्छरिज्जं ॥ श्मशानशब्दे ‘शोर्लुक् खोः—’इत्यादिना शोर्लोपे । मसाणं ॥ सरोरुहशब्दे ‘त्वत्सरोरुह—’इत्यादिना एचो वा अत्वम् । सररुहं । सरोरुहं ॥ अन्योन्यशब्देऽप्येवम् । अण्णण्णं । अण्णोण्णं ॥ कालायसकिसलयहृदयशब्देषु ‘ज्योर्दनुज—’इत्यादिना यकारस्य साच्कस्य वा लोपे । कालासं । कालअसं । किसलं । किसलअं । हिअं । हिअअं ॥ चत्वरशब्दे ‘चः कृत्तिचत्वरे’ इति स्तोश्चत्वम् । चच्चरं ॥ सैन्यशब्दे ‘चपेटकेसरदेवर—’ इत्यादिना एचो वा इत्वम् । सिण्णं । सेण्णं । दैवादिपाठात् सइण्णं ॥ चिह्नशब्दे ‘वा न्तन्धौ मन्युचिह्नयोः’ इत्यनेन वा न्धादेशे । चिन्धं । पक्षे ‘श्नष्ण—’इत्यादिना ण्हादेशे । चिण्हं । इन्धं । इण्हं । इत्यप्यस्ति । बहुलाधिकारात् क्वचिदादेरपि चस्य लोपः ॥ मलिनशब्दे[13] ‘मलिनधृति—’इत्यादिना मलिनशब्दस्य वा मइलादेशे । मइलं । पक्षे मलिणं ॥ वैडूर्यशब्दे[14] अनेनैव

१ इत्यनुवर्तते M., R. २ राजकुलभाजनकालायस° R., T. ३ °हृदयेषु M., R. ४ M. has अत्र before ‘ज्योर्दनुज°. ५ After this R. has कयोर्वा लोपे राउरं । राअउरं । भाणं । भाअणं. ६ चत्वरे M., R. ७ श्चत्वम् M. ८ ‘केसर—’ इत्यादिना M. ९ इत्वम् M. १० ण्हादेशः M., T. ११ अत्र बहुला° T. १२ M. and T. have अतो इह before क्वचिदादेरपि. १३ T. has वैडूर्यशब्दे च after this. १४ T. drops वैडूर्यशब्दे; M. has वैडूर्यशब्दस्य. १५ M. drops अनेनैव.

वेरुलि आदेशे[1] वेरुलिअं। पक्षे वेडुज्जं। इत्यादूह्यनीयम्[2]॥ आकारान्तनपुंसकलिङ्गः सोमपाशब्दः। 'क्विपः' इति ह्रस्वः। शेषं पुंलिङ्गसोमपाशब्दवत्॥ इकारान्तनपुंसकलिङ्गो दधिशब्दः। दधि सु इति स्थिते 'मड्लुगसंबुद्धेर्नपः' इत्यनेन सोर्मड्लुक् च। ङित्वात् सानुनासिक उच्चारः। दहिं। दहिँ। सिद्धावस्थापेक्षया दहि इत्यपि भवति। जश्शसोश्शिशिमादयः। दहीणि। दहीइं। दहीइँ। दे दहि। इत्यादि। शेषं पुंलिङ्गकविवत्। एवं वारिप्रभृतयः॥ अस्थिशब्दे 'विसंस्थुलास्थि—'इत्यादिना युक्तस्य ट्ठत्वम्। वक्रादित्वाद् बिन्दुः[3]। अंठिं। अन्यत्र दधिवत्॥ अक्षिशब्दस्य स्पृहादित्वात् क्षस्य च्छत्वम्। अच्छिं। दधिवत्॥ द्वित्रिशब्दयोर्लिङ्गत्रयेपि समानं रूपम्॥ ग्रामणीशब्दे 'क्विपः' इति ह्रस्वः। गामणिं। इत्यादि। दधिवत्॥ उकारान्तनपुंसकलिङ्गो मधुशब्दः। प्रथमाद्वितीययोर्दधिवत्। सिद्धावस्थापेक्षया महु इति च भवति[4]। अन्यत्र पुंलिङ्गकारुवत्॥ विंदशब्दस्य गुणादिपाठात् 'क्लीबे गुणगाः' इति वा नपुंसकत्वे[5] मधुवत्[6]॥ श्मश्रुशब्दे 'शोर्लुक्खोः—' इत्यादिना शोर्लुक्। वक्रादित्वाद्बिन्दुः[7]। मंसुं। इत्यादि मधुवत्॥ खलपूशब्दे ह्रस्वः। खलवुं। श्शिमादौ पुनर्दीर्घः। खलवूनि इत्यादि मधुवत्। एवं काण्डलूप्रभृतयः॥ ऋकारान्तनपुंसकलिङ्गः कर्तृशब्दः। 'आरः सुपि' इत्यारादेशः। कत्तारं। कत्ताराणि इत्याद्यारादेशे कुण्डवत्। 'उदृतां त्वस्वमामि' इत्युत्वे कत्तूनि इत्याद्युत्वपक्षे मधुवत्। स्वमामि तु आर एव॥ ओकारान्तनपुंसकलिङ्ग उपगोशब्दः। सिद्धावस्थापक्षेया उवउ। उवअं। इत्यादि मधुवत्॥ ऐकारान्तनपुंसकलिङ्गोतिरैशब्दः। अनुक्तमन्यन्यायेन। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'एच इग्घ्रस्वादेशे' इति एच इक्। तलोपः। अइरिं। अइरीणि।

---

१ T. has वेडूर्यस्य after आदेशे. २ °धूह्यम् M., R., T. ३ M. and R. drop वक्रादित्वाद्बिन्दुः. ४ दृश्यते R. ५ M. and R. drop क्लीबे गुणगाः. ६ M. and R. have बिन्दु इत्यादि before मधुवत्. ७ M. has आदिस्वरात् before बिन्दुः.

इत्यादि दधिवत् ॥ गोशब्दस्य साध्यावस्थापेक्षया अउ आइ इत्यादे-[1] शयोः उँवगउं[2] । उवगाइं[3] । इत्यादि मधुवद्दधिवच्च ॥ औकारान्तनपुंसकलिङ्गोतिनौ शब्दः । अनुक्तमन्यन्यायेन ह्रस्वादि पूर्ववत्तलोपः । अँइणुं[4] । इत्यादि । पक्षे 'नाव्याव:' इत्यावादेशे अइणावं अइणावाणि । इत्यादि कुण्डवत् ॥

## इत्यजन्ता नपुंसकलिङ्गाः ॥

क्तप्रत्ययान्ते विशेषः । 'अदेल्लुक्यादेरोरतः' इत्यतः[5] 'अतः' इत्यधिकृत्य 'मोममुण्विच' इत्यतः[6] 'इत्' इति च

क्ते ॥ २ । ४ । १७ ॥

क्तप्रत्यये परे अत इत्वं स्यात् । हसिअं । पढिढिअं[7] । इत्यादि । णअं गअं इत्यादि[8] तु सिद्धावस्थापेक्षया[9] । अत इत्येव । जाअं । लूअं । भूअं । इत्याद्यूह्यम् ॥ ण्यन्तक्ते तु

लुगाविल्भावकर्मक्ते ॥ २ । ४ । १३ ॥

'णिजदेदावावे' इत्यतः 'णिच्' अनुवर्तते । भावकर्मविहिते[10] क्तप्रत्यये परे णिचो वा लुक् आविलित्यादेशश्च वा भवति । लिखानिलम् ।[11] कारिअं । काराविअं । हासिअं । हासाविअं । इत्याद्यूह्यम्[12] ॥

## अथ हलन्ताः ॥

हकारान्तः पुंलिङ्गी गोधुक्शब्दः । गोदुह् सु इति स्थिते

---

१ इत्यादेशे M. २ उवगइ before उवगउं M. ३ उवगाइ after उवगाइं M. ४ M. has अइणु after this. ५ इत्यधिकृत्य M., R., T. ६ इति च M. ७ इत् R., T. ८ पढिअं । कारिअं M., T. ९ इत्यादिषु M. १० सिद्धावस्थाया for सिद्धावस्थापेक्षया R , T. ११ भावकर्मविहिते is dropped in P. and My. १२ °लादेशं वाप्नोति M, T. °लादेशो चानाप्नोतिः R. १३ °ह्यम् P., My.

हलोक् ॥ २ । ४ । ६९ ॥

धातोरन्त्यस्य[1] हलः परः[2] अगागमः स्यात् । इत्यगागमे । गोदुहो । गोदुहा । इत्यादि । रामवत् । एवमनडुह्प्रभृतयः[3] ॥ यकारान्तोप्रसिद्धः । वकारान्तः पुंलिङ्गो सुदिव्शब्दः । वकारस्य 'अन्त्यहलोश्रदुदि' इति लोपः । धातुत्वाभावादगागमो न भवति । कप्रत्ययः । सुदिओ । सुदिआ । इत्यादि । रामवत् । भिस्भ्यस्सुप्सु 'दिव उत्' इत्युत्वे कृते[4] सिद्धावस्थापेक्षया सुद्यु इत्यस्य द्यस्य 'र्यो जः' इति जत्वे[5] । सुज्जूहिं । सुज्जूसुंतो । सुज्जूसुं । इत्यादि । कारुवत् । अत्र धातुत्वाधातुत्वविवेकस्तु प्रायौगिकः । धातुत्वपक्षे[6] अगागमः । अन्यत्र कप्रत्ययः ॥ रेफान्तः पुंलिङ्गः सुगिर्शब्दः । अगागमः । सुगिरो । सुगिरा । इत्यादि रामवत् । एवं सुधुर्सुपुर्प्रभृतयः ॥ चतुर्शब्दस्य

चतुरो जश्शस्भ्यां चउरो चत्तारो चत्तारि ॥ २ । ३ । २८ ॥

चतुर्शब्दस्य[7] जश्शस्भ्यां सह चउरो चत्तारो चत्तारि इति त्रय आदेशा भवन्ति । जसि चउरो चत्तारो चत्तारि । शसि तान्येव । अन्यत्र भिसादिष्वन्त्यहलो लोपे 'भिस्भ्यः सुपि' इत्यधिकृत्य 'इदुतोर्दि' इत्यतो 'दि' इति च

चतुरो वा ॥ २ । २ । २३ ॥

उदन्तस्य चतुर्शब्दस्य भिस् भ्यस् सुपि परे वा दीर्घः स्यात् । चउहिं । चऊहिं । चउहिंतो । चऊहिंतो । एवं त्तो दो दवः सुंतो च । चउसु । चऊसु । इत्यादि । आमि 'ण्हण्हं संख्याया—' इत्यादिना ण्हण्हं । चउण्ह[8] । चउण्हं । शेषं कारुवत् ॥ मकारान्तः पुंलिङ्गः प्रशाम्शब्दः । 'हलोक्' इत्यगागमः । शोः सत्वम् । पसामो । पसामा ।

---

१ °रन्त्यहलः R., T. २ परे T. ३ °शब्दः T. ४ कृते is dropped in T., My., P. ५ जत्वे कृते M. ६ M. omits धातुत्वपक्षे—कप्रत्ययः । ७ M. omits चतुर्शब्दस्य. ८ चउण्हं चउण्ह M.

इत्यादि । रामवत् । एवं प्रतामादयः ॥ किंशब्दस्य तु भेदः । 'क्वचित्सुपि तदो णः' इत्यतः 'सुपि' इत्यधिकृत्य[1]

**त्रतसि च किमो रकः ॥ २ । २ । ७५ ॥**

किंशब्दस्य त्रतसोः सुपि च परे क इत्यादेशो लित् स्यात् । 'सोः' इत्योत्वम् । को । सर्वनामत्वाज्जस एत्वम् । के । शसि सर्ववत् । टा

**इदमेतत्कियत्तद्भ्यष्टो डिणा[2] ॥ २ । २ । ७३ ॥**

'अनिदमेतदस्तु कियत्तद्भ्यः स्त्रियामपि हिं' इत्यतो मण्डूकप्लुतिन्यायेन 'तु' इत्यनुवर्तते[3] । एभ्यः सर्वादिभ्योदन्तेभ्यः परस्य टावचनस्य इणा इति डिद्वा स्यात् । किणा । केण । केणं । भिसि सर्ववत् । ङसौ

**म्हा ङसेः ॥ २ । २ । ७० ॥**

'अनिदमेतद्—' इत्यादेः 'कियत्तद्भ्यः' इत्यनुवर्तते 'तु' इति च । कियत्तद्भ्यः परस्य ङसेः म्हा इत्यादेशो वा स्यात् । कम्हा । पक्षे सर्ववत् ।

*किमो डीसडिणो ॥ २ । २ । ७१ ॥*

'ङसेः' इत्यनुवर्तते । किमः परस्य ङसेः ईस इणो इत्यादेशौ डितौ वा भवतः । कीस । किणो । पक्षे सर्ववत् । ङसि 'कियत्तद्भ्यः सश्' इत्यतः 'सश्' इत्यधिकृत्य

**कियत्तद्भ्यो ङैस् ॥ २ । २ । ६७ ॥**

ङैस् इति विभक्तिव्यत्ययेन षष्ठी । एभ्यः परस्य ङसः सश् वा भवति[4] । कास । पक्षे कस्स । आमि 'आमां डेसिं' इति वा डेसिमादेशः । केसिं । पक्षे

**कियत्तद्भ्यः सश् ॥ २ । २ । ६६ ॥**

---

१ इत्यधिकृत्य M., R., T. २ डिणा M. ३ इत्यनुवर्तमाने My., P. ४ भवति M. ५ ङसी M. ६ ङसी M. ७ स्यात् M., R. ८ शसी M.

'आमां' इत्यनुवर्तते। एभ्यः परस्य आमः शित् सकारो वा स्यात्। कास। पक्षे सर्ववत्। काणं। काण। ङौ 'ङेस्त्थस्सिम्मि'। कत्थ। कस्सिं। कंमि। 'अनिदमेतद्—' इत्यादिना वा हिं च। कहिं। ङावेव विशेषः।

ङिरिआडाहेडाला काले ॥ २ । २ । ६९ ॥

कियत्तद्भ्यः परो ङिः इआ इत्यादेशं आहे आला इत्येतौ डितौ चापद्यते वा कालेभिधेये। कइआ। काहे। काला। कदेत्यर्थः। एवं यत्तदोरप्येते आदेशाः कालेभिधेये। शेषं सर्ववत्॥ इदंशब्दस्य तु इदम् स् इति स्थिते 'कचित् सुपि तदो णः' इत्यतः 'सुपि' इत्यधिकृत्य

इदम इमः ॥ २ । २ । ७६ ॥

इदंशब्दस्य इम इत्यादेशो भवति सुपि परे। इमो॥

पुंसि सुना त्वयं स्त्रियामिमिआ ॥ २ । २ । ७७ ॥

'इदमः' इत्यनुवर्तते। इदमः सुना सहितस्य पुंलिङ्गे अयमिति स्त्रीलिङ्गे इमिआ इति वा भवति। अयं। यद्यप्येतद्रूपं सिद्धावस्थापेक्षयापि भवति तथापि इमिआर्थं वचनम्। जसि सर्ववत्। इमे। द्वितीयातृतीययोः

टासशि णः ॥ २ । २ । ७९ ॥

'इदमः' इत्यनुवर्तते। टाम् तृतीया अमु द्वितीया तयोः परयोरिदमो ण इत्यादेशो वा स्यात्। अमि णं। पक्षे इमं।

ङेहेणं स्यमा ॥ २ । २ । ८० ॥

'इदमः' इत्यनुवर्तते। ङि अम् इत्येताभ्यां सहितस्येदमः स्थाने इह इणं इत्येतौ क्रमेण भवतः। इणं। 'शस्येत्' इति वा एत्। णे। णो। शसः स्लुक्। इमे। इमा। टा। एणं। णेण। पक्षे। इमेणं।

१ काण। काणं M. २ कालेभिधीयते M. ३ इत्यधिकृत्य M., R. ४ अमि R. ५ क्रमेण तु भवतः R., T.; क्रमेण स्तः My.

इमेण । अत्र 'टो डेणल्' इत्येणादेशः । 'इदमेतत्—' इत्यादिना टो डिणा च । इमिणा । भिसि । णेहिं । इमेहि । इत्यादि । रामवत् ।

**अत्सुस्सिंहिस्से ॥ २ । २ । ७८ ॥**

'इदमः' इत्यनुवर्तते । इदमः सुप् ङि भिस् ङस् एतेषु सु स्सिं हि स्स इत्यादेशानापन्नेषु अत्वं वा स्यात् । इति इदमः सर्वस्यात्वे 'भिस्भ्यस्सुपि' इत्येत्वे । एहि इत्यपि । अत्र सूत्रे 'हि' इत्यनेन भिस्भ्यसोरादेशस्य हेर्ग्रहणम् । तेनोभयत्राप्यत्वम् । ङसाविमादेशे । इमाहितो । इत्यादि । रामवत् । भ्यसि । इसोहितो । इमाहितो । इत्यादि । रामवत् । अत्रैव 'ङसिसो हि' इत्यादेशे तस्मिन्निदमः अत्वे भ्यसि । एहि । आहि । ङसि अस्स । इमस्स ॥

**तदिदमेतदां सेसिं तु ङसामा ॥ २ । २ । ८४ ॥**

ऐषां स्थाने ङस् आम् इत्येताभ्यां सह से सिं इत्यादेशौ यथासंख्यं वा भवतः । ङसि । से । आमि । सिं । इमेसिं । इमाणं । इमाण । ङौ

**न त्थः ॥ २ । २ । ८१ ॥**

'इदमः' इत्यनुवर्तते । इदमः परस्य ङेः 'ङेस्थस्सिम्मि' इति प्राप्तः त्थो न भवति । अस्सिं । इमस्सिं । इमम्मि । इह सुपि ऐत् । एसुं । एसु । इमेसुं । इमेसु । सुपि इदमो णादेश इति केचित् । णेसुं । णेसु ॥ ङकारान्तोप्रसिद्धः ॥ णँकारान्तः पुंलिङ्गः सुगण्शब्दः । अगागमः । सुगणो । सुगणा । इत्यादि । रामवत् । एवं सुपर्ण् सुरण्प्रभृतयः ॥ नकारान्तः पुंलिङ्गो राजन्शब्दः । राजन् सु इति स्थिते 'अन्त्यहलोश्रदुदि' इति नलोपे 'आ सौ वा' इत्यधिकृत्य

---

१ तु for वा M.; भवति for स्यात् R., T. २ एतेषां R., T. ३ तु for वा M., R., T.; स्तः for भवतः My., P. ४ स्यात् P.; My. ५ एत्वे M. ६ णकारान्तपुलि° R. ७ पुंलिङ्गसुगण्° M., R. ८ सुभण् M., T.

**राज्ञः ॥ २ । २ । ५३ ॥**

राजन्शब्दस्य नलोपे सत्यन्त्यस्य सौ परे आत्वं वा स्यात् । राआ । पक्षे

**पुंस्याणो राजवच्चानः ॥ २ । २ । ६० ॥**

पुंलिङ्गे वर्तमानस्य अन् इत्यस्य स्थाने आण इत्यादेशो वा स्यात् राजवत्कार्यं च यथादर्शनम् । 'टोणा' 'जश्शस्ङसिङसां णोश्' इति च[1] भवति । अत्राणादेश एव अन्यत्राणादेशो राजवत् कार्यं च । आणादेशे च 'सोः' इत्यादयः प्रवर्तन्ते । राआणो । जसि 'आ सौ वा' इत्यतः 'वा' इत्यधिकृत्य[2]

**जश्शस्ङसिङसां णोश् ॥ २ । २ । ५५ ॥**

राज्ञः[3] परेषामेषां[4] णोशे[5] वा स्यात् । राजन् णो इति स्थिते

**णोणाङिष्विदना जः ॥ २ । २ । ५६ ॥**

'वा' इत्यनुवर्तते । राजन्शब्द[6]संबन्धिनो जस्य अनासहितस्य णो णा इत्यादेशयोः ङि[7] वचने च परे इकारो वा स्यात् । इतीत्वे । राइणो । इत्वाभावे । राआणाणो । राआणो । णो शभावे । राआ । आणादेशे । राआणा । संबुद्धौ । हे राआ । हे राअ । हे राओ । हे राआणो । अमि

**इणममामा ॥ २ । २ । ५७ ॥**

अनाज इत्यनुवर्तते । राजन्शब्द[8]संबन्धिनो जस्य अनासहितस्य अम् आम् इत्येताभ्यां सहितस्य इणमित्यादेशो वा स्यात् ॥ राइणं । पक्षे । राअं । आणादेशे[9] । राआणं । शसि । राआणाणो । राआणो । राइणो । राआणा । 'शस्येत्' । राआणे । राआ ॥

---

१ च is omitted in My. २ इत्यधिकृत्य M., R. ३ M. and R. have 'राज्ञ.' इत्यनुवर्तते before it. ४ °मेतेषा M. ५ शित् णो वा स्यात् M., R., T. ६ My. and P. drop शब्द. ७ ङौ च My., P. ८ M. drops शब्द. ९ णाआदेशे M.

टो णा ॥ २ । २ । ५४ ॥

राजन्शब्दात् परस्य टा इत्यस्य णा इत्यादेशो वा स्यात् । 'णो-णाङिषु—' इत्यादिना वा इत्वे । राइणा । पक्षे ।

ङस्ङसिटां णोणोर्डण् ॥ २ । २ । ५९ ॥

राजन्शब्दस्यानासहितस्य जस्य ङस् ङसि टा वचनानां यौ णोणा इत्यादेशौ तयोः परयोः डैण् इत्यादेशो वा स्यात् । टिलोपः । *रण्णा । नजयोर्लोपे । राएणं । राएण । आणादेशे । राआणेणं ।* राआणेण । भिसि

भिस्भ्यसांसुप्स्वीत् ॥ २ । २ । ५८ ॥

'राज्ञः' इत्यनुवर्तते । राजन्शब्दस्यानासहितस्य जस्य भिस्भ्यस् आम् सुप् इत्येतेषु परेषु ईकारो वा स्यात् । राईहि । इत्यादि । ईत्वाभावे नजयोर्लोपे । राएहिं । इत्यादि । आणादेशे । राआणेहि । इत्यादि । ङसौ णोश् । ईल् । डण् । राआणाणो । राइणो । रणो । पक्षे । राआहितो । इत्यादि । आणादेशे । राआणाहितो । इत्यादि । भ्यसि आणादेशे । राआणासुंतो । इत्यादि । रामवत् । नजयो-र्लोपे । राआहिंतो । राएहितो । राईहितो । इत्यादि । रामवत् । ङसि । राइणो । रण्णो । राआणाणो । राआणो । राअस्स । राआणस्स । आमि । राईणं । राईण । आणादेशे । *राआणाणं । राआणाण ॥* पक्षे । राआणं । राआण । ङौ । इत्वे । राइम्मि । पक्षे । राअम्मि । आणादेशे । राआणे । राआणम्मि । पक्षे । राए । सुपि । राईसुं । *राईसु । राएसुं । राएसु । राआणेसुं । राआणेसु ॥ आत्मन्शब्दस्यान्त्य-*हलो लुक् । आत्म सु इति स्थिते 'स्तोः' इत्यधिकृत्य

वात्मभस्मनि पः ॥ १ । ४ । ४२ ॥

आत्म भस्म अनयोः स्तोः पो वा स्यात् । अप्पा । पक्षे । "मम-

---

१ राज्ञोना° M. २ My. drops यौ. ३ ङित् अण् M. ४ भवति M., T. ५ इत M., T.

याम्—' इति मलोपे शेषद्वित्वे अत्ता । अत्र राजवदित्यतिदेशात् 'आ सौ वा' इत्यनुवर्तमाने राज्ञ इत्यात्वं विकल्पेन भवति । पक्षे । अप्पो । अत्तो । 'पुंस्याणो राजवच्चानः' इत्याणादेशे राजवत्कार्यं च । अप्पाणो । अत्ताणो । जसि । 'जश्शस्ङसिङसां णोश्' । अप्पाणो । अप्पा । आणादेशे । अप्पाणा । संबुद्धौ । दे अप्प । दे अप्पा । दे अप्पो । दे अप्पाण । जसि । तान्येव । अमि । अप्पं । अप्पाणं । शसि । अप्पादेशे [1]आणादेशे च रामवत् । टा

**टो वात्मनो णिआणइआ ॥ २ । २ । ६१ ॥**

आत्मनः परस्य टावचनस्य णिआ णइआ इत्यादेशौ वा स्तेः[2] । अप्पणिआ । अप्पणइआ । अयमेव विशेषः । [3]इतरत् [4]सर्वमाणादेशे अप्पादेशे च [5]रामवद्रूपम् । एवम[6]त्तशब्दोपि ॥ युवन्शब्दस्य जुवाणो । जुवा । जुवो ॥ पूषन्श[7]ब्दस्य पू[8]साणो । पूसा । पूसो ॥ तक्षन् । क्ष्वेडकादित्वात् क्षस्य खः । तक्खाणो । तक्खा । तक्खो ॥ मूर्धन्शब्दस्य रेफलोपह्रस्वौ । वक्रादित्वाद्बिन्दुः । मुंधाणो । मुंधा । मुंधो । 'ढोर्धर्द्धि—' इत्यादिना स्तोर्ढत्वे । मुंढाणो । इत्याद्यपि ॥ श्वन्शब्दस्य साणो । सा । इत्यादि ॥ सुकर्मन्शब्दस्य सुकम्माणो । [10]सुकम्मो । इत्यादि । [11]एतेषामात्मशब्दवत् प्रक्रिया । अन्येषां नपुंसकलिङ्गानामपि नकारान्तानाम्

**स्नमदामशिरोनभो नरि ॥ १ । १ । ४९ ॥**

सान्तं नान्तं च यच्छब्दरूपं तन्नरि पुंलिङ्गे प्रयोक्तव्यं दामन्

---

१ आणादेशे च is omitted in M. २ भवतः M. ३ अन्यत् R., T. ४ सर्वं रामवद्रूपम् R., T. ५ रामवद्रूपम् is dropped in R., T. ६ °मुत्तर for मत्त My.; °मत्ता M.; °मुत्ता R; °मंता T. ७ शब्दस्य is dropped in M., R., T. ८ पूसानो M. ९ सासो M. १० M. has सुकम्मा before it. ११ एतेषाम् is dropped in M., My., P.

शिरस् नभस् एतान् वर्जयित्वा । इति पुंलिङ्गतायां कर्मन् कम्मो नर्मन् नम्मो इत्यादि । रामवत् । जन्मन्शब्दस्य

तु सक्खिणभवंतजम्मणमहंताः ॥ १ । १ । ३७ ॥

साक्ष्यादयः शब्दाः विहितान्त्यव्यञ्जनादेशा वा निपात्यन्ते । इति[1] निपातात् जम्मणो । पक्षे । जम्मो ॥ भसन्शब्दे 'वात्मभसनि पः' इति स्तोर्वा पः । भप्पो । पत्वाभावे 'मनयाम्' इति मलोपे शेषद्वित्वे च[2] भस्सो ॥ छद्मन्शब्दे 'वा च्छद्म—' इत्यादिना अन्त्यहलः प्रागुत्वे । छउमो । पक्षे । छम्मो । उभयत्रान्त्यहलो लोपः दलोपश्च ॥ श्लेष्मन्शब्दे 'श्लेष्मबृहस्पतौ तु फोः' इति द्वितीयस्य स्तोः फत्वे । सेफो । सिलेह्मो । अत्र 'लादक्लीबेषु' इति संयुक्तस्यान्त्यहलः प्रागित्वम् । 'श्मष्म—' इत्यादिना ह्मादेशः । इन्नन्तेषु सर्वत्र नलोपे कविशब्दवत् । करी । करिणो । इत्यादि । मनस्विन्शब्दे वक्रादिपाठाद् द्वितीयादचः परो बिन्दुः । मणंसी ॥ साक्षिन्शब्दस्य 'तु सक्खिण—' इत्यादिना निपातनात् सक्खिणो । पक्षे । सक्खी ॥ पथिन्शब्दस्य 'मूषिकविभीतक—' इत्यादिना इतः अत्वम् । अन्त्यहलो लोपः । थस्य हत्वम् । पहो । पहा । इत्यादि । रामवत् ॥ झकारान्तोप्रसिद्धः ॥ भकारान्तः पुँल्लिङ्गः सुककुप्शब्दः ।

हः क्षुत्ककुभि ॥ १ । १ । ३१ ॥

'अन्त्यहलोश्रदुदि' इत्यतः 'अन्त्यहलः' इत्यनुवर्तते[3] । क्षुत्ककुभोरन्त्यहलो हकारो भवति । लोपापवादः । सुक्कुहो । सुक्कुहा । इत्यादि । रामवत् ॥ घढान्तावप्रसिद्धौ । धकारान्तः पुँल्लिङ्गः तत्त्वबुत्शब्दः । अगागमः । तत्तवुहो[4] । तत्तवुहा । इत्यादि । रामवत् । एवं सुयुत्सुसमित्प्रभृतयः ॥ जकारान्तः पुँल्लिङ्गो विश्वसृक्शब्दः ।

---

१ इति निपातात् is dropped in My., P. २ शेषद्वित्वे च is dropped in M., T. ३ इत्यनुवर्तते M. ४ M. drops तत्तवुहो.

अगागमः। वलोपः। 'शोल्लुस—' इति दीर्घः। 'ऋतोत्' इत्यत्वम्। वीससओ। वीससआ। एवं हुतभुगादयः[1]॥ भिषक्शब्दस्य

शरदामत्॥ १। १। ३६॥

शरत्प्रकाराणामन्त्यहलः अत्वं भवति लिङ्गानित्यम्। इति शरत्प्रकारत्वादत्वम्[2]। भिसओ। भिसआ। इत्यादि। बगडान्ता अप्रसिद्धाः। दकारान्तः पुँल्लिङ्गो वेदविच्छब्दः। अगागमः। वेदविदो। वेदविदा। इत्यादि[3]। एवं तत्त्वविदादयः। यच्छब्दस्य तु भेदः। अन्त्यहलो लोपः। अत्वम्। जो। जसि। जे। अमि। जं। शसि। जे। जा। शसेत्वं श्लुक् च। 'इदमेतद्—' इत्यादिना णा[4] डिणा। जिणा। जेण। जेणं। भिसि। जेहिं। इत्यादि। ङसौ 'म्हा ङसेः' इति वा म्हादेशः[5]। जम्हा[6]। पक्षे। जाहिंतो। इत्यादि। सर्ववत्। भ्यसि। जाहिंतो। जेहिंतो। जासुंतो। जेसुंतो। इत्यादि। सर्ववत्। ङसि। कियत्तद्भ्यो ङसः सश्चा। जास। पक्षे। जस्स। आमि वा ङेसिं। जेसिं। पक्षे। जाणं। जाण। ङौ 'ङेस्त्थसिंसम्मि'। जत्थ। जसिं। जम्मि। 'अनिदमेतद्—' इत्यादिना हिं च। जहिं। ङौ काले 'ङिरिआडाहे—' इत्यादिना इआ इत्यादयः। जइआ। जाहे। जाला। यदेत्यर्थः। सुपि[7]। जेसुं। जेसु॥ तच्छब्दस्यान्त्यहलो लोपः। त सु इति स्थिते। 'एत्तो एत्ताहे ङसिनैतदः' इत्यत 'एतदः' इत्यनुवर्तमाने

तस्सौ सोऽक्लीबे तदश्च॥ २। २। ८९॥

तदश्चकारादेतदस्तकारस्य सौ परे सकारो भवति अक्लीबे अनपुंसके[8] नपुंसकलिङ्गे तु[9] न भवति। सो। 'अक्लीबे' इति किम्। तं। एअं। जसि। ते। अमि। तं।

1 हुतभुज् इत्यादयः M. 2 'दत्वं भवति T. 3 इत्यादि is omitted in P., My. 4 डिणा वा M. 5 म्हा for म्हादेशः M., T. 6 जम्हा is omitted in M., T. 7 सुपि परे T. 8 अनपुंसके is dropped in P., My. 9 नपुंसके तु M., R.

**क्वचित् सुपि तदो णः ॥ २ । २ । ७४ ॥**

तच्छब्दस्य सुपि परे णो भवति । क्वचिल्लक्ष्यानुरोधेन । इत्यम्-शसोः टा[1] वचने सुपि च लक्ष्यते । इत्यमि तदो णे सति । णं । शसि । ते । ता । णे । णा । टावचने । 'इदमेतद्—' इत्यादिना टो वा डिणा । तिणा । तेणं । तेण । णिणा । णेणं । णेण । भिसि । तेहि । इत्यादि । ङसौ 'म्हा ङसेः' इति वा म्हा । तम्हा । तस्मात् । 'ङसेः' इत्यनुवर्तमाने

**डो तदस्तु ॥ २ । २ । ७२ ॥**

तदः परस्य ङसेर्डित् ओत्वं वा भवति । तो । पक्षे । ताहितो[2] । इत्यादि । भ्यसि । ताहितो । तेहितो । तासुंतो[3] । तेसुंतो । इत्यादि । सर्ववत् । ङसि 'किंयत्तद्भ्यः—' इति ङसः शस् । तास । पक्षे । तस्स । 'तदिदमेतदाम्—' इत्यादिना से । से । आमि । सिं । तास । तेसिं । ताणं । ताण । इतः परं यद्वत् । सुपि । तेसुं[4] । तेसु । णेसुं[5] । णेसु ॥ एतच्छब्दस्य एतद् सु इति स्थिते अन्त्यहलो लोपः । 'तस्सौ सोक्लीबे तदश्च' इति चकारविहितः सादेशः । एसो । 'एत्तो एत्ताहे ङसिनैतदः' इत्यस्मात् 'एतदः' इत्यनुवर्तते[6] ।

**सुनैस इणमो इणं ॥ २ । २ । ८८ ॥**

एतदः सुना सह एस इणमो इणं इत्यादेशा[7] भवन्ति । एस । इणमो । इणं । जसि तलोपे । एए[8] । अमि । एअं । शसि । एए[9] । एआ । टा । एइणा । एएणा । एएणं । भिसि । एएहि । इत्यादि । ङसौ 'तदिदमेतद्—' इत्यादेः 'तु' इत्यनुवर्तते ।

**एत्तो एत्ताहे ङसिनैतदः ॥ २ । २ । ८५ ॥**

---

१ टा for टावचने M., R　२ तेहिंतो । ताहिंतो M.　३ तेसुंतो । तासुतो M.　४ तेसु । तेसुं M.　५ णेसु । णेसुं M.　६ इत्यनुवर्तमाने M., R., T.　७ इति त्रय आदेशा M., R., T.　८ M. has एआ after एए.　९ एआ । एए M.

एतदो ङसिना सह एत्तो एत्ताहे इत्यादेशौ वा भवतः । एत्तो । एत्ताहे । पक्षे । एआहिंतो । इत्यादि । [1]भ्यसि । एआहिंतो । एए-हिंतो । एआसुंतो । एएसुंतो । इत्यादि । ङसि । [2]'तदिदमेतदाम्—' इति से च । से । एअस्स । आमि । सिं । एएसिं । एआणं । एआण । ङौ । [3]थेस्सिम्मयः ।

थे डेल् ॥ २ । २ । ८६ ॥

'एतदः' इत्यनुवर्तते । एतदः स्थाने [4]थअनुबन्धथकारे परे लानुबन्ध एकारो डिद्भवति । लित्वान्नित्यम् । एत्थ ।

एतो म्मावदितौ वा ॥ २ । २ । ८७ ॥

'एतदः' इत्यनुवर्तते । सप्तम्येकवचनादेशे म्मौ परे एतदः एकारस्य अ इ इत्येतावादेशौ वा भवतः । अअम्मि । [5]इअम्मि । पक्षे । एअम्मि[6] ॥ शरच्छब्दे 'शरदामल्' इत्यत्वे बहुलाधिकारात् शरत्प्रावृषौ पुंसेव प्रयोक्तव्याविति त्रिविक्रमदेववचनात् पुँल्लिङ्ग एव प्रयोगः । सरओ । सरआ । इत्यादि । रामवत् । [7]खफछढान्ता अप्र-सिद्धाः । थकारान्तः पुंलिङ्गः अग्निमथच्छब्दः । अगागमः । अग्गिमहो । अग्गिमहा । पक्षे । 'स्नेहाग्न्योर्वा' इत्यन्त्यहलः प्रागत्वे अगणिमहो । इत्यादि । रामवत् । एवं दधिमदादयः । चकारान्तः पुँल्लिङ्गो वारि-मुक्शब्दः । अगागमः । चलोपः । वारिमुओ । वारिमुआ । इत्यादि । एवं जलमुगादयः । तिर्यक्शब्दस्य 'तिर्यक्पदातिशुक्तेस्तिरिच्छिपा-यिक्कसिप्पि' इति निपातनात् [8]तिरिच्छादेशे । तिरच्छी । इत्यादि । कविवत् ॥ टकारान्तोऽप्रसिद्धः । तकारान्तः पुँल्लिङ्गो मरुच्छब्दः । अन्त्यहलो लोपे । मरू । मरुणो । इत्यादि । कारुवत् । भवन्मह-

१ एएहिंतो । एआहिंतो M. २ एएसुंतो । एआसुंतो M. ३ रानुबन्धन-काले M. ४ °थकारपरे R. ५ M. and T. drop इअम्मि. ६ M. and T. have after एअम्मि, एअस्सि । सुपि । एएसु । एएसुं. ७ यफख्या° My., P. ८ तिर्यक्शब्दस्य तिरिच्छादेशे M., R., T.

च्छब्दयोः 'तु सक्खिणभवंतजम्भणमहंताः' इति निपातनात् भवंत-महंत इति क्रमाद्वा भवतः। भवंतो। भवंता। महंतो। महंता। इत्यादि। रामवत्। पक्षे। अन्त्यहलो लोपे। भवो। भवा। महो। महा। इत्यादि। रामवत्। शत्रन्तस्य भवच्छब्दस्य भू शतृ इति स्थिते

**होहुवहवा भुवेस्तु ॥ ३। १। १ ॥**

भुवेर्धातोर्हो हुव हव इति त्रय आदेशा भवन्ति। हो शतृ हुव शतृ हव शतृ इति स्थिते 'माणन्तौल् च लृङः' इत्यतो 'माणन्तौल्' इत्यधिकृत्य

**शतृशानचोः ॥ २। ४। ४२ ॥**

शतृशानचोः स्थाने माणन्त इत्येतावादेशौ प्रत्येकं स्तः ॥ होमाणो। होन्तो। हुवमाणो। हुवन्तो। हवमाणो। हवन्तो। अत्रैव 'एच्च क्त्वातुमुतव्यभविष्यति' इत्यतः 'एत्' इत्यधिकृत्य 'अदेल्लुक्यात्खोरतः' इत्यतः 'अतः' इति च

**वा लङ्लोट्छत्रुषु ॥ २। ४। २० ॥**

एषु परेष्वत एत्वं वा स्यात्। इत्येत्वे। हुवेमाणो। हुवेन्तो हवेमाणो। हवेन्तो। होमाणो। होन्तो। इत्यत्र एत्वं न भवति अनदन्तत्वात्।

**हुरचिति ॥ ३। १। ५ ॥**

'भुवेः' इत्यनुवर्तते। चिद्वर्जिते प्रत्यये परे भुवेर्धातोर्हु इत्यादेशः स्यात्। हुन्तो। सर्वत्र भवने। एवं हसमाणो। हसंतो। हसे-माणो। हसेन्तो। भजमाणो। भजन्तो। भजेमाणो। भजेन्तो। इत्यादयः। त्वरतेस्तु 'तुवरजअडौ त्वरेः' इत्यतः 'त्वरेः' इत्यधिकृत्य

**अतिङि तुरः ॥ २। ४। १४९ ॥**

१ भवतेर्धातो° My., P. २ इत्यधिकृत्य M., T. ३ भवतः M.

तिङ्वर्जिते प्रत्यये परे त्वरतेस्तुर इत्यादेशः स्यात् ॥ तुरन्तो। तुरमाणो। तुरेन्तो। तुरेमाणो॥

न्तूरः शतृतिङि ॥ २ । ४ । १५० ॥

'त्वरेः' इत्यनुवर्तते। ञित्वरा संभ्रम इत्यस्य तिङि शतृप्रत्यये च परतः तूर इत्यादेशः स्यात्। तूरन्तो। तूरेन्तो। तूरमाणो। तूरेमाणो। इत्यादि। एवं सर्वधातुषु तदादेशेषु च शतृशानचोः स्थाने माणन्तौ विधातव्यौ॥ शेषं रामवत्। कर्मणि तु शानचि कृते तस्य माणन्तयोः कृतयोर्धातोर्हो इत्यादेशेषु कृतेषु अणुहो यक् माण इति स्थिते

ईअइज्जौ यकः ॥ २ । ४ । ९१ ॥

यकः स्थाने ईअइज्ज इत्येतावादेशौ भवतः। इति ईअइज्जादेशयोः। अणुहोईअमाणो। अणुहोइज्जमाणो। अणुहोईअन्तो। अणुहोइज्जन्तो। एवं हसीअन्तो। हसिज्जन्तो। हसीअमाणो। हसिज्जमाणो। इत्यादि सर्वधातुषु तदादेशेषु च कैल्पनीयम्। कर्मणि हलन्तधातुष्वगागमात् पूर्वमेव ईअइज्जयोः कृतयोः। हसिज्जमाणो। हसीअमाणो। इत्यादयः सिद्धाः॥ अर्हच्छब्दे 'स्निग्धे त्वदितौ' ईत्यतः 'अदितौ' इत्यधिकृत्य 'क्ष्मारत्नेऽन्त्यहल.' ईत्यतः 'अन्त्यहलः' इति च

अर्हत्यु च ॥ १ । ४ । १०५ ॥

अर्हच्छब्देऽन्त्यहलः प्रागुत्वं चकारादृदितौ च भवतः। अरहन्तो। अरिहन्तो। अरुहन्तो। एवं अरुहमाणो इत्यादयः। अन्त्यहलो लोपे तु। अरुहो। अरिहो। अरहो। इत्याद्यपि। शेषं रामवत्॥ पकारान्तः पुंलिङ्गो धर्मगुप्शब्दः। अगागमः। धम्मगुवो। धम्मगुवा। इत्यादि॥ शकारान्तेषु सदृगादिष्वगागमे 'केवलस्य रिः' इत्यनुवर्तमाने

---

१ T. has तुरन्तो। तुरेन्तो। तुरमाणो। तुरेमाणो २ कल्पनीयाः M, R, T. ३ स्त्रस्विश्हल M., R, T. ४ इति च M., R, T.

'दृश्यक्सक्किनि' इति 'ऋतोत्' इति च । सरिसो । सरिसा । एवं तारिसो । इत्यादि ॥ पकारान्ते रत्नमुट्शब्दे अगागमे 'क्ष्मारत्नेन्त्यहलः' प्रागत्वे च । रअणमुसो । इत्यादि ॥ प्रावृट्शब्दे शरत्प्रावृषौ पुंस्येवेति त्रिविक्रमदेववचनात् पुँल्लिङ्गतायां 'स आयुरप्सरसोः' इत्यतः 'सः' इत्यनुवर्तमाने 'अन्त्यहलोऽश्रदुदि' इत्यतः 'अन्त्यहलः' इति च

**दिक् प्रावृषि ॥ १ । १ । ३५ ॥**

अनयोरन्त्यहलः सो भवति । लोपापवादः । ऋत्वादिपाठाहत उत्वम् । पाउसो । पाउसा । इत्यादि । रामवत् ॥ षट्छब्दस्यान्त्यहलो लोपे 'छल् षट्छमी—' इत्यादिना शोश्छत्वे । छो । छा । छेहिं । छेहिंतो । आमि । छण्हं । छण्ह । छेसुं । छेसु ॥ सकारान्ते सुवर्चस्शब्दे अन्त्यहलो लोपे । सुवचो । सुवचा । इत्यादि । रामवत् ॥ मनस् यशस् महस् इत्यादीनां 'स्नमदामशिरोनभो नरि' इति पुँल्लिङ्गतायामन्त्यहलो लोपे । मणो । जसो । महो । इत्यादि । रामवत् । एवं तमस्प्रभृतयः ॥ सुमनस् शब्दस्यान्त्यहलो लोपे । सुमणो । सुमणा । इत्यादि ॥ धनुःशब्दे तु 'हः क्षुत्ककुभि' इत्यतः 'हः' इत्यधिकृत्य 'अन्त्यहलोऽश्रदुदि' इत्यतः 'अन्त्यहलः' इति च

**धनुषि वा ॥ १ । १ । ३२ ॥**

अत्रान्त्यहलो हत्वं वा स्यात् । धणुहो । धणुहा । इत्यादि । पक्षे । अन्त्यहलो लोपे । धणू । इत्यादि । कारुवत् । धनुर्मनसोर्नपुंसकत्वमिति केचित् । तदा । मणं । धणुहं । धणु । इत्यादि । कुण्डवन्मधुवच्च ॥ अदस् शब्दस्य अदस् सु इति स्थिते 'सुप्यदसोमुः' इत्यतः 'अदसः' इत्यधिकृत्य

**अहद्दा सुना ॥ २ । २ । ९१ ॥**

१ M. and R. drop च. २ इत्यनुवर्तते M. ३ महस् यशस् R., T. ४ इत्यधिकृत्य M., T. ५ इति च M., R., T. ६ धनुःसुमनसो° M. ७ सुमणं M.

अदसः सुना सह अहदित्यादेशो वा स्यात् । तकारस्तावन्मात्रदर्शनार्थः । अह । पक्षे ।

**सुप्यदसोमुः ॥ २ । २ । ९० ॥**

अदसः सुपि परे अमु इत्यादेशः स्यात् । अमू । जसि । अमू । अमओ । अमउ । अमुणो । अमि । अमुं । शसि । अमू । अमुणो । इत्यादि सर्वं कारुवत् ।

**इआओ म्मौ ॥ २ । २ । ९२ ॥**

अदसो ङिवचनादेशे म्मौ परे इअ अअ इत्यादेशौ वा भवतः । इअम्मि । अअम्मि । पक्षे । अमुम्मि । सर्वनामत्वेपि नात्र ङेर्थादयः । अनदन्तत्वात् ॥

इति हलन्ताः पुंलिङ्गाः ॥

---

अथ हलन्ताः स्त्रीलिङ्गाः ।

हकारान्तः स्त्रीलिङ्ग उपानह्शब्दः । 'अन्त्यहलोश्रदुदि' ईत्यतः[1] 'अन्त्यहलः' इत्यधिकृत्य

**अविद्युति स्त्रियामाल् ॥ १ । १ । २९ ॥**

स्त्रीलिङ्गे[3] वर्तमानस्यान्त्यहलः आत्वं भवति विद्युच्छब्दं वर्जयित्वा[2] । लोपापवादः । 'पो वः' । उवाणआ । इत्यादि । जायावत् ॥ यकारान्तोप्रसिद्धः ॥ वकारान्तः स्त्रीलिङ्गो दिव्शब्दः । पूर्ववदात्वम् । दिआ । ईत्यादि[4] । जायावत् ॥ रेफान्तस्त्रीलिङ्गो गिर्शब्दः । 'अविद्युति स्त्रियामाल्' ईत्यतः[5] 'स्त्रियाम्' इत्यधिकृत्य 'अन्त्यहलोश्रदुदि' इत्यतः 'अन्त्यहलः' इति च

**रो रा ॥ १ । १ । ३० ॥**

---

१ इत्यधिकृत्य M., R., T. २ My. and P. drop विद्युच्छब्दं वर्जयित्वा. ३ M. has स्त्रियामित्यत्र after it. ४ M. and T. drop इत्यादि. ५ इत्यधिकृत्य M., R., T.

स्त्रियां वर्तमानस्यान्त्यरेफस्य रा इत्ययमादेशो भवति । गिरा । धूर् । धुरा । पूर् । पुरा । इत्यादि । जायावत् ॥ चतुर्शब्दस्य पुँल्लिङ्गवत् ॥ लकारजकारान्तावप्रसिद्धौ ॥ मकारान्तस्त्रीलिङ्गः किं-शब्दः । पूर्ववत् कादेशे । 'पुंसोजातेर्ङीब्वा' इत्यतः 'ङीब् वा' इत्यधिकृत्य

**किंयत्तदोस्यमामि सुपि ॥ २ । २ । ४० ॥**

सु अम् आम् वर्जिते सुपि परे किंयत्तद्भ्यो ङीब् वा स्यात् । पक्षे विकल्पसामर्थ्यादेव टाप् । विकल्पस्य प्रायः समशिष्टवस्तु-द्वयविषयत्वनियमात् । का । कीओ । कीउ । की । काओ । काउ । का । अमि । कं । शसि । जस्वत् । जश्शसोः 'शोश् स्त्रियां तु' इति शोश् । टौवचने । कीअ । कीआ । कीइ । कीए । टापि शावर्जितं त्रयम् । काअ । काइ । काए । अत्र 'टाङिङसाम्' इति शशाशिशे । भिसि । कीहिं । इत्यादि । काहिं । इत्यादि च । ङसौ । शशाशिशे । टावत् । भ्यसि । कीहिंतो । इत्यादि । का-हिंतो । इत्यादि । ङसि । 'किंयत्तद्भ्यो ङस्' इत्यतः 'ङस्' इत्यधि-कृत्य 'अनिदमेतदस्तु—' इत्यादेः 'तु' इत्यनुवर्तते ।

**ईतः से सा ॥ २ । २ । ६८ ॥**

ईकारान्तेभ्यः किंयत्तद्भ्यः परो ङस् से सा इत्यादेशावापद्यते । कीसे । किस्सा । अत्र रित्वाद्द्वित्वम् । पक्षे । कीअ । कीआ । कीइ । कीए । काअ । काइ । काए । 'किंयत्तद्भ्यो ङस्' इति सकारश्च । कीस । कास । काणं । काण । ङौ । शशाशिशे । कीअ । इत्यादि । काअ । इत्यादि च । टावत् । 'अनिदमेतदस्तु किंयत्तदस्त्रियामपि हिं' इति ङेर्हिं । काहिं । ईकारान्ते हिं नास्ति । हिमोकाँरान्तविषय-

१ °मादेशः स्यात् R., T. २ चतुरशब्दः P., My. ३ इत्यधिकृत्य M., R., T. ४ टा M. ५ M. and T. drop च. ६ M. and T. drop टावत्. ७ हिमोदन्तविषयत्वात् । M. and T.

त्वात्। सुपि। कीसुं। कीसु। कासुं। कासु॥ इदम्शब्दस्य 'इदम इमः' इति इमादेशः।

**पुंसोजातेर्ङीव् वा॥ २। २। ३७॥**

अजातिवाचिनः पुँल्लिङ्गात् स्त्रियां वा ङीप्[१]। अनुक्तमन्यन्यायेन। 'यस्येति च' इत्यकारलोपः। इमी। पक्षे टाप्। इमा। 'पुंसि सुना त्वअं स्त्रियामिमिआ' इति इमिआ च। इमिआ। सिद्धावस्थापेक्षया इअं च। जसि। इमाओ। इत्यादि। अमि। इमिं। इमं। शसि जस्वत्। टा शशाशिशे। इमीअ। इत्यादि। इमाअ। इत्यादि। भिसि। इमीहिं। इत्यादि। इमाहिं। इत्यादि। ङसौ। शशाशिशे। इमीअ। इत्यादि। इमाअ। इत्यादि। पक्षे। इमीहिंतो। इमाहितो। इत्यादि। भ्यसि। इमीहिंतो। सुंतो च। इमीसुंतो। इमाहितो। इमासुंतो। इत्यादि च। ङसि। शशाशिशे। इमीअ। इत्यादि। पक्षे। 'तदिदमेतदाम्—' इत्यादिना से। से। आमि। अनेनैव सिमादेशः। सिं। पक्षे। 'आमां ङेसिं'। इमेसिं। इमीणं। इमीण। इमाणं। इमाण। ङौ। शशाशिशे। इमीअ। इत्यादि। इमाअ। इत्यादि। पक्षे। इमस्सिं। इमम्मि। अस्सिं। अत्र तु 'अत्सुप्स्सिहिस्से' इत्यत्। 'इहेणं ङयमा'। इह। अत्र ईकारान्ते स्सिम्मी न स्तः। अनदन्तत्वात्। सुपि[२]। इमीसुं[३]। इमीसु। इमांसु[४]। इमासु। इदमः अत्। आसुं। आसु॥ ङकारणकारान्तावप्रसिद्धौ[५]॥ नकारान्तः स्त्रीलिङ्गः सीमन्शब्दः। 'अविद्युति स्त्रियामाल्' इत्यात्वम्। सीमआ। गरिमन् लघिमन् महिमन् इत्येवमादीनामिमनिजन्तानाम् 'स्त्रियामिमाञ्जलिगाः' इति स्त्रीलिङ्गत्वेन प्रतिज्ञाने सत्यपि बहुलाधिकारादात्वं नास्ति किं तु नलोप एव। टाप्[६]। गरिमा। लहिमा। महिमा। इत्यादि। जायावत्। स्त्रीत्वस्य वैकल्पिकत्वात् गरिमो लहिमो महिमो

१ ङीप् स्यात् M., T. २ My. and P. drop सुपि. ३ M. has इमीसु। इमीसुं. ४ इमासु। इमांसु M. ५ ङणान्तावप्रसिद्धौ P., My. ६ T. and R. drop टाप्.

इत्यपि भवति ॥ शान्तोप्रसिद्धः ॥ भकारान्तः स्त्रीलिङ्गः ककुप्शब्दः । 'अन्त्यहलोश्रदुदि' इत्यतः 'अन्त्यहलः' इत्यधिकृत्य

हः क्षुत्ककुभि ॥ १ । १ । ३१ ॥

क्षुत् ककुभ् अनयोरन्त्यहलो हत्वम्[1] । टाप् । ककुहा[2] । क्षस्य स्पृहादित्वाच्छः । छुहा ॥ जकारान्तः स्त्रीलिङ्गः स्रक्शब्दः । आत्वम् । सआ ॥ दकारान्तः स्त्रीलिङ्गो दृषच्छब्दः । आत्वम् । कृपादित्वादत इत्वम् । दिसआ । एवं संपत्प्रभृतयः ॥ प्रतिपच्छब्दस्य समृद्ध्यादिपाठादादेरचो वा दीर्घः । आत्वम् । प्रत्यादिपाठात्तस्य डत्वम् । पस्य वत्वं च । पडिवआ । पाडिवआ । प्रतिपद् ॥ दकारान्तः स्त्रीलिङ्गो यच्छब्दः । 'किंयत्तदोस्वमामि' इति वा ङीप् । जत्वम् । जा । जसि । जीओ । जीउ । जी । जाओ । जा । इत्यादि । स्त्रीलिङ्गकिंशब्दवत् ॥ तच्छब्दस्य 'किंयत्तदोस्वमामि' इति ङीप् । सौ । 'तस्सौ सोक्लीबे—' इत्यादिना सः । सा । जसि । तीओ । तीउ । ती । ताओ । ताउ । ता । तं । इत्यादि । स्त्रीलिङ्गकिंशब्दवत् ॥ एतच्छब्दस्य 'पुंसोजातेर्ङीब् वा' इति वा ङीप् । पक्षे टाप् । उभयत्रान्त्यहलो लोपः । सौ । 'सुनैसइणमोइणं ।' इत्यादेशा वा भवन्ति । 'तस्सौ सोक्लीबे तदश्च' इति चकारात् प्राप्तं सत्वं च । एस । इणमो । इणं । एसा । एई । अत्रान्त्यहलो लोपः । जसि । शो शु । एईओ । इत्यादि । अमि । एअं । एइं । शसि । ङैत्वत् । शशाशिशो । एइअ । इत्यादि । एआअ । इत्यादि । भिसि । एईहिं । इत्यादि । एआहिं । इत्यादि । ङसौ । शशाशिशो । पक्षे । हिंतो । इत्यादयः । एईअ । इत्यादि । एआअ । इत्यादि । एईहितो । इत्यादि । एआहितो । इत्यादि । ङसि । शशाशिशो । एईअ । इत्यादि । एआअ । इत्यादि । सुपि । एईसुं । एइसु । एआसुं । एआसु ॥ खफछढथान्ता अप्र-

---

१ इत्यधिकृत्य M., R. २ M. has भवति after हत्वं. ३ M. adds जायावत् after it. ४ तान्येव M.

सिद्धाः ॥ चकारान्तः स्त्रीलिङ्गो वाक्शब्दः । आत्वम् । वाआ ॥ त्वक्शब्दस्य 'अविद्युति—' इत्यात्वे 'त्वथ्वद्वध्वाम्—' इति सूत्रेण त्वस्य चत्वे । चआ । एवं रुचादयः ॥ तकारान्तः स्त्रीलिङ्गो योषिच्छब्दः । आत्वम् । जत्वम् । जोसिआ । एवं सरिदादयः ॥ विद्युच्छब्दस्य 'अविद्युति स्त्रियामाल्' इत्यत्र 'अविद्युति' इति पर्युदासादात्वं न भवति । किं त्वन्त्यहलो लोप एव । 'चय्ययाँ जः' इति जत्वम् । विज्जू । तनुवत् । कुलादिपाठाद्वा पुँल्लिङ्गतायां कारुवत् । 'लो वा विद्युत्—' इत्यादिना स्वार्थे वा[1] ले सति । विज्जुला । शतृशानजन्तेषु स्त्रियां विशेषः । पुँल्लिङ्ग इव[2] शतृशानचोः कृतयोः

**स्त्रियामी च ॥ २ । ४ । ४२ ॥**

'शतृशानचोः' इत्यनुवर्तते । शतृशानचोः स्थाने स्त्रियामीत्वम् । चकारान्माणन्तौ च भवतः । हसई । हसमाणी । हसंती । भजई । भजमाणी । भजंती । 'पुंसोजातेर्ङीन् वा' इति वा ङीप्[3] । हसमाणा । इत्याद्यपि । एवं सर्वत्रोह्यम् । शेषं गौरीवत् ॥ ककारान्तोऽप्रसिद्धः ॥ पकारान्तः स्त्रीलिङ्गोऽप्छब्दः । अन्त्यहल आत्वम् । आआ । पलोपः[4] । जसि । सिद्धावस्थापेक्षया आओ इति[5] दृश्यते । बह्वर्थवाचित्वात् सर्वत्र बहुवचनमेव । जायावत्[6] ॥ शकारान्तः स्त्रीलिङ्गो दिक्शब्दः । 'दिक्प्रावृषि' इत्यन्त्यहलः सत्वम् । दिसा दिसाओ । इत्यादि । जायावत् ॥ दृक्शब्दस्यात्वम् । कृपादित्वादृत इत्वम् । दिआ । षकारान्तः स्त्रीलिङ्गस्त्विट्शब्दः । आत्वम् । त्वस्य चत्वम् । चिआ । चिआओ ॥ षट्छब्दः पुँल्लिङ्गवत् ॥ सकारान्तः स्त्रीलिङ्ग आसीस् शब्दः । 'धनुषि वा' इत्यतः 'वा' इत्यधिकृत्य[7]

**सस्राशिषि ॥ १ । १ । ३३ ॥**

---

१ लः for वा ले सति M. २ वत् for इव M., T. ३ ङीपि M. ४ पलोपे M. ५ इत्यपि M. ६ जायाशब्दवत् M., T. ७ इत्यधिकृत्य M., T., R.

आशीः शब्दे अन्त्यहलः सकारो वा स्यात् । शित्वात् पूर्वस्य दीर्घः । आसीसा । पक्षे । आत्वम् । आसिआ ॥ अप्सरस्शब्दे

**स आयुरप्सरसोः ॥ १ । १ । ३४ ॥**

'धनुषि वा' ईत्यतः 'वा' इत्यनुवर्तते । अनयोरन्त्यव्यञ्जनस्य सकारो वा स्यात् । इति सत्वे 'थ्यश्चत्सप्सामनिश्चले' इति प्सस्य छत्वम् । अच्छरसा । पक्षे । आत्वम् । अच्छरआ ॥ अदस्शब्दस्य 'अहद्धा सुना' इति वा अहः । अह । पक्षे । 'सुप्यदसोमुः' इति अमुः । अमू । अमूओ । इत्यादि । तनुशब्दवत् ॥

इति हलन्ताः स्त्रीलिङ्गाः ।

---

## अथ हलन्ता नपुंसकलिङ्गाः ।

हैकारान्तनपुंसकलिङ्गः स्वनडुद्छब्दः । अगागमः । सु अनडुहं । इत्यादि । कुण्डवत् ॥ वकारान्ते सुदिव्शब्दे कप्रत्यये सुदिअं । इत्यादि ॥ रेफान्तः सुगिरं । इत्यादि ॥ चतुरशब्दः पुँल्लिङ्गवत् । इदम्शब्दस्य 'इदम इमः' ईत्यतः 'इदमः' इत्यधिकृत्य

**क्लीबे स्वमेदमिणमिणमो ॥ २ । २ । ८२ ॥**

नपुंसके वर्तमानस्येदमः सु अम् इत्येताभ्यां सह इदं इणं इणमो इत्यादेशा भवन्ति । इदं । इणं । इणमो । अन्यत्र पुँल्लिङ्गवत् ॥

**किं किं ॥ २ । २ । ८३ ॥**

'क्लीबे' इत्यनुवर्तते 'स्वम्' इति च । क्लीबे वर्तमानः किंशब्दः स्वमा सह किमेव भवति । किं । किं । अन्यत्र पुँल्लिङ्गवत् ॥ दामन्-शब्दे 'स्नमदाम—' इति सूत्रे 'अदाम' इति पर्युदासान्नपुंसकत्वम् । अन्त्यहलो लोपः । दामं दामाणं । कुण्डवत् ॥ शर्मवर्मशब्दयोः 'स्नमदाम—' इत्यादिना पुँल्लिङ्गत्वप्रतिज्ञानेपि सम्मं वम्मं इति च

---

१ इत्यधिकृत्य R., M. २ इत्यनेन M. ३ तनुवत् My., P. ४ हलन्त° R. ५ इत्यादि कुण्डवत् T. ६ इत्यधिकृत्य M., R. ७ प्रतिज्ञाने सत्यपि T.

दृश्यत इति वचनान्नपुंसकत्वे कुण्डवत् ॥ नपुंसके असृङ्शब्दे ऋत इत्वम् । 'मड्लुगसंबुद्धे.–' इति मड्लुक् । अन्त्यहलो लोपः । असिं । असिं । दधिवत् ॥ यद् । जं । इजाणि । इत्यादि प्रथमाद्वितीययोः कुण्डवत् । अन्यत्र पुँल्लिङ्गवत् ॥ यद्वत्तच्छब्दः ॥ एतदः 'सुनैसइणमो-इणं' इत्यादेशाः । एस । इणमो । इणं । पक्षे । एअं । इत्यादि । कुण्डवत् पुँल्लिङ्गवच्च ॥ शकृत् । ऋत इत्वम् । सइं । दधिवत् ॥ तादृश् । अक् । रित्वम् । तारिसं । एवं यादृशादयः ॥ पद् । पूर्ववत् ॥ शिरस् नभस् एतयोः 'स्नमदाम—' इति सूत्रे पर्युदासान्न-पुंसकत्वम् । सिरं । णहं ॥ वयस् सदस् सुमनस् वअं सअं सुमणं इति दृश्यत इति वचनान्नपुंसकत्वम् ॥ 'हः क्षुत्ककुभि' इत्यतः 'हः' इत्यधिकृत्य

**धनुषि वा ॥ १ । १ । ३२ ॥**

अत्रान्त्यहलो हत्वं वा । धणुहं । धणु । अदस् । अमु । अह च सौ । अह । अमूनि । अमूइं । अमूइ । शसेत्वम् । अन्यत्र पुँल्लिङ्गवत् ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

---

१ हलादेशा एव M. २ अशिरो न भवतीति for एतयो. 'स्नमदाम–' इति सूत्रे. ३ इति च M.

## अथ युष्मच्छब्दः ।

अथ युष्मदस्मच्छब्दावलिङ्गाविति केचित् । अभिधेयवल्लिङ्गावित्यपरे[1] । पक्षद्वयेपि रूपनिर्णयः समानः । युष्मद् सु इति स्थिते

**युष्मत् सुना तुवं तुं तुमं तुह ॥ २ । ३ । १ ॥**

युष्मच्छब्दः सुना सह तुवं तुं तुमं तुह इति चतुर आदेशानापद्यते । तुवं । तुं । तुमं । तुह । त्वमित्यस्त्येव सिद्धावस्थापेक्षया वलोपे तं इत्यपि ॥ युष्मद् जस् इति स्थिते

**जसा भे तुब्भे तुय्हे उय्हे तुब्भ ॥ २ । ३ । ३ ॥**

युष्मच्छब्दो जसा सह भे इत्यादि पञ्चादेशानाप्नोति[2] । भे । तुब्भे । तुय्हे । उय्हे । तुब्भ । यूयम् ।

**वा ब्भो म्हज्झौ ॥ २ । ३ । १४ ॥**

युष्मदादेशेषु द्विरुक्तभकारस्य म्हज्झ इत्यादेशौ वा भवतः[3] । तुम्हे । तुज्झे । तुम्ह । तुज्झ । इति जसि[4] नव[5] रूपाणि ॥ अमि 'युष्मत् सुना तुवं तुं तुमं तुह' इत्यतः[6] 'सुना' इत्यन्यदधिकृत्य

**अमा तुमे तुए च ॥ २ । ३ । २ ॥**

युष्मच्छब्दोमा सह तुमे तुए इत्यादेशौ चकारात् तुवं आदि चतुष्टयं चापद्यते[7] । तुमे । तुए । तुवं । तुं । तुमं । तुह । त्वामित्यस्य सिद्धावस्थापेक्षाया वलोपे 'स्वरस्य बिन्दुमि' इति ह्रस्वे तं इत्यपि भवति ॥ शसि 'जसा भे तुब्भे तुय्हे उय्हे तुब्भ' इत्यतः[8] 'जसा' इत्यन्यदनुवर्तमाने[9]

**शसा वो च ॥ २ । ३ । ४ ॥**

युष्मच्छसा सह वो इति चकाराद् भे इत्यादीन् नवादेशांश्चापद्यते । वो । भे । तुय्हे । तुम्हे । तुज्झे । उय्हे । तुब्भ । तुम्ह । तुज्झ । तुब्भे ॥ १० ॥ युष्मान् ॥

---

१ °त्येके R., T. २ °नापद्यते My., P. ३ स्तः P., My. ४ T. drops जसि. ५ M. drops नव; T. has जसि after नवरूपाणि. ६ इत्यधिकृत्य M., R., T. ७ चाप्नोति My., P. ८ इत्यनुवर्तमाने M., R., T. ९ °नुवर्तते P., My.

**टा भे ते दे दि तुमं तुमइ ॥ २ । ३ । ५ ॥**

युष्मत् टावचनेन सह भे इत्यादि षडादेशानापद्यते ॥

**ङिटाभ्यां तुमए तुइ तुए तुमाइ तुमे ॥ २ । ३ । ६ ॥**

युष्मद् ङिटाभ्यां सह तुमए इत्यादि पञ्चादेशानाप्नोति । एवं च टावचने । भे । ते । दे । दि । तुमं । तुमइ । तुमए । तुइ । तुए । तुमाइ । तुमे । त्वया ॥ भिसि

**भिसा भेतुब्भेह्युब्भेह्युय्हेहितुय्हेहि ॥ २ । ३ । १० ॥**

युष्मद् भिसा सह भे इत्यादि पञ्च रूपाण्यापद्यते । 'वा ब्भो म्हज्झौ' इति वचनात् ताभ्यां योगे चत्वारि । [1]मिलित्वा नव रूपाणि । भे । तुब्भेहि । तुम्हेहि । तुज्झेहि । उब्भेहि । उम्हेहि । उज्झेहि । उय्हेहि । तुय्हेहि ॥ ९ ॥ युष्माभिः ॥ ङसौ

**तुब्भतुहिंतोतुय्ह ङसिना ॥ २ । ३ । ७ ॥**

युष्मद् ङसिना सह तुब्भादीन् त्रीनादेशानाप्नोति । वा ब्भो म्हज्झावपि । तुब्भ । तुम्ह । तुज्झ । तुहिंतो । तुय्ह ॥ ५ ॥ त्वत् ॥

**तु तइ ङिप्ङसौ ॥ २ । ३ । ८ ॥**

ङिविति सप्तमी ङसीति पञ्चम्येकवचनम् । तयोः परयोर्युष्मच्छब्दः तु तइ इत्यादेशौ यथाक्रममापद्यते । सप्तमीङस्योर्यथोक्ता एवादेशाः । ङसौ हिंतोत्तोदोदवः । तईहितो । तइत्तो । तईओ । तईउ । अत्र सर्वत्र 'दिदोत्तो—' इत्यादिना दीर्घः । त्वत् ॥

**तुव तुम तुह तुब्भ ॥ २ । ३ । ९ ॥**

'ङिप्ङसौ' इत्यनुवर्तते । ङिपि ङसौ च परे युष्मद् तुव आदींश्चतुर आदेशानापद्यते[2] । ङिप्ङस्योर्यथाप्तमेव[3] । ङसौ हिंतोत्तोदोदवः । तुवाहिंतो । तुवत्तो । तुवाओ । तुवाउ । तुवाहि । तुवा । इति षट् । एवं तुमतुहयोरपि प्रत्येकं षट् । तुब्भेत्यत्र म्हज्झाभ्यां योगे

---

[1] M., R., and T. drop मिलित्वा नवरूपाणि. [2] °नापद्यते P., My. [3] आपद्यते यथाप्राप्तम् P., My.

तुब्भ तुम्ह तुज्झ इति त्रयः । इति त्रयाणामपि प्रत्येकं हितो इत्यादि षट् । एवं च ङसौ पूर्वसूत्रद्वयोक्तानि नव । तृतीयसूत्रोक्तानि षड्विंशत् । मिलित्वा पञ्चचत्वारिंशद्रूपाणि । अत्र युष्मदोदन्तादेशपक्षे 'ङसिसो हि' 'ङसेः श्लुक्' इति द्वयमप्युदाहार्यम् ॥ भ्यसि

**उम्होय्ह तुय्ह तुब्भ भ्यसि ॥ २ । ३ । ११ ॥**

युष्मद् भ्यसि परे उम्ह उय्ह तुय्ह तुब्भ इति चतुर आदेशानाप्नोति ॥ भ्यसस्तु यथाप्राप्तमेव । 'वा ब्भो म्हज्झौ' इति ताभ्यां योगे षट् । षण्णामप्यैकैकस्य नव रूपाणि । एवं भ्यसि चतुःपञ्चाशद्रूपाणि । एकस्य नव रूपाणि प्रदर्श्यन्ते । उम्हेहितो । उम्हाहिंतो । उम्हेसुंतो । उम्हासुंतो । उम्हेहि । उम्हाहि । उम्हत्तो । उम्हाओ । उम्हाउ । एवं उय्ह तुय्ह तुब्भ तुम्ह तुज्झ एष्वपि प्रत्येकं नव नव रूपाण्युदाहरणीयानि । अत्र सर्वत्र रामशब्दवद् दीर्घैत्वे ॥ ङसि

**तुब्भोब्भोय्हतइतुहंतुहतुम्हंतुवतुमतुमेतुमाइतुमोदेतेदितुइए ङसा ॥ २ । ३ । १२ ॥**

युष्मद् ङसा सह तुब्भ उब्भ उय्ह तइ तुहं तुह तुम्हं तुव तुम तुमे तुमाइ तुमो दे ते दि तु इ ए इत्याष्टादशादेशानापद्यते[1] । 'वा ब्भो म्हज्झौ' इति ताभ्या योगे चत्वारि । एवं मिलित्वा द्वाविंशतिः रूपाणि । ननु 'वा ब्भो म्हज्झौ' इत्यनेन तुंह इति रूपसिद्धावत्र सूत्रे पुनस्तुंहग्रहणं व्यर्थम् । छन्दोवत् सूत्राणीति सूत्राणां छन्दस्तुल्यत्वादभिप्रायापरिज्ञानात् । यद्वात्र शास्त्रे सर्वत्र बहुलाधिकारादत्र पुनस्तुंहाभावमाशङ्क्य पुनस्तद्ग्रहणम् ॥ आमि

**तुम्हाण तुब्भं तुब्भाण तुमाण तुवाण तुहाण तुब्भ वो भे त्वामा ॥ २ । ३ । १३ ॥**

युष्मद् आमा सह तुम्हाण तुब्भं तुब्भाण तुमाण तुवाण तुहाण तुब्भ वो भे त्वा इति दशादेशानापद्यते । म्हज्झाभ्या योगे 'क्त्वासु-

---

1 °नापद्यते My., P.

पोस्तु सुणात्' इति वा बिन्दौ च बिन्दून्ताः सप्त । अबिन्दून्ताः सप्त । तुब्भं इत्यत्र त्रीणि । तुब्भ इत्यत्रापि तथैव । शिष्टैस्त्रिभिः सह त्रयोविंशतिः रूपाणि । ननु तुम्हाणमित्यत्र सूत्रे न ग्रहीतव्यम् । स्वभावत एव तद्रूपस्य निरूपयितुं शक्यत्वात् । तथाहि । युष्मद् आम् इति स्थिते अन्त्यहलो लोपे आमो णशि कृते 'अर्थपरे तो युष्मदि' इति यस्य तत्वे 'शिति दीर्घः' इति दीर्घे ष्मस्य म्हत्वे च सिध्यतीति सत्यमेव । तथापि सूत्रकृतां प्रवृत्तिर्विचित्रेति विज्ञापयितुं तद्ग्रहणमिति संतोष्टव्यम् । युष्माकम् ॥ ङौ 'ङिहाभ्यां तुमए—' इत्यादिना तुमए इत्यादय आदेशाः पञ्च 'तु तइ ङिप्ङसौ' इति ङिपि यथाक्रमं प्राप्तस्तु इत्यादेश एकः । एवं षट् । तुमए । तुइ । तुए । तुमाइ । तुमे । तुम्मि । अत्र 'ङेर्मिः' इति मिरेव न तुत्थादयः । सर्वनामत्वेप्यनदन्तत्वात् ॥ सुपि 'ङिप्' इत्यनुवर्तमाने 'तुव तुम तुह तुब्भ' इति सूत्रेण युष्मदस्तुवादयश्चत्वार आदेशाः सुपि परे । तुवेसुं । तुवेसु । तुमेसुं । तुमेसु । तुहेसुं । तुहेसु । तुब्भेसुं । तुब्भेसु । तुम्हेसुं । तुम्हेसु । तुज्झेसुं । तुज्झेसु । अत्र 'भिस्भ्यः सुपि' इत्येत्वम् । 'तु तइ ङिप्ङसौ' इति सुप्यपि तु इत्यादेशः । 'इदुतोर्दिः' इति दीर्घः । तासुं । तासु ॥

इति युष्मच्छब्दः ॥

---

## अथास्मच्छब्दः ।

सौ

**अस्मत्सुना अम्हिहमहअमहमहम्म्यम्मि ॥ २ । ३ । १५ ॥**

अस्मत् सुना सह अम्हि हं अहअं अहं अहम्मि अम्मि इति षडादेशानापद्यते । अम्हि । हं । अहअं । अहं । अहम्मि । अम्मि । अहमित्यर्थः ॥ जसि

---

१ ज्ञापयितुं My., P. २ इत्याद्यादेशाः P., My. ३ सर्वनामशब्दत्वे P., My. ४ परेपि M.

**मो भे वअं जसा ॥ २ । ३ । १६ ॥**

असमज्जसा सह मो इत्यादि त्रीनादेशानाप्नोति ।

**अम्हे अम्हो अम्ह ॥ २ । ३ । १७ ॥**

'असमत्' 'जसा' इति चानुवर्तते । असमज्जसा सह अम्हे इत्यादि त्रीनादेशानाप्नोति । योगविभाग उत्तरार्थः । मो । भे । वअं । अम्हे । अम्हो । अम्ह । वयम् ॥ अमि

**मं णे णं मि मिमं ममं अम्मि अहं मम्ह अम्ह अमा ॥ २ । ३ । १९ ॥**

असमदमा सह ममित्यादि दशादेशानापद्यते । मं । णे । णं । मि । मिमं । ममं अम्मि । अहं । मम्ह । अम्ह ॥ १० ॥ माम् ॥ शसि । 'अम्हे अम्हो अम्ह' इत्यधिकृत्य

**णे च शसा ॥ २ । ३ । १८ ॥**

असमच्छब्दः शसा सह णे इति चकाराद् अम्हे इत्यादीन् त्रीनादेशांश्चापद्यते[1] । अम्हे । अम्हो । अम्ह । णो ॥ ४ ॥ असमान् ॥ टा

**मि मइ ममाइ मए मे ङिटा ॥ २ । ३ । २० ॥**

असमत् टावचनेन ङिवचनेन च सह मि इत्यादि पञ्चादेशांश्चापद्यते ।

**ममं णे मआइ ममए टा ॥ २ । ३ । २१ ॥**

असमत् टावचनेन सह ममं इत्यादींश्चतुर आदेशानाप्नोति । मि । मइ । ममाइ । मए । मे । ममं । णे । मआइ । ममए ॥ ९ ॥ मया ॥ भिसि

**णे अम्हेह्यम्हाह्यम्हे अम्ह भिसा ॥ २ । ३ । २२ ॥**

असमद् भिसा सह णे इत्यादीन् पञ्चादेशानाप्नोति । अत्र हिंग्रहणेन भिसादेशसाम्यात् हिंहिङोरपि परिग्रह इति केचित् । णे । अम्हेहिं ।

---

1 °श्चाप्नोति My., P.

अम्हेहिँ । अम्हेहि । अम्हाहिं । अम्हाहिँ । अम्हाहि । अम्हे । अम्ह ॥ ९ ॥ अस्माभिः ॥ ङसौ

**मइ मम मह मज्झ ङसौ ॥ २ । ३ । २३ ॥**

ङसौ पञ्चम्येकवचने परतः अस्मद् मइ इत्यादींश्चतुर आदेशानापद्यते । ङसेस्तु यथाप्राप्तमेव । इदन्ते चत्वारि । अदन्तेषु त्रिषु प्रत्येकं षट् । मईहिंतो । मइत्तो । मईओ । मईउ ॥ ४ ॥ ममाहितो । ममत्तो । ममाओ । ममाउ । ममा । ममाहि ॥ ६ ॥ एवं शिष्टयोरप्यदन्तयोः ॥ २२ ॥ मत् ॥ भ्यसि

**अम्ह मम भ्यसि ॥ २ । ३ । २४ ॥**

अस्मत् पञ्चमीबहुवचने भ्यसि परतः अम्ह मम इत्येतावादेशावापद्यते । भ्यसस्तु यथाप्राप्तमेव । एकैकस्य अम्हाहिंतो ममाहिंतो इत्यादीनि रामवन्नव[1] रूपाणि कल्पनीयानि[2] ॥ १८ ॥ अस्मत् ॥ ङसि

**अम्हं मज्झं मज्झ मइ मह महं मे च ङसा ॥ २। ३ । २५ ॥**

अस्मद् ङसा सह अम्हं इत्यादीन् सप्तादेशान् चकारादम्हममौ चापद्यते । अम्हं । मज्झं । मज्झ । मइ । मह । महं । मे । अम्ह । मम ॥ ९ ॥ मम ॥ आमि

**अम्हे अम्हो अम्हाण ममाण महाण मज्झाण मज्झाम्हाम्हं णे णो आमा ॥ २ । ३ । २६ ॥**

अस्मदामा सह अम्हे इत्यादीनेकादशादेशानापद्यते । 'क्त्वासुपोस्तु सुणात्' इति बिन्दुयोगे चत्वारि । अम्हे । अम्हो । अम्हाण । अम्हाणं । मज्झाण । मज्झाणं । ममाण । ममाणं । महाण । महाणं मज्झ । अम्ह । अम्हं । णे । णो ॥ १५ ॥ अस्माकम् ॥ ङौ 'मि मइ ममाइ मए मे ङिटा' इत्यनेन पञ्चादेशाः ।

**अम्ह मम मज्झ मह ङिपि ॥ २ । ३ । २७ ॥**

---

१ नवनवरूपाणि रामशब्दवत् P., My., नवरूपाणि रामवत् T., R.
२ परिकल्पनीयानि My., P., M.

ङिपि सप्तम्यां परतः अस्मद् अम्हेत्यादि चतुरादेशानोपद्यते । ङि सुपोर्यथासंख्यमासो 'ङेई' 'ङेर्मिः' इति च । मि । मयि । ममाई । मए । मे । अम्हे । अम्हम्मि । ममे । ममम्मि । मज्झे । मज्झम्मि । महे । महम्मि ॥ १३ ॥ मयि ॥ ङावस्मदः अम्हाद्यादेशस्थले 'ङेस्त्थ-सिम्मि' इति थ्यादेशान्तोदाहरणप्रदर्शनाभावस्तु विचारणीयस्त्रै-विक्रमे । सुपि अम्हादयः । अत्र सुपि अत एत्वं विकल्पितमिति केचित् । अम्हेत्यस्य सुपि अत आत्वमित्यपरे । अम्हासु । अम्हेसु । अम्हसु । ममेसु । ममसु । मज्झेसु । मज्झसु । महेसु । महसु । ममेसु । ममसु । एतेषामेव 'क्त्वासुपोस्तु सुणात्' इति वा बिन्दौ सति सबिन्दुका नव इतरे नवेत्यष्टादश रूपाणि । सुपः ॥ १८ ॥ अस्मासु ।

इत्यस्मच्छब्दप्रक्रिया ॥

---

१ °थाम्रो P., My. २ °थंमाग्रासं M. ३ °त्रविप्रकर्मीये T. ४ स-बिन्दुका अपि नवेति घरे नवेत्यष्टदश° M. ५ इति युष्मदस्मत्प्रक्रिया My. P.; इत्यस्मच्छन्दः T.

## अथाव्ययानि ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

अव्ययम् ॥ २ । १ । ३१ ॥

अधिकारोऽयमापादपरिसमाप्तेः । इतः परं ये[1] वक्ष्यन्ते तेऽव्ययसंज्ञा विज्ञेयाः ॥

आम अभ्युपगमे ॥ २ । १ । ३२ ॥

अभ्युपगमार्थे आमेति प्रयोक्तव्यम् । आम बहुळावणावळी । आम संस्कृतेऽपीति केचित् ॥

तं वाक्योपन्यासे ॥ २ । १ । ३३ ॥

तमित्यव्ययं वाक्योपन्यासे प्रयोक्तव्यम् । तंति[3] ॥

णइ चेअ चिअ च्चँ एवार्थे ॥ २ । १ । ३४ ॥

अवधारणेऽर्थे णइ, चेअ चिअ च इत्येते चत्वारः प्रयोक्तव्याः । गहिओ णइ । गृहीत एव । जं चेअ । यदेव । तं चिअ । तदेव । दैवादिपाठाद्द्वित्वे ते च्चिअ धण्णा । त एव धन्याः । ते च्चिअ सुउरिसा । त एव सुपुरुषाः । सो च्चँ वयोरूवेण । स एव वयोरूपेण ।

हद्धि निर्वेदे ॥ २ । १ । ३५ ॥

हद्धीति निर्वेदे प्रयोक्तव्यः हाधिक्शब्दवत् । हद्धि कट्ठं ।

दर अर्धे अल्पे वा ॥ २ । १ । ३६ ॥

दरेत्यव्ययमर्धे अल्पे वा प्रयोक्तव्यम् । दर विअसिअं । अर्धमीषद्वा विकसितम् ॥

किणो प्रश्ने ॥ २ । १ । ३७ ॥

---

१ यद्वक्ष्यते तदव्ययसंज्ञं ज्ञेयम् M. २ अभ्युपगमे आम M. ३ M. adds यसंबन्धिमेक्ख; T. has असधिडि मौखं. ४ व्व P. ५ T. has आदेशाः after it. ६ व्व P.

प्रश्ने किणो इति प्रयोज्यम्[१] । किणो[२] चिट्ठसि । किमिति[३] तिष्ठसि ॥

मिव पिव विव विअ व व्व इवार्थे ॥ २ । १ । ३८ ॥

मिव पिव विव विअ व व्व एते[४] इवार्थे प्रयोक्तव्याः । कमळं मिव । चंदेण पिव । हंसो[५] विव । वालो विअ । उअअस्स व सीअळत्तणं । उदकस्येव शीतलत्वम् । साअरस्स व गंभीरिअं । सागरस्येव गाम्भीर्यम् । पक्षे कमलमिवेत्यादि ॥

किर इर हिर किलार्थे ॥ २ । १ । ३९ ॥

एते त्रयः किलार्थे वा प्रयोक्तव्याः[६] । कअं किर । कृतं किल । तस्स इर पिअवअंसो । तस्य किल प्रियवयस्यः । वाहिआ हिर । व्याहृता किल । पक्षे कअं किलेत्यादि ।

अम्हो आश्चर्ये ॥ २ । १ । ४० ॥

अम्हो इत्याश्चर्ये वा प्रयोक्तव्यम् । अम्हो कहं भाइ । आश्चर्यं कथं भाति । पक्षे कहंमच्छरिअं[७] ॥

अव्वो पश्चात्तापसूचनादुःखसंभाषणापराधानन्दादरखेदविस्मयविषादभये ॥ २ । १ । ४१ ॥

अव्वो इति पश्चात्तापादिष्वेकादशसु प्रयोक्तव्यम्[८] । पश्चात्तापे । अव्वो महं खु पावमाअरिअं । महत्खलु पापमाचरितम् । सूचनायाम् । अव्वो दुक्करो आरद्धो । दुष्कर आरब्धः । दुःखे । अव्वो सव्वं गअं । सर्वं गतम् । संभाषणे । अव्वो किमिणं । किमिदम् । अपराधे । अव्वो परधणं हरंति खला । परधनं हरन्ति खलाः । आनन्दे । अव्वो सुप्पहाअमिणं । सुप्रभातमिदम् । इत्यादीनि यथायोगं कविभिः प्रयोक्तव्यानि ॥

---

१ प्रयोक्तव्यम् M. २ M. has प्रश्ने before it. ३ My. and P. omit किमिति तिष्ठसि. ४ इति षट् प्रयोज्या इवार्थे T.; इति षट् इवार्थे प्रयोक्तव्याः M. ५ हंसो विव M. ६ प्रयोज्याः T. ७ °मचरिअं M. ८ प्रयोज्यम् T.

**हुं[1] पृच्छादाननिवारणे ॥ २ । १ । ४२ ॥**

हुमित्यव्ययं[2] पृच्छायां दाने निवारणे च प्रयोज्यम् । पृच्छायाम् । हुं कहअ सब्भावं । कथय सद्भावम् । दाने । हुं मह धनं । मम धनम् । निवारणे । हुं चिट्ठ ॥

**वणे निश्चयानुकम्प्यविकल्पे ॥ २ । १ । ४३ ॥**

वणे इति निश्चयादौ प्रयोज्यम् । निश्चये । वणे होइ । निश्चयो भवति । अनुकम्प्ये । दासो वणे ण मुच्चइ । दासोनुकम्प्यो न मुच्यते । विकल्पे । होइ वणे ण होइ । भवति न भवति वा ॥

**संभावने अइ च ॥ २ । १ । ४४ ॥**

संभावने अइ इति चकाराद्वणे इति च प्रयोज्यम् । अइ देअर किं ण मेच्छसि । अइ देवर किं न पश्यसि । एवं वणेपि ॥

**आनन्तर्ये णवरिअ ॥ २ । १ । ४५ ॥**

णवरिअ इत्यानन्तर्यार्थे प्रयोज्यम् । णवरिअ से रहुवइणो । आनन्तरमस्य[3] रघुपतेः ॥

**केवले णवर ॥ २ । १ । ४६ ॥**

णवरेति केवले प्रयोज्यम् । णवर दोज्जण्णं पअडिअं । केवलं दौर्जन्यं प्रकटितम् । केचित्तु[4] 'केवलानन्तर्ययोर्णवरणवरी' इत्येकमेव सूत्रमाहुः । तन्मते उभावप्युभयार्थौ ॥

**हंद[5] गृहाणार्थे ॥ २ । १ । ४७ ॥**

[6]हंदेति गृहाणार्थे वा प्रयोज्यम् । [7]हंद पोप्फं । गृहाण पुप्पम् ॥

**हंदि[8] विकल्पविपादसत्यनिश्चयपश्चात्तापेषु च ॥ २।१।४८ ॥**

---

१ हं M. २ हमित्येतत् M. ३ आनन्तर्यमावश्यकम् M.; आनन्तर्यमवश्यम् R., T. ४ M. drops तु from केचित्तु ५ भंद P. ६ भंदे P. ७ भंद P. ८ भंदि P.

[1]हंदीत्येतद्विकल्पादिषु चकाराद् गृहाणार्थे च प्रयोज्यम् । विकल्पे । [2]हंदि होज्ज एत्ताहे । वा भवेदिदानीम् । विषादे । [3]हंदि चळणाणओ सो ण माणिओ । हन्त चरणानतः स न मानितः । सत्ये । [4]हंदि तुह फणामो । सत्यं तव फणामः । निश्चये । साहिज्जइ हंदि तुह कज्जं । साध्यते निश्चयेन तव कार्यम् । पश्चात्तापे । [5]हंदि न दिट्ठो पिओ । हन्त न दृष्टः प्रियः । गृहाणार्थे । [6]हंदि घणं ॥

संभापणरतिकलहे रे अरे ॥ २ । १ । ४९ ॥

संभाषणे रतिकलहे च रे अरे इति प्रत्येकं प्रयोज्यम् । संभाषणे । रे धुत्त । अरे धुत्त । रतिकलहे । रे किअअ । अरे किअअ । कितव ॥

हरे क्षेपे च ॥ २ । १ । ५० ॥

क्षेपे चकारात् संभाषणरतिकलहयोश्च हरे इति प्रयोज्यम् । क्षेपे । हरे णिल्लज्ज । संभाषणे । हरे पुरिसा । रतिकलहे । हरे बहुवल्लह ॥

धू कुत्सायाम् ॥ २ । १ । ५१ ॥

धू इति कुत्सायां प्रयोज्यम् । धू णिळज्जाळाहो ॥

ऊ गर्हाविसयसूचनाक्षेपे ॥ २ । १ । ५२ ॥

ऊ इति गर्हादिषु प्रयोज्यम् । गर्हायाम् । ऊ णिल्लज्ज । विसये । ऊ कहं फणिअं । सूचनायाम् । ऊ केण विण विण्णाअं । केनापि न विज्ञातम् । प्रक्रान्तस्य वाक्यस्य विपर्यासशङ्कानिवर्तनलक्षण आक्षेपः । तत्र । ऊ भणिदव्वं । कथं भणितव्यम् ॥

पुणरुत्तं कृतकरणे ॥ २ । १ । ५३ ॥

पुणरुत्तमिति कृतकरणे प्रयोज्यम् । [7]अयि सहसु पुणरुत्तं । [8]कृत-करणं सहस्वेत्यर्थः ॥

---

१ भंदो॰ P. २ भदि P. ३ भंदि P. ४ भंदि P. ५ भंदि P. ६ भंदि P. ७ अयि पिय M.; R. adds सपदपुरे after अयि पिअ. ८ M. has अयि पिय and R. अयि प्रिय सपदि पांडुळे before कृतकरणं &c.

**हु खु निश्चयविसयवितर्के ॥ २ । १ । ५४ ॥**

हु खु इत्येतौ निश्चयादिषु प्रयोज्यौ । निश्चये । हु पढिअं । असंशयं पठितम् । विसये । हु एसो को धणुद्दरो । वितर्को नाम ऊहः संशयो वा । ऊहे । हु पिओ आअमिस्सदि । संशये । हरी हु हरो हु । एवं खु इत्यपि प्रयोज्यम् । बहुलाधिकारादनुस्वारात् परो हुर्न प्रयोज्यः ॥

**णवि वैपरीत्ये ॥ २ । १ । ५५ ॥**

णवि इत्येतद्वैपरीत्ये प्रयोज्यम् । णवि विहिपरिणामो । विपरीतो विधिविपरिणामः ॥

**वेव्वे विषादभयवारणे ॥ २ । १ । ५६ ॥**

विषादभयवारणार्थेषु वेव्वे[1] इति प्रयोज्यम्[4] । वेव्वे[5] फणिअं ण विम्हरामो । विषादफणितं न विसरामः । भये । वेव्वे[6] पलाइदं तेण । भयेन पलायितं तेन । वारणे । वेव्वे[7] चापलं । मा चापलम्[8] ॥

**आमन्त्रणे पेव्वे च ॥ २ । १ । ५७ ॥**

पेव्वे इति चकाराद्वेव्वे इति चामन्त्रणे प्रयोज्यम् । पेव्वे पिअ ॥

**वा सख्या मामि हळा हळे ॥ २ । १ । ५८ ॥**

आमन्त्रण इत्यनुवर्तते । सख्या आमन्त्रणे मामि हळा हळे इति त्रयो वा प्रयोज्याः । मामि भामिणि । एवं हळा हळे च । पक्षे सहि ॥

**दे सम्मुखीकरणे च ॥ २ । १ । ५९ ॥**

संमुखीकरणे चकारात् सख्या आमन्त्रणे च दे इति प्रयोज्यम् । दे सहि । दे राम । दे जैइण[9] ॥

**ओ पश्चात्तापसूचने ॥ २ । १ । ६० ॥**

---

१ चेच्छे M.; चच्छे P. २ चेच्छे विषाद° M. ३ M. drops चेव्वे इति. ४ प्रयोक्तव्यम् M. ५ चेच्छे M.; चच्छे P. ६ चच्छे P. ७ चच्छे P. ८ मा सु चापलम् M. ९ जाणइ M.

पश्चात्तापे सूचने च ओ इति प्रयोज्यम् । ओ कर्णं पावं । सूचने । ओ तुह चरिअं सव्वं विण्णाअं ॥

**अण णाइं नञर्थे ॥ २ । १ । ६१ ॥**

नञर्थे अण णाइ इत्येतौ प्रयोज्यौ । अण चिंतिअं मुणंति । न चिन्तितं जानन्ति । णाइं करेमि रोसं । न करोमि रोषम् ॥

**निश्चयनिर्धारणे वले ॥ २ । १ । ६२ ॥**

निश्चये निर्धारणे च वले इति प्रयोज्यम् । निश्चये । वले सीहो । सिंह एवायम् । निर्धारणे । वले पुरिसो धणंजओ खत्तिआणं । क्षत्रियाणां धनंजय एव पुरुषः ॥

**मणे विमर्शे ॥ २ । १ । ६३ ॥**

विमर्शे मणे इति प्रयोज्यम् । मणे सूरो । किंस्वित्सूरः ॥

**माइ मार्थे ॥ २ । १ । ६४ ॥**

माइ इति माकारार्थे प्रयोज्यम् । माइ होदु रोसो । मा भवतु रोषः ॥

**आलाहि निवारणे ॥ २ । १ । ६५ ॥**

निवारणे आलाहि इति प्रयोज्यम् । आलाहि विसाएण । अलं विषादेन ॥

**लक्षणे जेण तेण ॥ २ । १ । ६६ ॥**

एतौ लक्षणे प्रयोज्यौ । भमररुअं जेण तेण कमळवणं ॥

**त्वोद्वापोताः ॥ २ । १ । ६७ ॥**

अव अप इत्येतावुपसर्गौ उत इति विकल्पार्थो निपातश्च ओत्वं यापद्यन्ते । ओआरो । अवतारः अपचारो वा । ओ विरयमि णहत्थळे । उत विरचयामि नभस्तले । पक्षे अवआरो इत्यादि ॥

---

१ अण णाइं इत्येतावुपलाय स्याताम् P., My; अण णाइं इत्येतौ नमर्थे प्रयोज्यौ R. २ अलाहि M. ३ अलाहि M. ४ अलादि M. ५ प्रयोक्तव्यौ M., T.

**उ ओ उपे ॥ २ । १ । ६८ ॥**

उप इत्युपसर्गे उ ओ इति द्विधा प्रयोज्यम् । उआरो । ओआरो । उवआरो । उपचारः ॥

**प्रत्येकमः पाडिएक्कं पाडिक्कं ॥ २ । १ । ६९ ॥**

प्रत्येकमित्यस्मिन्नर्थे पाडिएक्कं पाडिक्कं इति तु प्रयोज्यम् । पाडिएक्कं । पाडिक्कं । पक्षे । पच्चेअं । अत्र 'त्योचैत्ये' इति त्यस्य चः ॥

**स्वयमो अप्पणा ॥ २ । १ । ७० ॥**

स्वयमित्यस्यार्थे अप्पणेति वा[१] प्रयोज्यम् । अप्पणा पाओ । स्वयं पाकः ॥

**एक्कसरिअं झडिति संप्रति ॥ २ । १ । ७१ ॥**

झडित्यर्थे संप्रत्यर्थे च एक्कसरिअमिति तु प्रयोज्यम् । एक्कसरिअं । झडिति संप्रति वा । पक्षे । झत्ति । संपइ ॥

**इहरा इतरथा ॥ २ । १ । ७२ ॥**

इहरा इति इतरथार्थे वा प्रयोज्यम् । इहरा । पक्षे । इअहरा ॥

**मुधा मोरउल्ला ॥ २ । १ । ७३ ॥**

मुधेत्यर्थे मोरउल्लेति तु प्रयोज्यम् । मोरउल्ला । पक्षे । मुहा ॥

**अयि ऐ ॥ २ । १ । ७४ ॥**

अयि इत्यर्थे ऐ इति वा प्रयोज्यम् । अत एव वचनादैकारस्यापि प्राकृते प्रयोगः । ऐ सहि । पक्षे अइ सहि ॥

**उव पश्य ॥ २ । १ । ७५ ॥**

पश्येत्यर्थे उवेति वा[४] स्यात् । उव णिप्फळणिप्फंदा । पश्य निष्फलनिष्पन्दा । पश्यतेत्यर्थे उवह इति च दृश्यते । उवह गोट्ठमज्झम्मि । पश्यत गोष्ठमध्ये ॥

---

१ इति तु for इति M., T. २ प्रयोक्तव्यः T. ३ तु for वा M.
४ तु प्रयोज्यं for वा स्यात् M., T.

**इजेराः पादपूरणे ॥ २ । १ । ७६ ॥**

पादपूरणेऽर्थे इ जे र इत्येते तु प्रयोक्तव्याः । रामो इ । एवं जेरयोरपि । अहो अहो हा नाम हे अहह हि आ इत्यादयः संस्कृतवदेव सिद्धाः ।

इत्यव्ययानि ।

---

## अथाव्ययेषु केचिद्विशेषाः प्रदर्श्यन्ते ।

कहं । कह । इआणिं । इआणि । अत्र मांसादित्वाद्विकल्पेन बिन्दुलोपः ॥

**एण्हि एत्ताहे इदानीमः ॥ १ । ३ । १०३ ॥**

इदानींशब्दस्य एण्हि एत्ताहे इत्यादेशौ भवतः । एण्हि । एत्ताहे ॥

**बाहिंबाहिरौ बहिसः ॥ १ । ३ । १०१ ॥**

बहिस्शब्दस्य बाहिं बाहिर ईत्येतौ वा स्याताम् । बाहिं । बाहिर । उवरिं । अत्र वक्रादित्वाद्बिन्दुः ॥

**यत्तत्सम्यग्विष्वक्पृथको मल् ॥ १ । १ । ३८ ॥**

'अन्त्यहलोश्रदुदि' इत्यतः 'अन्त्यहलः' इत्यनुवर्तते । एषामन्त्यहलो मः स्यात् । यत् । जं । तत् । तं । सम्यक् । सम्मं । अत्र 'मनयाम्' इति यलोपः । विष्वक् । वीसुं । अत्र 'उदध्वनि—' इत्यादिना वकारसंबन्धिनो वर्णस्य उत्वम् । 'लवराम्—' इति वलोपः । 'शोर्लुक्—' इत्यादिना दीर्घः । उच्चैः । अत्र 'ऐच एद्' इत्यतः 'ऐचः' इत्यपि हृत्य

**उच्चैर्नीचैसोरअः ॥ १ । २ । १०८ ॥**

---

१ T. drops पादपूरणेऽर्थे. २ पादपूरणे प्रयोक्तव्याः T. ३ संस्कृत एव सिद्धाः T. ४ केचुचिद्विशेषाः T. ५ कम्पल्ले M. ६ इदानींशब्दस्य M. ७ वा भवतः M; तु भवत T. ८ इत्यादेशौ वा स्याताम् T. ९ एतद्वर्तते M., T. १० इत्येते [illegible] T. ११ नीचैः after उच्चैः M.

अनयोरैचः अअ इत्यादेशो भवति । उच्चअ । नीचअ । पृथक्[1] । अत्र 'खघ—' इत्यादिना थस्य हः ॥

**ढः पृथकि तु ॥ १ । ३ । २१ ॥**

अत्र थस्य ढो वा स्यात् । पक्षे हत्वम् । यत्तत्सम्यक्—' इत्यादिनान्त्यहलो मत्वम् । 'वृष्टिपृथक्—' इत्यादिना ऋत इत्वमत्वं[2] च । पिढं । पुढं । पिहं । पुहं । मिथ्या । अत्र 'थ्यश्चत्सप्साम्' इति सूत्रेण थ्यस्य छेः । मिच्छा । ईषत् । अत्र स्वप्नादित्वादत इत्[3] । इसि ॥

**कूरो गौणेषतः ॥ १ । ३ । १०२ ॥**

*ईषच्छब्दस्य गौणस्य कूर इत्यादेशो भवति । चिंचव्व कूर वंका । चिंचेवेषद्वक्रा[4]* ॥ यथा । तथा । अथवा । कदा । तदा । मुधा । उभयथा । अन्यथा इत्यादौ 'न वाव्ययोत्खातादौ' इत्यादेराकारस्य विकल्पेन ह्रस्वः । जह । जहा । तह । तहा । अहव । अहवा । इत्यादि ॥ मृषा[5]

**उदूदोत् मृषे ॥ १ । २ । ८६ ॥**

अत्र ऋत उत्वमूत्वमोत्वं च[6] स्यात् । घोः सत्वे[7] । मूसा । मुसा । मोसा ॥ श्वः । अत्र 'एकाचि श्वस्त्वे' इति संयुक्तस्यान्त्यहलः प्रागुत्वम् । सुवो । क्त्वाप्रत्ययस्य

**तुमत्तुआणतूणाः क्त्वः ॥ २ । १ । २९ ॥**

क्त्वाप्रत्ययस्य तुं अत् तुआण तूण इति चत्वार आदेशा भवन्ति । तुं । दट्टुं । तुआण । दट्टुआण । तूण । दट्टूण । अत्र[8] 'घेत्तुंतव्यक्त्वासु ग्रहिः' इत्येतः 'तुंतव्यक्त्वासु' इत्यधिकृत्य[9]

---

१ 'खघथधभाम्' इत्यतः ध इत्यनुवर्तते M., T. २ छत्वम् T. ३ इत् M., T. ४ चिंचेवे° M. ५ My. and P. omit मृषा. ६ चत्वारि स्यात् M. ७ घोः सत्वे मुसा is omitted by My., P. ८ T. has before अत्र &c. 'का मुपोस्तु सुण्' इत्यनुस्वारे दंतुआणं दतूणं. ९ इत्यधिकृत्य M., T.

**ता द्वो दृशः ॥ २ । ४ । ४५ ॥**

दृशोन्त्यस्य तुमादिषु परेषु ता तकारेण सह द्विरुक्तः ठो भवति । इति ठः । 'ऋतोत्' इत्यत्वं च । अत् । भमिआ । भ्रमित्वा ॥

**घेत्तुंतव्यक्त्वासु ग्रहेः ॥ २ । ४ । ४३ ॥**

तुमादिषु परेषु ग्रहेर्धातोर्घेदित्यादेशो भवति । घेत्तुं । घेत्तुआण । घेत्तूण । अत्र तुंग्रहणेन तुसुन् ग्राहितो न तु क्त्वादेशः । क्त्वाग्रहणेनैव तस्य सिद्धत्वात् । 'घेत्तुंतव्यक्त्वासु ग्रहेः' इत्येतः 'तुंतव्यक्त्वासु' इत्यधिकृत्य

**अन्त्यस्य वचिमुचिरुदिश्रुभुजां डोल्ट् ॥ २ । ४ । ४४ ॥**

तुमादिषु परेषु एषामन्त्यस्य हलो डोत्वं लित् स्यात् । वचि । वोत्तुं । वोत्तुआण । वोत्तूण । मुचि । मोत्तुं । मोत्तुआण । मोत्तूण । रुदि । रोत्तुं रोत्तुआण । रोत्तूण । श्रु । सोत्तुं । सोत्तुआण । सोत्तूण । भुजें । भोत्तुं । भोत्तुआण । भोत्तूण । अदन्तेषु 'अदेल्लुक्यात्त्वोरतः' ईत्यतः 'अतः' इत्यधिकृत्य 'मोममुप्विच' ईत्यतः 'इत्' इति च

**एच क्त्वातुंतव्यभविष्यति ॥ २ । ४ । १८ ॥**

त्वादिषु परेष्वत एद्भवति चकारादिकारश्च । क्त्वा । हसेऊण । हसिऊण । तुं । हसेउं । हसिउं । एवमदन्ते सर्वत्र क्त्वातुमुनोरुदाहार्यम् । 'अतः' इति किम् । काऊण ॥

**आ भूतभविष्यति च कृञः ॥ २ । ४ । ४७ ॥**

'*अन्त्यस्य*' *इत्यनुवर्तते* । 'घेत्तुंतव्य—' इत्येतः 'तुंतव्य—' इत्यादि च । कृञोन्त्यस्य भूते भविष्यति चकारात्तुमादिषु च आकारो भवति । काउं । काउआण । काऊण । कृत्वा ॥ 'धातोः' इत्यधिकृत्य

---

१ 'घेदिति भवति T. २ इत्यधिकृत्य M., T. ३ डोत् M. ४ °मन्त्यस्य हलो M. ५ भुजि M., T. ६ इत्यधिकृत्य M., T. ७ इति च M., T. ८ एवं भवति M. ९ इति च M., T. १० आ इत्यादेशो वा भवति before भूते &c. T. ११ परतः for च आकारो भवति T.

**योरेद् ॥ २ । ४ । ६५ ॥**

इश्च उश्च युः । धातोरिवर्णोवर्णयोरेदोतौ यथासंख्यं भवतः । णेऊण । णेउआण । नीत्वा । जेऊण । जेउआण । जित्वा । सोऊण । सोउआण । श्रुत्वा । एवं सर्वत्रेवर्णोवर्णयोरुदाहार्यम् ॥

**णो ह्रश्च चिजिपूश्रुधूस्तुहुलूभ्यः ॥ २ । ४ । ७२ ॥**

ऐभ्यः[2] परो ण इत्यागमो भवति । तत्संनियोगेन दीर्घस्य[3] ह्रस्वश्च[1] । चिणिऊण । चित्वा । जिणिऊण । जित्वा । पुणिऊण[4] । पवित्वा । सुणिऊण । श्रुत्वा । धुणिऊण । धवित्वा । त्थुणिऊण । स्तुत्वा । हुणिऊण । हुत्वा । लुणिऊण । लवित्वा । अत्र दीर्घस्य ह्रस्वः । अत्र णकारात्परस्याकारस्य 'एच्च क्त्वातुं—' इत्यादिना एकारः । तथा च चिणेऊण इत्यादि सिद्धम् । ज्ञात्वा । अत्र 'जाणमुणौ ज्ञैः'[5] इति ज्ञाधातोर्जाणादेशे जाणिऊण । बहुलाधिकारात् जाणादेशस्य क्वचिद्विकल्प इति वचनात्तस्याभावे णाऊण । अत्र 'ज्ञ्नोः'[6] इति ज्ञस्य णादेशः । दीर्घस्य[7] ज्ञस्यादेशाणणस्यापि दीर्घः । अत्र सर्वत्र क्त्वाप्रत्ययादेशसंबन्धिनो णकारात् परतः 'क्त्वासुपोस्तु सुणात्' इति वा बिन्दौ दट्ठूणं । दट्ठुआणं । काऊणं । काउआणं । इत्याद्यपि संचारणीयम् । वंदित्ता इति तु सिद्धावस्थापेक्षया वलोपे । सदा । अत्र[8] 'इत्तु सदादौ' इत्यादेराकारस्य वा इत्वे सति । सआ । उभयत्र 'प्रायो लुक्—' इति दलोपः । अपि अत्र 'लुगव्ययत्यदाद्यात्तदचः' इत्यधिकृत्य 'वा—लाब्वरण्ये' इत्यतः 'वा' इति च 'आदेः' इति च[9]

**अपेः पदात् ॥ १ । २ । ५ ॥**

पदात् परस्यापीत्युपसर्गस्य आदेरचो वा लुक् स्यात् । किं[10] वि ।

---

१ स्तः P., My., २ एतेभ्यः M. ३ दीर्घस्य च ह्रस्वः M., T. ४ My. and P. have पुणिऊण । धुणिऊण । लुणिऊण । after हुत्वा. ५ ज्ञि M. ६ ज्ञिज्ञोः M. ७ दीर्घान्तज्ञाधात्वादेशत्वाण्ण° M. ८ अत्र is dropped in My., P. ९ इति च M., T. १० किमपि । किं वि M.

किमपि । तं[1] वि । तमपि । केणं[2] वि । केनापि । अहं[3] वि । इत्यादि । 'पदात्' किम् । अवि णाम । अपि[4] नाम ॥

इतेः ॥ १ । २ । ६ ॥

पूर्वं सर्वमनुवर्तते । पदात्परस्येति शब्दस्यादेरचो लुक् स्यात् । योगविभागान्नित्यम् । किं ति । किमिति । जं ति । यदिति । तं ति । तदिति । अत्र 'यत्तत्सम्यक्—' इति बिन्दुः । जुत्तं ति । युक्तमिति । 'पदात्' इति किम् । इअ विंझगुहाणिळआए । इति विन्ध्यगुहानिलयायाः । अत्र 'त्वेदितः' इत्यतः 'इतः' इत्यधिकृत्य 'मूषिकविभीतक—' इत्यादेः 'अत्' इति च

इतौ तो वाक्यादौ ॥ १ । २ । ४५ ॥

वाक्यादिभूते इतिशब्दे तकारसंबन्धिन इकारस्य अत्वं भवति । इतीकारस्यात्वम् । 'वाक्यादिभूते' इति किम् । पिएत्ति । प्रिये इति ।

तोचः ॥ १ । २ । ७ ॥

'इतेः' इत्यनुवर्तते । अचः परस्येतिशब्दस्यादेरचः तकारो भवति । झत्ति । झडिति । नूणं । एवं । किं । सं । अत्र मांसादित्वाद्विकल्पेन बिन्दुलोपे । णूणं । णूण । एवं । एव । किं । कि । सं । स ।

यावत् । तावत् । एवमेव । अत्र 'एवमेव देवकुल—' इत्यादिना सूत्रेण अन्तर्यर्तमानस्य वकारस्याचा सह लोपे । जा । जाव । ता । ताव । एमे अ । एवमेव । कुत्र । कुतः । 'त्रतसि च किमो क्कः' इति किमः कादेशे 'हित्यहासलः' इति त्रलः । त्रिप्वादेशेषु । किहि । कत्थ । कद । तस् । कादेशे कत इति स्थिते

अतो डो विसर्गः ॥ २ । २ । १२ ॥

अकारात् परो विसर्गो डिदोकारो भवति । कओ । अत्रैव 'दो वो तसः' इति तसो दो वो । कदो । कदो । सिद्धावस्थापेक्षया ।

---

१ तमपि । तं पि M. २ केनापि । केन पि M. ३ हं पि M. ४ अपि नाम is omitted in P., My. ५ इत्यधिकृत्य M., T.

कुओ । कुदो । एवमग्रतः । अग्गओ । पुरतः । पुरओ । सर्वतः । सव्वओ । इत्यादि । नपुनरशब्दे

**शिश्लुङ् नपुनरि तु ॥ १ । १ । २८ ॥**

'अन्त्यहलोश्रदुदि' ईत्यतः 'अन्त्यहलः' इत्यनुवर्तते[1] । नपुनरशब्दे अन्त्यव्यञ्जनस्य शानुबन्ध इकारो लुक् च वा[2] भवति । शित्वात् पूर्वस्य दीर्घः । णउणाइ । णउणा । पक्षे । णउण । णउणो । पुनरशब्दे पुणाइ इति च दृश्यते । णउणेत्यत्र पदादित्वात् परस्य लोपाभावेपि बहुलाधिकारात् क्वचिदादेरपि भवतीति पकारस्य लोपो भवति । तेन णउणा । न पुनः ।

प्रसङ्गाद्यद्यहमित्यादौ किंचिदुच्यते । यदि इमाः । वयमन्यत्र इत्यादौ 'आदेः' इत्यधिकृत्य

**लुगव्ययत्यदाद्यात्तदचः ॥ १ । २ । ३ ॥**

अव्ययात् त्यदादेश्च परस्य तदचस्तयोरेवाव्ययत्यदाद्योरादेरचो बहुलं लुक् स्यात् । अव्ययात् तावत् । जइ अहं । जइ हं । यद्यहम् । जइ इमा । जइमा । यदीमाः । त्यदादेः परस्य । अम्ह अण्णद्ध । अम्हण्णद्ध । वयमन्यत्र । 'आदेः' इति किम् । जइ इमा इत्यादावनादेर्माभूत् । एवं सर्वत्राव्ययसंबन्धिनस्त्यदादेरचो लोपो द्रष्टव्यः ॥

इत्यव्ययानि ॥

---

१ इत्यनुवर्तते T., M. २ M. drops वा.

## अथ तद्धितादेशाः ।

**मन्तमणवन्तमाआलुआलइरइल्लउल्लइन्ता मतुपः ॥ २ ।१।१॥**

मतुप्प्रत्ययस्य मन्तादय[1] आदेशा यथाप्रयोगं[2] भवन्ति । मन्त । श्रीमान् । सिरिमन्तो । पुंण्यवान्[3] । पुण्णमन्तो । मण । धनवान्[4] । धनमणो । वन्त । भक्तिमान् । भक्तिवन्तो । मा । हनुमान्[5] । हणुमा । पद्मवान् । पउमा । आलु । गेहालू । दयालू । लज्जालू । आल । सद्दालो । जडालो । रसालो । जोह्णलो । इर । गव्विरो । गर्ववान् । अत्रानुक्तन्यायेन यस्येति चेत्यकारलोपः । इल्ल । छाइल्लो । भाइल्लो । उल्ल । दप्पुल्लो । दर्पवान् । अत्र डित्करणाभावेपि बहुलग्रहणादकारलोपः । इंत । मानवान्[6] । माणइन्तो । 'मतुपः' इति किम् । धणी[7] । अत्थी[8] ॥

**वतुपो डित्तिअमिदमेतल्लुक् चैतद्यत्तदः ॥ २ । १ । २ ॥**

एतद् यद् तद् एतेभ्यः परस्य परिमाणार्थस्य वतुप् प्रत्ययस्य डित् इत्तिअम् इत्यादेशः स्यात् इदमेतदोः लुक् च । एतावत्[9] । इत्तिअं । यावत् । जित्तिअं । तावत्[10] । तित्तिअं ।

**किमिदमश्च डेत्तिअडित्तिलडेद्दहं ॥ २ । १ । ३ ॥**

किमिदंभ्यां परस्य चकारादेतद्यत्तदः परस्य वतुप्प्रत्ययस्य डानुबन्धाः एत्तिअ इत्तिल एद्दह इत्यादेशा भवन्ति इदमेतल्लुक्[11] च । डानुबन्धादन्त्यस्वरादेर्लुक् । एतावत् । एत्तिअं । इत्तिलं । एद्दहं । कियत् । केत्तिअं । कित्तिलं । केद्दहं । इयत् । एत्तिअं । इत्तिलं । एद्दहं । यावत् । जेत्तिअं । जित्तिलं । जेद्दहं । तावत् । तेत्तिअं । तित्तिलं । तेद्दहं ॥

---

[1] मन्तादयो for मन्तादय आदेशा T. [2] यथाक्रमं प्रयोगे M. [3] My. and P. omit पुण्यवान्. [4] धनमंतो । धनवान् M. [5] हणुमन्त् । हणुमो M. [6] मानवान् is omitted in P., My. [7] धणी M. [8] मती M. [9] मावत् is omitted in My., P. [10] My. and P. omit तावत्. [11] लुः My., P.

इकः पथो णस्य ॥ २ । १ । ४ ॥

'पंथो ण नित्यम्' इति पथो यो णप्रत्ययो विहितस्तस्य इक इत्यादेशो भवति । पांथः । पहिओ । यद्यपि पथिकशब्दादपि सिद्धावस्थापेक्षयेदं रूपं भवति तथापि पान्थशब्दस्य रूपान्तरनिवृत्त्यर्थमिदमुदाहृतम् ॥

खस्य सर्वाङ्गात् ॥ २ । १ । ५ ॥

इक इत्यनुवर्तते । सर्वाङ्गाद् व्यापिन्यर्थे विहितस्य खप्रत्ययस्य इक ईत्यादेशो भवति । सर्वाङ्गीणः । सव्वंगिओ ॥

छस्यात्मनो णअः ॥ २ । १ । ६ ॥

आत्मनः परस्य छप्रत्ययस्य णअ इत्यादेशो भवति । आत्मीयम् । अप्पणअं । अत्र 'वात्म भस्मनि पः' इति पः ।

हित्थ हात्रलः ॥ २ । १ । ७ ॥

सप्तम्यन्तात्रीम्नो विहितस्य त्रल्प्रत्ययस्य हि त्थ ह इति त्रय आदेशा भवन्ति । यत्र । जहि । जद्ध । जह । कुत्र । कहि । कद्ध । कह । अत्र 'त्रतसि च किमो स्कः' इति किमः कादेशः । अन्यत्र । अण्णहि । अण्णद्ध । अण्णह । इत्यादि ॥

केर इदमर्थे ॥ २ । १ । ८ ॥

इदमर्थे विहितस्य प्रत्ययस्य केर इत्यादेशो भवति । युष्मदीयः । तुम्हकेरो । अत्र 'अर्थपरे तो युष्मदि' इति यस्य तकारः । 'श्मष्म—' इत्यादिना ष्मस्य म्हः । अस्मदीयः । अम्हकेरो । अत्रैव दैवादिपाठाद् द्वित्वे अम्हक्केरो । अत्रापि पूर्ववत् म्हादेशः । बहुलाधिकारात् क्वचिन्न भवति । मदीयपक्षः । मईअपक्खो । मदीयमार्गः । मइज्जमग्गो । पाणिनीयं । पाणिणीअं ।

---

१ भवेत् T. २ इत्यादेशः स्यात् My., P. ३ °न्तात् सर्वनाम्नो T. ४ आदेशाः स्युः P., My. ५ इत्यादेशः स्यात् P., My. ६ मइज्जपक्खो M. ७ My. and P. omit मदीयमार्गः । मइज्जमग्गो । ८ पाणिणिअं M.

राजपराह्निकडक्को च ॥ २ । १ । ९ ॥

राजन् पर इत्येताभ्यां परस्य इदमर्थप्रत्ययस्य डित् इक्क अक्क इति भवतः चकारात् केरश्च । राजकीयम् । राइक्कं । अत्र जलोपटिलोपौ । राअक्कं । राअकेरं । परकीयं । पारिक्कं । पारक्कं । पारकेरं । अत्र समृद्ध्यादिपाठादादेरवर्णस्य वा दीर्घः[1] । परिक्कं । परक्कं । परकेरं ॥

डेच्चओ युष्मदस्मदोणः ॥ २ । १ । १० ॥

युष्मदस्मद्भ्यां परस्य इदमर्थस्य अणः डित् एच्च अ इत्यादेशो[2] भवति । यौष्माकम् । तुम्हेच्चअं । आस्माकम् । अम्हेच्चअं ।

व्वे वतेः ॥ २ । १ । ११ ॥

उपमानार्थस्य वतिप्रत्ययस्य व्व इत्यादेशो[3] भवति । रित्वाङ्गिल्लम् । मुहुरुव्व पाडलीवुत्ते पासाओ । मधुरावत् पाटलीपुत्रे प्रासादः ॥

त्वस्य तु डिमात्तणौ[4] ॥ २ । १ । १२ ॥

भावार्थस्य त्वप्रत्ययस्य डित् इमा त्तण इत्यादेशौ तु भवतः । पीनत्वम् । पीणिमा । पीणत्तणं । पृथुत्वम्[5] । पुत्थिमा । पुत्थत्तणं । पक्षे पीणत्तं । पुव्वत्तं । 'त्वस्य' इति किम् । पीणआ । पीणदा । पीनता ॥

दो त्तो तसः ॥ २ । १ । १४ ॥

पञ्चम्यन्तात्प्रातिपदिकात्परस्य तसः दो त्तो इति वा भवतः । सव्वदो । सव्वत्तो । अण्णदो । अण्णत्तो । पक्षे । सव्वओ । इत्यादि ॥ अत्र

अतो डो विसर्गः ॥ २ । २ । १२ ॥

---

१ दीर्घं T. २ इत्यादेशः स्यात् T. ३ इत्यादेशः स्यात् T. ४ T. has before it the following:—तैलस्यानंकोठाड्डेल्लः । अंकोठवर्जितात्पर-स्य तैलस्य एल्ल इत्यादेशो भवति । सुरहेल्लं । सुरभितैलम् । कडुएल्लं । कटुतैलम् । 'अनंकोठात्' इति किम् । अंकोल्लतेल्लं । ५ M. and T. have पुष्पत्वम् before it.

[1]ङेसिति चतुर्थी ङसिति षष्ठी । चतुर्थीस्थाने षष्ठी स्यात् । मुणिस्स मुणिणो भोअणं देहि । णमो देवस्स देवाण ॥

तादर्थ्ये ङेस्तु ॥ २ । ३ । ३६ ॥

तादर्थ्यचतुर्थ्येकवचनस्थाने[4] षष्ठी वा[5] स्यात् । देवस्स । देवाय । देवार्थमित्यर्थः । 'ङेः'[2] इति किम् । देवाणं[3] ॥

वधाड्डाइ च ॥ २ । ३ । ३७ ॥

वधात्[6] परस्य ङे स्थाने आइ इति डिद्वा स्यात् । जातु षष्ठी । वहाइ । वहस्स । वहाय । वधार्थम्[9] ॥

क्वचिदसादेः ॥ २ । ३ । ३८ ॥

ङमनुवर्तते । द्वितीयादिविभक्तीनां स्थाने क्वचित् षष्ठी स्यात् । माहवस्स वन्दे । माधवं वन्दे । धणस्स लद्धो । धनेन लब्धः । चोरस्स भिहइ । चोराद्बिभेति । अन्तेउरस्स रमिउं आअओ । अन्तःपुरे रन्तुमागतः ॥

अस्टासोर्ङीप् ॥ २ । ३ । ३९ ॥

अस् द्वितीया टास् तृतीया तयोः स्थानेङीप् सप्तमी कचिद्भवति तु । गामे वहामि । ग्रामं वहामि । णअरे णजामि । नगरं नयामि । अत्र द्वितीयायाः । तेसुं अलंकआ पुहवी । तैरलंकृता पृथिवी । अत्र तृतीयायाः ॥

ङसिसष्टास् च ॥ २ । ३ । ४० ॥

ङसिसः पञ्चम्याः टास् तृतीया चकारात्[8] सप्तमी भवति । चोरेण भिहइ । चोराद्बिभेति । अंदेपुरे रमिअ आअओ । अन्तःपुराद्रन्त्वा आगतः ॥

ङिपोस् ॥ २ । ३ । ४१ ॥

---

१ ङेस् चतुर्थी P., My. २ ङं षष्ठी My., P. ३ देवाणं M. ४ °क-वचनस्य M. ५ M. drops वा. ६ पदात् M. ७ पदात् M. ८ पाद M.; चकारात् T. ९ पदार्थम् M.

ङिपः सप्तम्याः स्थाने अस् द्वितीया क्वचित् स्यात् । विज्जुज्जोअं भरइ रइं । विद्युद् द्योते स्मरति रतिम् ॥

प्रसङ्गादेकैकमित्यादि वीप्सास्थाने किंचिदुच्यते ।

**वीप्सार्थाचदचि सुपो मस्तु ॥ २ । २ । १ ॥**

वीप्सार्थात् पदात् परस्य सुपःस्थाने तदचि तस्य वीप्सार्थस्य संबन्धिन्यचि परे मो वा स्यात् । एकैकं । एकमेक्कं । एकमेकेण । अंगे अंगे । अंगमंगम्मि । पक्षे । एक्केकं । इत्यादि । एवं वीप्सास्थले सर्वत्र रूपाण्युदाहर्तव्यानि ॥

इति विभक्त्यर्थाः ॥

---

## अथ निपाताः प्रदर्श्यन्ते[२] ।

**वरइत्तगास्तृनाद्यैः ॥ २ । १ । ३० ॥**

वर इत्त इत्यादयस्तृनादिप्रत्ययसहिताः स्वराद्यादेशविशेषिता बहुलं निपात्यन्ते ॥

**वरइत्तो नूतनवरे ॥ १ ॥** अस्मिन् वरइत्तो इति निपात्यते । वरइत्तो । **कणइल्लवाअडौ शुके ॥ २ ॥** कणइल्ल वाअड इत्येतौ शुके निपात्येते । कणइल्लो । वाअडो । **मइलपुत्ती पुष्पवत्याम् ॥ ३ ॥** पुष्पवत्यां मइलपुत्ती इति प्रयोज्यम् । मइलपुत्ती । **द्विपे दुग्घोट्टदोग्घोट्टदूणाः ॥ ४ ॥** त्रय एते द्विपे निपात्यन्ते । दुग्घोट्टो । दोग्घोट्टो । दूणो । **धाराविरेचनशीले विरिचिरो ॥ ५ ॥** अस्मिन्नयं निपात्यते । विरिचिरो । **सूरल्ली मध्याह्ने ॥ ६ ॥** मध्याह्नेयं प्रयोज्यः । सूरल्ली । **कोमलविलासिनोर्वेढपाह्लौ ॥ ७ ॥** अनयोरयं निपात्यते । **नूपुरे सद्दालं ॥ ८ ॥** नूपुरेयं निपात्यते । सद्दालं । भ्रमरे

---

१ भवति T. २ T. has श्रीशिवाय नमः after this. ३ P. and My. drop from अस्मिन् to वरइत्तो. ४ P. and My. drop from कणइल्ल to वाअडो. ५ My. and P. drop it.

अकारात् परो विसर्गो डिदोकारः स्यात् । इति विसर्गस्यौकारः । एवमग्रतः पुरतः कुत इत्यादि ॥

एकाद्स्सिसिअइआ ॥ २ । १ । १५ ॥

एकशब्दात् परस्य दाप्रत्ययस्य सि सिअ इआ इत्यादेशा भवन्ति । एकदा । एकसि । एकसिअ । एकइआ । पक्षे । एकआ । अत्र दैवादिपाठाद् द्वित्वम् । पक्षे । एगसिअ । इत्याद्यपि ॥

ल्हुत्तं कृत्वसुचः ॥ २ । १ । १६ ॥

कृत्वसुच्प्रत्ययस्य हुत्तमित्यादेशो लित् स्यात् । सँअहुत्तो । शतकृत्वः । सहासहुत्तो । सहस्रकृत्वः । इत्यादि । अत्र 'शोर्लुस—' इति दीर्घः ॥

भवेडिल्लोल्लडौ ॥ २ । १ । १७ ॥

भवार्थे नाम्नः परौ इल्ल उल्ल इत्येतौ डितौ भवतः । पुरो भवम् । पुरिल्लं । अधो भवम् । हेट्ठिल्लं । अत्र 'उभयाधसोरवहहेट्ठौ' इत्यधसो हेट्ठादेशः । उल्ल । आत्मभवम् । अप्पुल्लं ॥

स्वार्थे तु कश्च ॥ २ । १ । १८ ॥

स्वार्थे नाम्नः परः कप्रत्ययो[२] वा भवति । चकाराड्डिल्लोल्लौ च । चन्द्रः । चन्द्रो । चन्दओ । इह । इहअ । ककारोच्चारणं पैशाचीभाषार्थम् । तेन तत्र वदनं वतनकं । डिल्ल । पुरिल्लो । पुरा । पुरो वा । उल्ल । पिउल्लो । प्रियः । मुहुल्लं । मुखम् । हत्थुल्लो । हत्थो । हस्तः । पक्षे । चन्दो । इत्यादि । कुत्सादिविशिष्टेषु संस्कृतवदेव कः सिद्धः ॥

उपरेः संव्याने ल्लः ॥ २ । १ । १९ ॥

उपरिशब्दात् सव्यानेर्थे द्विरुक्तो लो भवति । लित्वान्नित्यम् । उपरिल्लो । 'सव्याने' इति किम् । उवरिं[३] । अत्र वक्रादित्वाद्विन्दुः ॥

१ शतहुत्त. । सअहुत्तो M. २ कप्रत्ययस्तु भवति M. ३ उवरिं M.

**मिश्राड्डिअश्॥ २। १। २१॥**

मिश्रशब्दात् स्वार्थे डिड्डा लिअ इत्यादेशः स्यात्। शित्वात्पूर्वस्य दीर्घः। मीसालिअं। पक्षे। मीसं। अत्र 'शोर्लुप्त—' इति दीर्घः॥

**शनैसो डिअं॥ २। १। २२॥**

असाड्डिड्डिच इअं स्यात्। सणिअं॥

**मनाको डअं च वा॥ २। १। २३॥**

असात् डित् अअं चकारादिअं च वा स्यात्। मणअं। मणिअं॥

**रो दीर्घात्॥ २। १। २४॥**

असात् स्वार्थे रो वा स्यात्। दीहरं। दीहं। दिग्घम्॥

**लो वा विद्युत्पत्रपीतान्धात्॥ २। १। २६॥**

एभ्यः स्वार्थे लो वा स्यात्। विज्जुला। विज्जू। पत्तलं। पत्तं। पीवलं। पीअं। अन्धलो। अन्धो॥

**इरः शीलाद्यर्थस्य॥ २। १। २८॥**

शीलधर्म्यसाध्वर्थं विहितस्य प्रत्ययस्य स्थाने इर ईत्यादेशो भवति। हँसनशीलः। हँसिरो। रोदनशीलः। रोइरो। लज्जाशीलः। लज्जिरो। जपशीलः। जपिरो। इत्यादि॥

---

इति तद्धितादेशाः॥

अथ शास्त्रोक्ताः कतिचिद्विभक्त्यर्थाः प्रदर्श्यन्ते॥

**ङसो हम्॥ २। ३। ३५॥**

---

१ T. adds before this.—नवैकाद्वा। नव एक इत्येताभ्यां परस्य स्वार्थे द्विरुक्तो लो वा भवति। णवल्लो एक्को। अत्र दैवादित्वाद्द्वित्वम्। २ T. adds पक्षे मणा after it; P. has इत्युत्तरं पक्षे मणा after it. ३ पीअं। पीवलं M. ४ अन्धो। अन्धलो M. ५ °साधुकार्यार्थे T., M. ६ इत्यादेशः स्यात् T. ७ गदनशीलः T. ८ गद्दिरो T.

**अह्लिह्ल पुह्लंधअ रसाआः** ॥ ९॥ एते त्रयो भ्रमरे निपात्यन्ते । अह्लिह्लो । पुह्लंधओ । रसाओ । **लअणी कणई लइणा लतायाम्** ॥ १० ॥ त्रय एते लतायां निपात्यन्ते । लअणी । कणई । लइणा । **कनीयस्यां बहुज्जा** ॥ ११ ॥ अस्यामयं निपात्यते । [1]बहुज्जा । **भ्रातृजायायां भाउज्जा** ॥ १२ ॥ अस्यां भाउज्जा इति निपात्यते । [2]भाउज्जा । **मातुलात्मजास्याल्योर्मेहुणिआ** ॥ १३ ॥ अनयोरयं निपात्यते । मेहुणिआ । **रोदनशीले रिमिणो** ॥ १४ ॥ अस्मिन् रिमिण इति निपात्यते । रिमि[3]णो । **अडअणाछिच्छईपुण्णाळयः पुंश्चल्याम्** ॥ १५ ॥ [4]त्रयोऽस्यां निपात्यन्ते । अडअणा । छिच्छई । पुण्णाळी । **बहुमिथ्यावा[5]दिनि चप्पळओ** ॥ १६ ॥ अस्मिन्नयं निपात्यते । चप्पळओ । **पिव्वं जले** ॥ १७ ॥ [6]जले अयं निपात्यते । पिव्वं । **मघोणो मघवति** ॥ १८ ॥ [7]मघवत्ययं निपात्यते । मघोणो । **सइलासिओ मयूरे** ॥ १९ ॥ अस्मिन्नयं निपात्यते । सईलासिओ । [8]**प्रलपिते वाउल्लो** ॥ २० ॥ [9]प्रलपिते वाउल्लो इति निपात्यते । वाउल्लो । **मूर्खेपलहिअओ** ॥ २१ ॥ [11]अस्मिन्नयं निपात्यते । पलहिअओ । उपलहृदय इत्यर्थः । **चण्डि[12]कः कोपे** ॥ २२ ॥ कोपेयं निपात्यते । चण्डि[13]क्को । [14]**चण्डिज्जः पिशुनकोपयोः** ॥ २३ ॥ अनयोरयं निपात्यते । चण्डिज्जो । **म्लाने कुम्मणो** ॥ २४ ॥ अस्मिन्नयं निपात्यते । [15]कुम्मणो । **द्वेष्ये अच्छिहरुल्लो** ॥ २५ ॥ अस्मिन्नयं

---

१ M. drops this Sûtra; M. has it with this remark ग्रन्थान्तरेऽयं दृश्यते. २ My. and P. drop it. ३ My. and P. omit it. ४ अस्यां त्रयो M. ५ °वाचिनि M. ६ My. and P. drop the line. ७ My. and P. drop this line. ८ My. and P. omit it. ९ My. and P. omit it. १० My. and P. drop the line. ११ My. and P. drop from अस्मिन् to पलहिअओ. १२ चण्डिक्को M. १३ My. and P. omit it. १४ चण्डिज्जो M. १५ My. and P. drop it.

निपात्यते । अच्छिहरुल्लो । रूपवति च्छैाइल्लो ॥ २६ ॥ रूपवत्ययं प्रयोज्यः । छोइल्लो । कान्तिमान् । लतागृहे कुडङ्गकुडङ्गकुडङ्को: ॥ २७ ॥ असिन्नेते निपात्यन्ते । कुडुङ्गो । कुडङ्गो । कुडुङ्को । वृद्धे जरण्डो ॥ २८ ॥ वृद्धे अयं निपात्यते । जरण्डो । अच्छिविअच्छी परस्पराकृष्टौ ॥ २९ ॥ अस्यां अच्छिविअच्छी इति निपात्यते । अच्छि । विअच्छी । धूमरी तुहिने ॥ ३० ॥ तुहिने अयं निपात्यते । धूमरी । सोत्ती तरङ्गिण्याम् ॥ ३१ ॥ अस्यामयं निपात्यते । सोत्ती । ग्रहभीते अहिसिओ ॥ ३२ ॥ अस्मिन्नयं प्रयोज्यः । अहिसिओ । गवि गावी ॥ ३३ ॥ गवि गावीति निपात्यते । गावी । उद्धूलपद्धलौ पार्श्वद्वयाप्रवृत्तौ ॥ ३४ ॥ अस्यामुद्धल पद्धल इत्येतौ निपात्येते । अङ्गस्पर्शनिमित्तयोर्हासपुलकयोर्गज्जलिओ ॥ ३५ ॥ अङ्गस्पर्शनिमित्ते हासे पुलके चायं निपात्यते । गज्जलिओ । चिक्तलं रम्ये ॥ ३६ ॥ रम्ये अयं निपात्यते । चिर्त्तलं । पाडहुकः प्रतिभुवि ॥ ३७ ॥ प्रतिभुव्ययं निपात्यते । पाडहुकः । पासणिअपासाणिओ साक्षिणि ॥ ३८ ॥ असिन्नेतौ निपात्येते । पासणिओ । पासाणिओ । अवरिज्जलाहिल्लावद्वितलम्पटयोः ॥ ३९ ॥ अनयोरेतौ क्रमान्निपात्येते । अवरिज्जं । लाहिल्लो । कडिल्लमार्गीगेहनदौवारिककटियस्त्रनिर्व्विवरविपक्षेषु ॥४०॥

१ प्रयोज्यः My., P. २ Omitted in P., My. ३ चाइल्लो M. ४ My. and P. drop रूप–प्रयोज्यः. ५ चाइल्लो M. ६ M. drops it. ७ प्रयोज्यः T. ८ My. and P. omit it. ९ अचिविअची M. १० अचिविअची M. ११ निपात्येते M. १२ अचि । विअची M. १३ My. and P. drop it १४ Omitted in P., My. १५ My. and P. omit it. १६ Omitted in P., My. १७ My. and P. drop the line. १८ My. and P. omit it. १९ My. and P. omit the line. २० निपाताः T. २१ पाडहुओ M. २२ My. and P. omit the line. २३ My. and P. drop from अनयो—to निपात्येते.

आशीःप्रभृतिषु षट्सु कडिल्लमिति निपात्यते । कैडिल्लं । रूवसिणी कुडुंबीअं रूपवतीसुरतयोः ॥ ४१ ॥ रूपवत्यां सुरते च क्रमादेतौ स्तः । रूवसिणी । कुडुंबीअं । अन्तरिज्जं रशनाकटिसूत्रयोः ॥ ४२ ॥ अनयोरयं निपात्यः । अन्तरिज्जं । अवडुल्लिअं कूपादिनिपतिते ॥ ४३ ॥ अस्मिन् अवडुल्लिअं इति निपात्यते । अैवडुल्लिअं । अैवडुक्किअं इति केचित् । पिप्पडिअबुड्डिरौ यत्किंचित्पठितमहिषयोः ॥ ४४ ॥ यथाक्रमं निपात्येते । पिप्पडिअं । बुड्डिरो । सरिसाहुलगुमिलौ सदृशमूढयोः ॥ ४५ ॥ अनयोरेतौ क्रमान्निपात्येते । सरिसाहुलो । गुमिलो । कच्चं कार्ये ॥ ४६ ॥ अैस्मिन्नयं स्यात् । कच्चं । घडिआघडाघड्यौ गोष्ठ्याम् ॥ ४७ ॥ गोष्ठ्यामेतौ निपात्यौ । घडिआ । घडाघडी ॥ निश्रेण्यां कमणी ॥ ४८ ॥ किरिकिरिआ कर्णोपकर्णिकाकुतुकयोः ॥ ४९ ॥ अनयोरयं प्रयोज्यः । किरिकिरिआ । अण्णइकः सर्वार्थतृप्ते ॥ ५० ॥ सर्वार्थे यस्तृप्तस्तस्मिन्नयं निपात्यः । अण्णइओ । साहुली शाखायाम् ॥ ५१ ॥ शाखायामयं निपात्यः । साहुली । दृष्टार्थयाचनशीले जंपेक्खिमग्गिरओ ॥ ५२ ॥ अस्मिन्नयं निपात्यते । जंपेक्खिमग्गिरओ । गअसांउल्लसिहंडहिल्लौ विरक्तबालकयोः ॥ ५३ ॥ अनयोरेतौ क्रमाद् भवतः । गअसांउल्लो । सिहंडहिल्लो । धूर्तवृषभे अलवलवसहो ॥ ५४ ॥ अस्मिन्नयं प्रयोज्यः । अैलवलवसहो । प्रणयकोपे खुरहखुडी ॥ ५५ ॥ अस्मिन्नयं निपात्यः । खुरहखुडी । हिमकालदुर्दिने सीउल्लं सीउट्टं च ॥ ५६ ॥ अस्मिन्नेतौ निपात्येते ।

---

१ My. and P. omit it. २ यथाक्रम° T. ३ My. and P. omit it. ४ M. omits अव—केचित्. ५ My. and P. omit the line. ६ निपात्येते T. ७ M. omits it. ८ My. and P. omit सर्वार्थे—निपात्यः. ९ My. and P. omit it. १० °साहुल्ल M. ११ °दइल्लो M. १२ °साहुल्लो M. १३ °दइल्लो M. १४ My. and P. drop it. १५ निपात्यते My., P. १६ प्रयोज्या P., My.

सीउल्लं । सीउट्टं । तित्तिवरण्डौ तात्पर्यप्राकारयोः ॥ ५७ ॥ अनयोरेतौ क्रमात् स्तः । तित्ति । वरंडो । वरण्डः संस्कृतेपीति केचित् । त्रपायां हीरंणा ॥ ५८ ॥ अस्यामयं स्यात् । हीरंणा । ग्रामभक्षके गामेरेडो ॥ ५९ ॥ [3]योन्तः स्थित्वा ग्रामं भुङ्क्ते तस्मिन् गोमेरेडो इति निपात्यते । गोमेरेडो । लडहावेल्लर्यौ विलासवत्याम् ॥ ६० ॥ अस्यामेतौ स्तः । लडहा । वेल्लरी । डुम्मइणीलज्जालुइण्यौ कलहकारिणीत्रपावत्योः ॥ ६१ ॥ अनयोरेतौ क्रमात् स्तः । डुम्मइणी । लज्जालुइणी । तण्णाअचिक्खअणावार्द्रासहनयोः ॥ ६२ ॥ आर्द्रे असहने चैतौ क्रमात् स्तः । तण्णाअं । चिक्खअणो । वेणिअ-सुण्हसिऔ वचनीयनिद्राशीलयोः ॥ ६३ ॥ अनयोरेतौ क्रमात् स्तः । वेणिअं । सुण्हसिओ । वप्पिअवन्धोल्लौ केदारमेळकयोः ॥ ६४ ॥ अनयोः क्रमादेतौ स्तः । वप्पिओ । वन्धोल्लो । वारिज्जो विवाहे ॥ ६५ ॥ अस्मिन्नयं स्यात् । वारिज्जो । हडहडसाउल्लावनुरागे ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । हडहडो[13] । साउल्लो । माणंसी मायाविमनस्विनोः ॥ ६७ ॥ अनयोरयं निपात्यः । माणंसी । फोडिअफोडिल्लौ पिशुने ॥ ६८ ॥ अस्मिन्नेतौ निपात्येते । फोडिओ । फोडिल्लो । अट्टण्णगंजोलौ वैतंड्यसमाकुलयोः ॥ ६९ ॥ अनयोरेतौ स्याताम् । अट्टण्णो । गंजोलो । वन्दिनि वंडिणो ॥७०॥ अस्मिन्नयं निपात्यः । वंडिणो । तत्तिलतच्छिलौ तत्परे ॥ ७१ ॥ अस्मिन्नेतौ निपात्येते । तत्तिलो । तच्छिलो । ऊसुंभिअं रुद्धगलरोदने

१ हिरणा M. २ My. and P. omit the line. ३ M. has अस्यामयं स्यात् for योन्तः स्थित्वा—निपात्यते. ४ गामरेडो M. ५ गामरेडो M. ६ च क्रमादेतौ My., T. ७ वन्दोलो M. ८ °मेळकपप्ययोः M. ९ वन्दोल्लो M. १० वारिजुरिं° M. ११ My. and P. drop the line. १२ वारिजु M. १३ स्यात् M. १४ My. and P. omit it. १५ प्रयोम्रौ T. १६ आलस° M. १७ My. and P. drop the line. १८ My. and P. drop अस्मिन्नेतौ निपात्येते.

॥ ७२ ॥ अस्मिन्नयं स्यात् । ऊसुंभिअं । णिउक्कबम्हालठाणिज्जउवउज्जास्तूष्णीकापसारगौरवोपकारिषु ॥ ७३ ॥ क्रमादेतेष्वेते स्युः । णिउक्को । बम्हालो । ठाणिज्जं । उववज्जो । एक्कल्लमहल्लौ प्रबलमुखरयोः ॥ ७४ ॥ [1]अनयोरेतौ [2]स्याताम् । एक्कल्लो । महल्लो । माउसिआ माउच्छा च मातृष्वसरि ॥ ७५ ॥ अस्यामेतौ स्याताम् । माउसिआ । माउच्छा ॥ कुच्छिमई गर्भवत्याम् ॥ ७६ ॥ [3]अस्यामयं स्यात् । कुच्छिमई । [4]रिंछोळीधोरण्यौ पङ्क्तौ ॥ ७७ ॥ [5]अस्यामेतौ स्याताम् । [6]रिंछोळी । घो[7]रंणी । पटकुट्यां पडमा ॥ ७८ ॥ यूनि जुअणो ॥ ७९ ॥ करमरी हठहृतायाम् ॥ ८० ॥ दववर्त्मनि दड्डाळी ॥ ८१ ॥ कृत्रिमे कारिमम् ॥ ८२ ॥ जंघालुअजंघामऔ द्रुते ॥ ८३ ॥ [8]एतौ द्रुते स्याताम् । जंघालुओ । जंघामओ । बलामोडी बलात्कारे ॥ ८४ ॥ अस्मिन्नयं स्यात् । बलामोडी । चक्कलं वर्तुले ॥ ८५ ॥ [9]अस्मिन्निदं स्यात् । चक्कलं ॥ बहुल्ली क्रीडोचितसालभञ्जिकायाम् ॥ ८६ ॥ अस्यामयं स्यात् । [10]बहुल्ली । मत्ते मत्तवालो ॥ ८७ ॥ [11]मत्तवालो । बहुल्लिआ ज्येष्ठभ्रातृवध्वाम् ॥ ८८ ॥ [12]अस्यामयं स्यात् । बहुल्लिआ । जंभणंभणः स्वैरभा[13]षिणि ॥ ८९ ॥ अस्मिन्नयं स्यात् । जंभणंभणो । भाइरभेज्जलभेज्जओज्जरा भीरौ ॥ ९० ॥ चत्वार एते निपात्यन्ते । भाइरो । भेज्जलो । भेज्जो । ओज्जरो । आहडं सीत्कारे ॥ ९१ ॥ सीत्[14]कारे आहडं स्यात् । आहडं । [15]कोंआपिउला कोकि[16]लायाम् ॥ ९२ ॥ [17]अस्यामयं निपा-

---

१ My. and P. drop अनयो—स्याताम्. २ क्रमात् स्याताम् T. ३ My and P. omit the line. ४ रिंभोळ्दिो° M. ५ My. and P. drop the line. ६ रिंभोळि M. ७ दोरणी M. ८ अस्मिमेतौ स्याताम् M. ९ P. and My. drop the line. M. has चकलं only in place of the line. १० My. and P. drop it. ११ My. and P. omit it. १२ P. and My. omit अस्यामयं स्यात्. १३ °भापणे T. १४ P. and My. omit the line. १५ राअ° M. १६ कोकिले T. १७ अस्मिमयं स्यात् T.

स्यते । काअपिउला । मुहलं मुखे ॥ ९३ ॥ मुहलं । गत्तडी गायिकायाम् ॥ ९४ ॥ असामर्थ्यं स्यात् । गैत्तडी । दुद्दोलना गवि ॥ ९५ ॥ गव्ययं निपात्यते । दुद्दोलना । माभाय्यभये ॥ ९६ ॥ अभये अयं स्यात् । माभाइ । तोमरिकः शस्त्रमार्जने ॥ ९७ ॥ असित्रयं स्यात् । तोमरिओ । वहुहाडिणी वध्वा उपरि परिणीतायाम् ॥ ९८ ॥ असामर्थ्यं स्यात् । वहुहाडिणी । रूअरूइआ उत्कलिकायाम् ॥ ९९ ॥ असामर्थ्यं स्यात् । रूअरूइआ । पुप्फीपिउसिआपिउच्चाः पितृष्वसरि ॥ १०० ॥ असामेते स्युः । पुप्फी । पिउसिआ । पिउच्चा । आसन्नप्रसवायामणुसूआ ॥ १०१॥ असामर्थ्यं स्यात् । अणुसूआ । भाँगिनेये भचो ॥ १०२ ॥ असित्रयं स्यात् । भचो । ओहट्टयपसृतौ ॥ १०३ ॥ अपसृतावयं स्यात् । ओहट्टी । मम्मकमडप्परौ गर्वे ॥ १०४ ॥ असित्रेतौ स्याताम् । ममक्को । मडप्परो ।

इति वरदचादयः ॥

---

गोणाद्याः ॥ १ । ३ । १०५ ॥

गोणादयः शब्दा अनुक्तप्रकृतिप्रत्ययलोपागमविकारा बहुलं निपात्यन्ते ।

गवि गोणा ॥ १ ॥ गैव्ययं स्यात् । गोणा । तल्लतल्लडतलानि तल्पे ॥ २ ॥ असित्रेते स्युः । तल्लं । तल्लडं । तलं । धिरत्थु धिगस्त्वित्यर्थे ॥ ३ ॥ असित्रयं स्यात् । गोलागोदे गोदावर्याम् ॥ ४ ॥ असामेतौ स्याताम् । गोला । गोदा । गोला संस्कृतेपीति

---

१ राअ° M.  २ My. and P. omit it.  ३ P. and My. omit it.  ४ स्यात् My., P.  ५ Omitted in My., P.; T. has मलाइं.  ६ My. and P omit असित्रयं स्यात्.  ७ भचो भागिनेये T.  ८ M. omits असित्—स्यात्.  ९ My. and P. omit the line.

केचित् । ओसाअण महीशाने ॥ ५ ॥ असिन्नयं स्यात् । आपोशन इति केचित् । वणई वनराजौ ॥ ६ ॥ अस्यामयं स्यात् । वणई । पंगुरणं प्रावरणे ॥ ७ ॥ ओसिरणगोसौ [1]व्युत्सर्जनप्रत्यूपयोः ॥ ८ ॥ अनयोरेतौ क्रमाद् [2]भवतः । थोवथेवथोक्का स्तोके ॥ ९ ॥ आअविरुऔ अब्विरुद्धयोः ॥ १० ॥ पत्थेवाअवेलम्बौ पाथेय-विडम्बनयोः ॥ ११ ॥ अनयोरेतौ क्रमात् स्तः । पत्थेवाओ । वेलम्बो । बालवुद्बुदकरीरेषु बाअबुलुबुलकरिल्लाः ॥ १२ ॥ [3]एष्वेते क्रमात् स्युः । बाओ । बुलबुलो । करिल्लो । ऊआदोग्गधणिआ यूकयुग्मधन्यासु ॥ १३ ॥ एष्वेते क्रमात् स्युः । ऊआ । दोग्गं । धणिआ । उद्वहने णिव्वहणं ॥ १४ ॥ णिव्वहइ । उद्वहतीत्यर्थः । छि छि धिग्धिगित्यर्थे ॥ १५ ॥ धिग्धिगित्यर्थे छिछि इति स्यात् । वृतावडी ॥ १६ ॥ [4]अस्यामयं स्यात् । ग्रहिल्लो ग्रहले ॥ १७ ॥ असिन्नयं स्यात् । गोसमूहे गोणिक्को ॥ १८ ॥ गोसमूहे गोणिक्को इति स्यात् । अयुजरेवई अचिरयुवत्याम् ॥ १९ ॥ [5]अस्यामयं स्यात् अयुजरेवई । [6]आणरहू नववध्वाम् ॥ २१ ॥ [7]अस्यामयं स्यात् । आणरहू । असुरे अमओ ॥ २२ ॥ [8]असुरे अयं स्यात् । अमओ । पण्णवण्णा पञ्चपञ्चाशति ॥ २३ ॥ असिन्नयं स्यात् । पण्णवण्णा । तेवण्णा त्रिपञ्चाशति ॥ २४ ॥ पण्णा पञ्चाशति ॥ २५ ॥ गामहणघुसिमे ग्रामस्थानघसृणयोः ॥ २६ ॥ अनयोरेतौ क्रमात् स्तः । गामहणं । घुसिमं । छटायां छट्टा ॥ २७ ॥ पाउरणवइल्लौ प्रावरणबलीवर्दयोः ॥ २८ ॥ अनयोरेतौ क्रमात् स्तः । पाउरणं । वइल्लो । हिज्जा ह्यस्थाने ॥ २९ ॥ ह्य इत्यर्थे हिज्जेति निपात्यते ।

---

१ प्रत्यूपव्युत्सर्जनयोः T. २ स्तः T. ३ एषु क्रमादेते T. ४ My. and P. omit the line. ५ My. and P. omit the line. ६ Sûtra 20 is not found. It is given in the Appendix to the P. as फुगुळू अभिसारिकायाम् । ७ My. and P. omit the line. ८ P. and My. omit the line.

हिज्जा । त्रिचत्वारिंशति तेआलिसा ॥ ३० ॥ असिन्नयं स्यात् । तेआलिसा । असंघडोसिण्यावास्थाज्योत्स्नयोः ॥ ३१ ॥ अनयोरेतौ क्रमात् स्तः । असंघो । डोसिणी । लकुडो लगुडे ॥ ३२ ॥ छेणो स्तेने ॥ ३३ ॥ कक्खडकक्खलौ कर्कशे ॥ ३४ ॥ अलाबूकलत्रयोः कलबूकत्ते ॥ ३५ ॥ अनयोरेतौ क्रमात् स्तः । कलबू । कत्तं । निलये णलिअणिहेलणे ॥ ३६ ॥ असिन्नेतौ स्याताम् । णलिअं । णिहेलणं । णिकडणिरासौ निश्चयनृशंसयोः ॥ ३७ ॥ अनयोरेतौ क्रमात् स्तः । णिकडो । णिरासो । विहुंडुअणिप्फंसौ विधुन्तुदनिस्त्रिंशयोः ॥ ३८ ॥ अनयोरेतौ क्रमात् स्तः । विहुंडुओ । णिप्फंसो । वहिअकोलीरे मथितकुरुविन्दयोः ॥ ३९ ॥ अनयोरेतौ क्रमात् स्तः । वहिओ । कोलीरं । खेड्डं खेले ॥ ४० ॥ विउसग्गव्वुडौ व्युत्सर्गविटयोः ॥ ४१ ॥ अनयोः क्रमादेतौ स्तः । विउसग्गो । व्वुडो । संघअणघाअणौ संहननगायनयोः ॥ ४२ ॥ अनयोरेतौ क्रमात् स्याताम् । संघअणं । घाअणो । मत्कुणककुदजम्बालेषु ढेंकुणकउडसेवालाः ॥ ४३ ॥ एतेष्वेते क्रमात् स्युः । ढेंकुणो । कउडं । सेवालं । अथफक्खुड्डअवड्डुअरा अकांडक्षुल्लकबृहज्जठरेषु ॥४४॥ एष्वेते क्रमात् स्युः । अथक्कं । खुड्डओ । वड्डुअरो । आनने आणुअं ॥ ४५ ॥ संगोल्लसामरीसिप्पितलाराः संघातशाल्मलीसूचीतलवरेषु ॥४६॥ एषु क्रमादेते स्युः । संगोल्लं । सामरी । सिप्पी । तलारो । अव्वा अम्बायाम् ॥ ४७ ॥ अस्यामयं स्यात् । अव्वा । पम्मिहीमोरजच्छन्दाः पाणिभीमारस्वच्छन्देषु ॥ ४८ ॥ एतेष्वेते क्रमात् स्युः । पम्मी । हीमोरं । जच्छंदो । दिनमुखखङ्गदृक्शीर्षत्रसंस्तरेष्वणुदिवखङ्ग्इसीसक्कमत्थराः ॥ ४९ ॥ एषु चत्वारः

---

१ णिफंसो My. २ णिरंगो My. ३ स्याताम् T. ४ My. and P. drop अनयोः—स्तः. ५ P. and My. omit the line.

क्रमादेते स्युः ॥ अणुदिर्ष । कुड्डं । सीसकं । सत्थरो । विरिथरवीविकडप्पदूसळा विस्तारवीचिकलापदुर्भगेषु ॥ ५० ॥ एष्वेते क्रमात् स्युः । विरिथरं । वीवी । कडप्पो । दूसळो । छिल्लडंभिअडेड्डुराश्छिद्रदाम्भिकदर्दुरेषु ॥ ५१ ॥ एतेष्वेते क्रमात् स्युः । छिल्लं । डंभिओ । डेड्डुरो । गण्डस्थले गल्लो ॥ ५२ ॥ वीली वीथ्याम् ॥ ५३ ॥ पाडिपिद्धिपडिसिद्धी प्रतिस्पर्धायाम् ॥५४॥ एतावस्यां स्याताम् । वंजरमजरौ मार्जारे ॥ ५५ ॥ असिन्नेतौ स्याताम् । वंजरो । मंजरो । गृध्रे गहरो ॥ ५६ ॥ अस्मिन्नयं स्यात् । गहरो । उअअजमावृजौ ॥ ५७ ॥ ऋज्वावेतौ स्याताम् । उओ । अजमो । अरणितणेसिसाळक्किआः सरणितृणराशिशारिकासु ॥ ५८ ॥ एष्वेते क्रमाद् भवन्ति । अरणी । तणेसी । साळक्किआ । दुःखचतुष्पथकराळेषु दुग्गचउक्ककलेराः ॥ ५९ ॥ एषु त्रयः क्रमाद् भवन्ति । दुग्गं । चउक्कं । कलेरं ।

इति गोणाद्याः ।

---

गहिआद्याः ॥ १ । ४ । १२१ ॥

गहिआदयो निर्वचनगोचरा निपात्यन्ते ।

ग्राह्यायां गहिआ ॥ १ ॥ अस्यामयं स्यात् । णन्दिणीवडिणायौ धेनुघर्घरकण्ठयोः ॥ २ ॥ वइरोडाविणअवइच्छिण्णाणडाजडछिच्छअच्छिण्णाळा जारे ॥ ३ ॥ एते सप्त जारे निपात्यन्ते। वइरोडो । अविणअवई । च्छिण्णो । अणडो । अजडो । छिच्छओ । च्छिण्णाळो । दूत्यामत्तिहरीसंचारीमदोळीपेसणआळीमराळीसहउत्थिआः ॥४॥ दूत्यामेते निपात्यन्ते । पडिसोत्तपडिवसरौ प्रतिकूले ॥ ५ ॥ अस्मिन्नेतौ स्याताम् । जोअदोसारअणसमुद्दणवणीअदोसणिजन्ता-

---

१. My. and P. omit the line. २ निपात्याः T.

श्चन्द्रे ॥ ६ ॥ एते चत्वारश्चन्द्रे निपात्यन्ते । जोओ । दोसारअणो । समुद्धणवणीअं । दोसणिजन्तो । किमिघरवसणं कौशेये ॥ ७ ॥ कौशेयेयं निपात्यते । मुहरोमराइविसारौ भ्रूसैन्ययोः ॥ ८ ॥ अनयोरेतौ क्रमात् स्तः । मुहरोमराई । विसारो । चिरिचिरिआचिलिचिलिआ धारायाम् ॥ ९ ॥ समुद्धहरमम्बुगृहे ॥ १० ॥ तंबुकुसुमं कुरबककुरण्टकयोः ॥ ११ ॥ फणिनि पाअपअलाओ ॥ १२ ॥ अस्मिन्नेतौ निपात्यौ । पाओ । पअलाओ । अहिअलो क्रोधे ॥ १३ ॥ अयं निपात्यः । स्तने सिहिंयं ॥ १४ ॥ अस्मिन्नयं स्यात् । अस्थिरे थिरण्णेसो ॥ १५ ॥ अस्थिरे थिरण्णेसो निपात्यः । जोइक्खसूरंगौ दीपे ॥ १६ ॥ दीपे एतौ स्तः । जोइक्खो । सूरंगो । थेवो बिन्दौ ॥ १७ ॥ पासावअकोप्पौ गवाक्षापराधयोः ॥ १८ ॥ अनयोरेतौ क्रमाद् भवतः । उद्धते उम्महउद्धणपहट्ठाः ॥ १९ ॥ जणउत्तजण्णहरौ ग्रामप्रधाननरराक्षसयोः ॥ २० ॥ एतयोरेतौ स्तः । जणउत्तो । जण्णहरो । आरनाळथेरोसणचम्हहरमम्बुजे ॥ २१ ॥ अम्बुजे त्रय एते निपात्यन्ते । आरनाळं । थेरोसणं । चम्हहरं । कंदोट्टं कलिमं चोत्पले ॥ २२ ॥ एतावुत्पले प्रयोज्यौ । रअणिद्धअं चंदोज्जं कुमुदे ॥ २३ ॥ एतौ कुमुदे निपात्यौ । रअणिद्धअं । चंदोज्जं । धूमद्धअमहिसी कृत्तिकासु ॥ २४ ॥ अवहोओ विरहे ॥ २५ ॥ लंबावेल्लीवेल्लरिआ वल्लरीकेशयोः ॥ २६ ॥ अनयोरेते स्युः । घरअंदं मुकुरे ॥ २७ ॥ अस्मिन्नयं स्यात् । आआसतअं हर्म्यपृष्ठे ॥ २८ ॥ अस्मिन्नयम् । गुरुदओ दिवसे ॥ २९ ॥ दिवसेयं स्यात् । गुरुदओ । प्रथमरजस्वलारक्तवस्त्रे आणंदवसो ॥ ३० ॥ अस्मिन्नयं स्यात् । निमीलनलाक्षारक्तपृष्ठेष्वच्छिवटणवल्लवियअणीसंकाः ॥ ३१ ॥ एष्वेते क्रमा-

१ चन्द्रे एते चत्वारः स्युः T. २ निपात्यः T. ३ सिहिंयं स्तने T. ४ स्तने सिहिनमिति स्यात् T. ५ थिरण्णेसो अस्थिरे T. ६ Ms. and P. drop the line. ७ निपात्यौ T. ८ निपात्यौ T. ९ दिवसे गुरुदओ निपात्यः T.

निपात्याः । अच्छिवडणं । वल्लविअं । णीसंको । एलविलो धनिवृ-पयोः ॥ ३२ ॥ अनयोरयं निपात्यते । एलविलो । सुहरओ धारिकागृहचटकयोः ॥ ३३ ॥ अनयोरयं निपात्यते । सुहरओ । णिम्मीसुअहट्टमहट्टौ निश्मश्रुकयुवस्वस्थयोः ॥ ३४ ॥ अनयोरेतौ क्रमात् स्याताम् । णिम्मीसुओ । हट्टमहट्टो । णिहुअजहणरोहौ सुर-तोर्वोः ॥ ३५ ॥ सुरते ऊरौ चैतौ क्रमात् स्याताम् । णिहुअं । जह-णरोहो । अच्छुद्धसिरी मनोरथाधिकफलप्राप्तौ ॥ ३६ ॥ फलप्रा-प्तावयं निपात्यते । अच्छुद्धसिरी । अब्बुद्धसिरीति केचित् । पल्लोट्ट-जीहाउज्झहरौ रहस्यभेदिनि ॥ ३७ ॥ पिशाचे परेओ ॥ ३८ ॥ अस्मिन्नयं प्रयोज्यः । चोरधूर्तयोर्बहुजाणो ॥ ३९ ॥ अयं चोरे धूर्ते च निपात्यते । जारधूर्तयोरिति केचित् । बहुजाणो । जोईउज्झल्लौ विद्युत्प्रबलयोः ॥ ४० ॥ अनयोरेतौ क्रमात् स्तः । जोई । उज्झलो । भिंगं नीलस्रक्कतयोः ॥ ४१ ॥ नीले स्रक्कते चायं स्यात् । परिधाने णिअद्धणं ॥ ४२ ॥ जइणोसुअं चल्लणकं च जघनांशुके ॥ ४३ ॥ अस्मिन्नेतौ स्याताम् । जहणोसुअं । चल्लणकं । पाउरणं कवचे ॥ ४४ ॥ कवचेयं प्रयोज्यः । पाउरणं । कम्पापचारयोरोअल्लो ॥ ४५ ॥ अनयोरयं स्यात् । ओअल्लो । कराघाते चपेटा ॥ ४६ ॥ अस्मिन्नयं स्यात् । रइलक्खगोसण्णौ जघनमूर्खयोः ॥ ४७ ॥ अनयोरेतौ क्रमात् स्याताम् । रइलक्खं । गोसण्णो । वावडपुरिल्लौ कुडुंबिदैत्ययोः ॥ ४८ ॥ अनयोरेतौ क्रमात् स्तः । वावडो । पुरिल्लो । परमचचचिकौ भीरुस्थापकयोः ॥ ४९ ॥ अनयोरेतौ क्रमात् स्तः । परमत्तो । चच्चिको । काळभट्टिअइद्धग्गिधूमास्तमिस्र-विष्णुतुहिनेषु ॥ ५० ॥ एषु क्रमात् त्रयो निपात्याः । काळं । भट्टिओ । इद्धग्गिधूमो । पत्थरओवाअऔ पादताडनापातपयोः

१ बहुजाणो चोरधूर्तयोः T. २ अनयोर्बहुजाणो निपात्यः T. ३ ओअल्लो कम्पापचारयोः T. ४ कम्पे अपचारे च ओअल्लो इति स्यात् । T.

॥ ५१ ॥ अनयोरेतौ क्रमात् स्तः । पत्थरं । ओवाअओ । पिउच्छा माउआ च सख्याम् ॥ ५२ ॥ सख्यामेतौ निपात्येते । पिउच्छा । माउआ । पोरत्थदोसौ मत्सरिकोपयोः ॥ ५३ ॥ अनयोरेतौ क्रमात् स्तः । पोरत्थो । दोसो । चच्चापम्हलौ तलाहतिकेसरयोः ॥ ५४ ॥ एतयोरेतौ निपात्येते । चच्चा । पम्हलो । खंधलट्ठि-खंधमसौ स्कन्धयष्टौ ॥ ५५ ॥ अस्यामेतौ स्याताम् । खंधलट्ठी । खंधमसो । तंबकिमिअग्गिआयाविन्द्रगोपे ॥ ५६ ॥ अस्मिन्नेतौ स्याताम् । तंबकिमी । अग्गिआयो । अनर्थे विहडणो ॥ ५७ ॥ जोअणजोअडौ खद्योते ॥ ५८ ॥ जोइअदरवल्लहौ खद्योत-कातरयोः ॥ ५९ ॥ क्रमादनयोरेतौ स्याताम् । जोइओ । दरवल्लहो । भोइअपंडरंगौ महेशग्रामेशयोः ॥ ६० ॥ अनयोरेतौ क्रमात् स्तः ॥ संकरसग्गहौ रथ्यामुक्तयोः ॥ ६१ ॥ अनयोरेतौ क्रमात् स्याताम् । संकरो । सग्गहो । अर्थदरे पअरो ॥ ६२ ॥ सुरायां मइमोहिणी ॥ ६३ ॥ दुर्दुरे धारावासो ॥ ६४ ॥ आस्यकलहयोः कमलं ॥ ६५ ॥ अनयोरयं स्यात् । वेणुसाअधुअराऔ भ्रमरे ॥ ६६ ॥ अस्मिन्नेतौ स्याताम् । वेणुसाओ । धुअराओ । अस्मिन् प्रकरणे लिङ्ग-व्यत्ययः प्रयोगाधीनः ॥

इति गहिआद्याः ॥

---

वा पुआय्याद्याः ॥ १ । २ । ११० ॥

पुआई इत्यादयः शब्दाः स्वराद्यादेशविशेषिता वा निपात्यन्ते ।

उन्मत्तपिशाचयोः[1] पुआई ॥ १ ॥ अनयोरयं निपात्यते । पुआई । ऊणंदिअमानन्दिते ॥ २ ॥ तुंबुरो दोबुरो ॥ ३ ॥ माहिवाओ माघवाते ॥ ४ ॥ सइकोडी शतकोटौ ॥ ५ ॥ माइंदो माकन्दे ॥ ६ ॥ ओंदुरो उन्दुरौ[2] ॥ ७ ॥ आळिआ

---

१ पिशाचोन्मत्तयोः T. २ स्यात् T.

आल्याम् ॥ ८ ॥ असिन्नयं स्यात् । आळिआ । तणसोल्लि तृण-शून्ये ॥ ९ ॥ असिन्नयं स्यात् । तणसोल्ली । अरिष्टदैत्यकाकेषु रिट्ठो ॥ १० ॥ एष्वयं स्यात् । रिट्ठो । द्रुते दुरिअं ॥ ११ ॥ असिन्नयं स्यात् । दुरिअं । फिरो फिरौ ॥ १२ ॥ वामलूरो वाम-लूरौ ॥ १३ ॥ विसो वृषमूपिकयोः ॥ १४ ॥ अनयोरयं स्यात् । विसो । वंद्रं वृन्दे ॥ १५ ॥ वृन्दे अयं स्यात् । वंद्रं । हेरिंबो हेरम्बे ॥ १६ ॥ हेरम्बे अयं स्यात् । हेरिंबो । चिक्कं स्तोके ॥१७॥ स्तोके अयं स्यात् । चिक्कं । चरणायुधे चलणाओहो ॥ १८ ॥ असिन्नयं स्यात् । चलणाओहो । उन्मत्तादुश्शीलयोर्वअणिआ ॥ १९ ॥ अनयोरयं स्यात् । वअणिआ । उन्मत्ता दुःशीला च । महालयपक्षे महळयपक्खो ॥ २० ॥ असिन्नयं स्यात् । महळय-पक्खो । चंचरीके चचरिओ ॥ २१ ॥ असिन्नयम् । चचरिओ । मुसलं मांसले ॥ २२ ॥ इत्यादि ॥

अपुण्णगाः क्तेन ॥ ३ । १ । १३२ ॥

अपुण्णादयः शब्दाः क्तप्रत्ययेन सह निपात्यन्ते ।

आक्रान्ते अपुण्णं ॥ १ ॥ असिन्नयं स्यात् । अपुण्णं । अम्म-च्छपहट्टावसंबद्धाचिरतरदृष्टयोः ॥ २ ॥ असंबद्धे अचिरतरदृष्टे च एतौ क्रमात् स्याताम् । अम्मच्छं । पहट्टो । उल्लोकमरिअओसण्णा-स्त्रुटिते ॥ ३ ॥ एते त्रयस्त्रुटिते निपात्यन्ते । उल्लोको । मरिओ । ओसण्णो । गुञ्जलिअपेज्जलिऔ संघटिते ॥ ४ ॥ असिन्नेतौ निपात्येते । गुञ्जलिओ । पेज्जलिओ । पसल्लिअगळद्धअऊरुमल्लाः[1] प्रेरिते ॥ ५ ॥ निपात्यन्ते । पसल्लिओ । गळद्धओ । ऊरुमल्लो । अवकीर्णे उक्खणं ॥ ६ ॥ असिन्नयं स्यात् । उक्खणो । ओसट्ट-विहिमिहिऔ विकसिते ॥ ७ ॥ एतौ विकसिते स्तः । ओसट्टो । विहिमिहिओ । अर्दिते उद्दरिअं ॥ ८ ॥ उपसर्पिते उल्लिओ ॥ ९ ॥

१ P. omits it. २ एते चत्वारः प्रेरिते निपात्यन्ते T.

असिन्नयं स्यात् । उछिओ । छिन्नच्छिद्रतयोः कडद्दरिअं ॥ १० ॥ अनयोरयं निपात्यते । कडद्दरिअं । झडिअपरिहाइऔ श्रान्तपरिक्षीणयोः ॥ ११ ॥ अनयोरेतौ क्रमात् स्याताम् । झडिओ । परिहाइओ । उक्कज्जणिक्कज्जतडकडिअउच्चुगा अनवस्थिते ॥ १२ ॥ [1]अस्मिन्नेते निपात्यन्ते । उक्कज्जो । णिक्कज्जो । तडकडिओ । उच्चुगो । उद्धअपुव्वंगउच्चुरणउच्चल्लाः[2] शान्तमुण्डितोच्छिष्टोद्विग्नेषु ॥ १३ ॥ एषु चत्वारः क्रमान्निपात्यन्ते । उद्धओ । पुव्वंगो । उच्चुरणो । उच्चल्लो । चकितक्लान्तयोरुव्विडं ॥ १४ ॥ अनयोरयं निपात्यते । उव्विडं[3] । वहइअमाकासिअं च पर्याप्ते ॥ १५ ॥ पर्याप्ते द्वयं निपात्यते । वहिइअं । आकासिअं । उविद्धणाळीगोरडितहिद्धा-स्रस्ते ॥ १६ ॥ चत्वार एते निपात्याः । उविद्धो । णाळी । गोरडितं । हिद्धो । क्रुद्धे उव्विव्वो ॥ १७ ॥ क्रुद्धे अयं स्यात् । उव्विव्वो । सिट्ठविट्ठौ सुप्तोत्थिते ॥ १८ ॥ सिट्ठो । विट्ठो । ओमंस-उव्विक्कावपसृतप्रलपितयोः ॥ १९ ॥ अनयोरेतौ क्रमात् स्तः । ओमंसो । उव्विक्को । अवरोपितमुक्तयोर्विअंट्टतं ॥ २० ॥ अनयोरयं प्रयोज्यः । विअंट्टतं । ओहरणणिमिअओअग्घिआ आघ्राते ॥२१॥ एते त्रय आघ्राते निपात्यन्ते । ओहरणं । णिमिअं । ओअग्घिअं । ऊसविअमुद्भ्रान्ते ॥ २२ ॥ उद्भ्रान्तेयं स्यात् । ऊसविअं । रुद्धगलितयोराहिद्धो ॥ २३ ॥ अनयोरयं स्यात् । आहिद्धो । वाविते णिमुद्धो ॥ २४ ॥ असितयं स्यात् । णिमुद्धो । उम्मट्ठ-णिशुट्टावुद्वृत्ते ॥ २५ ॥ उद्वृत्ते एतौ स्याताम् । उम्मट्ठो । णिशुट्टो । उट्टिअजूसआवुत्क्षिप्ते ॥ २६ ॥ एतौ उत्क्षिप्ते स्याताम् । उट्टिओ । जूसओ । मुग्धे णिअलधवणिहयल्लुराः ॥ २७ ॥ मुग्धे चत्वारो

[1] अनवस्थिते एते चत्वारः स्युः T. [2] T. drops उच्चुरण. [3] T. drops उव्विड. [4] पर्याप्ते स्युः T. [5] T. has after this उच्छुरणु-व्विडे । उव्विडं उच्चुल्लेसिअं स्यात् । [6] स्युः for एते निपात्याः T. [7] स्युः T.

निपात्यन्ते । णिज्जो । लववो । णिहवो । लुक्को । रिअं लूने ॥२८॥ अस्मिन्नयं स्यात् । रिअं । विक्रीतनिश्रीकृतयोरुज्झणिअं ॥ २९ ॥ त्यक्ते जडं ॥ ३० ॥ अस्मिन्नयं स्यात् । जडं । शुष्कनिश्रीकृतयोरुज्झिअं ॥ ३१ ॥ अनयोरयं स्यात् । उज्झिअं । घडं स्पष्टीकृते ॥ ३२ ॥ अस्मिन्नयं स्यात् । घडं । जलान्तःपतिते डिंडवो ॥ ३३ ॥ जलावगाहिन्ययं प्रयोज्यः । डिंडवो । आकीर्णे ओसडिओ ॥ ३४ ॥ अस्मिन्नयं स्यात् । ओसडिओ । गुलिअं मथिते ॥ ३५ ॥ गुलिअं । उम्मरिअमुन्मूलिते ॥ ३६ ॥ अस्मिन्नयं स्यात् । उम्मरिअं । उत्क्षिप्ते परिच्छिअउगाहिअउडाहिआः ॥ ३७ ॥ उत्क्षिप्ते त्रयो निपात्याः । परिच्छिअं । उगाहिअं । उडाहिअं । उदाहिअं च ॥ ३८ ॥ अयमप्युत्क्षिप्ते निपात्यः । [1]उदाहिअं । रसिते हेसिअदुंदुमिऔ ॥ ३९ ॥ रसिते द्वयं निपात्यम् । हेसिअं । दुंदुमिअं । परितोषिते चित्तवि[2]अओ ॥ ४० ॥ अस्मिन्नयं निपा[3]त्यते । चिर्वि[4]विअओ । परोट्टझपिअपल्लिट्टाः पर्यस्ते ॥ ४१ ॥ पर्यस्ते त्रयो निपात्याः ॥ परोट्टं । झपिअं । पल्लिट्टं । प्रमृष्टे अम्हॅ[5]त्तो ॥ ४२ ॥ अस्मिन्नयं [6]प्रयोज्यः । अम्हॅ[7]त्तो । आघूर्णिते गअं ॥४३॥ अस्मिन्नयं स्यात् । गअं । व्यासक्तप्रवृद्धयोरोवेवओ ॥ ४४ ॥ अनयोरयं निपा[9]त्यः । ओवेवओ । ओअम्मअओहामिआवभिभूते ॥ ४५ ॥ एतावभिभूते निपात्यौ । ओअम्मओ । ओहामिओ । अभिलषितप्रत्युद्गतवृद्धेषु रगिल्लवच्छुद्धलिअअक्कंताः ॥ ४६ ॥ एषु त्रयः क्रमान्निपात्याः । रगिल्लो । वच्छुद्धलिओ । अक्कंतो । जअल्लकरमौ च्छन्नक्षीणयोः ॥४७ ॥ [10]अनयोरेतौ क्रमात् स्तः । जअल्लो । करमो । उपरतक्षीणयोः कथो ॥ ४८ ॥ अनयोः कथो इति

१ P. and My. drop it. २ °विआओ M. ३ निपात्यः M. ४ °विआओ M. ५ अह्मत्तो My. ६ निपात्यः M. ७ अह्मत्तो My. ८ स्यात् M. ९ एतेष्वेते निपात्याः M. १० अनयोः क्रमादेतौ निपात्यौ M.

निपात्यः । कथो । पेक्किअं चूपरटिते ॥ ४९ ॥ [1]अस्मिन्नयं स्यात् । पेक्किअं ॥ अंकिअमालिङ्गिते ॥ ५० ॥ [2]अस्मिन्नयं स्यात् । अंकिअं । [3]उल्लुओसिअचिमिणोसलिआ रोमाञ्चिते ॥ ५१ ॥ अस्मिन् [4]एते त्रयः प्रयोज्याः । उल्लुओसिअं । चिमिणं । उसलिअं । अस्संगिअमासक्ते ॥ ५२ ॥ अयं स्यात् । अस्संगिअं । मुकुलितमुक्तभ्रान्तपुलकितेषु आरोइअं ॥ ५३ ॥ चतुर्षु [5]आरोइअमिति प्रयोज्यम् । आरोइअं । अपहृतशरीरादिव्यथितयोरोच्छंदिअं ॥ ५४ ॥ अनयोरयं स्यात् । ओच्छंदिअं । छंडिअं छन्ने ॥ ५५ ॥ अस्मिन्नयं स्यात् । छंडिअं । ऊसुम्मिअमूसअं चोपधानीकृते ॥ ५६ ॥ [6]एतावुपधानीकृते स्याताम् । ऊसुम्मिअं । ऊसअं । आविअं प्रोते ॥ ५७ ॥ प्रोते अयं स्यात् । आविअं । दर्पिते अवहिट्ठो ॥ ५८ ॥ अस्मिन्नयं स्यात् । अवहिट्ठो । प्रवृद्धगृहागतयोरारोद्धो ॥ ५९ ॥ अनयोरयं स्यात् ॥ आरोद्धो । अन्विष्टे उडिअं घसणिअं च ॥ ६० ॥ [7]अन्विष्टे एतौ स्याताम् । उडिअं । घसणिअं । अशंके फणिते घुग्घुस्सुअं ॥ ६१ ॥ [8]अस्मिन्नयं स्यात् । घुग्घुस्सुअं । आरूढे उल्लूढोच्छूढो ॥ ६२ ॥ एतावारूढे प्रयोज्यौ । उल्लूढो । उच्छूढो । आविलिओ कुपिते ॥ ६३ ॥ कुपिते अयं स्यात् । आविलिओ । कडिअं प्रीणिते ॥ ६४ ॥ [9]अस्मिन्नयं स्यात् । कडिअं । उप्पत्तो गलितविरक्तयोः ॥ ६५ ॥ [10]अनयोरयं स्यात् । उप्पत्तो । सन्नद्धे उओग्गिओ ॥ ६६ ॥ [11]अस्मिन्नयं स्यात् । उओग्गिओ । अपूरितस्खलितामूलोच्चलितमूढविघटितेषु गुम्मइओ ॥ ६७ ॥ [12]एतेष्वयं

---

१ चूपरटिते पेक्किअमिति स्यात् M. २ आलिङ्गिते अयं निपात्यः M. ३ M. adds उके अकिअ । अस्मिन्नयं स्यात् । अकिअ । before this. ४ त्रयो निपात्याः My., P. ५ अयं प्रयोज्य. M. ६ उपधानीकृते एतौ M. ७ एतौ अन्विष्टे M. ८ My. and P. drop the line. ९ P. and My. drop the line. १० P. and My. drop the line. ११ My. and P. drop the line. १२ P. and My. omit it.

स्यात् । गुग्गइओ । भग्ने पडिरिग्गअं ॥ ६८ ॥ असिन्नयं स्यात् । पडिरिग्गअं । प्रकटिते परिअड्डिअं ॥ ६९ ॥ परिच्छन्ने परिअट्टविअं ॥ ७० ॥ परिअट्टविअं । ओप्पं मृष्टे ॥ ७१ ॥ ओप्पं । कोज्जरिअमापूरिते ॥ ७२ ॥ कोज्जरिअ । ओमल्लं घनीभूते ॥ ७३ ॥ ओमल्लं । वेल्लइअं घडइअं च संकुचिते ॥ ७४ ॥ असिन्नयं स्यात् । वेल्लइअं । झंदिअं प्रद्रुते ॥ ७५ ॥ असिन्नयं स्यात् । झदिअं । प्रयतपरिजागरितयोरणुझिअओ ॥ ७६ ॥ अनयोरयं स्यात् । अणुझिअओ । पञ्जतरं दलिते ॥ ७७ ॥ असिन्नयं स्यात् । पञ्जतरं । अवितृप्ते उलुहुलुअं ॥ ७८ ॥ असिन्निदं स्यात् । उलुहिलुअमिति केचित् । वप्पिअमारोग्गरिअमुल्लअं च रक्ते ॥ ७९ ॥ त्रय एते निपात्याः । वप्पिअं । आरोग्गरिअं । उल्लअं । उघणमहिरोइअमहुमाअमप्पुण्णं च पूर्णे ॥ ८० ॥ पूर्णे चत्वारो निपात्याः । उघणं । अहिरोइअं । अहुमाअं । अप्पुण्णं । सन्मुखसमागते पच्छाणिओ ॥ ८१ ॥ असिन्नयं स्यात् । पच्छाणिओ । अग्गुच्छं प्रमिते ॥ ८२ ॥ प्रमिते अयं स्यात् । अंगुच्छं । पड्डाविअं समापिते ॥ ८३ ॥ असिन्नयं स्यात् । पंड्डाविअं । अभिपीडिते वारड्डं ॥ ८४ ॥ असिन्निदं निपात्यम् । वीरड्डं । उद्दारिअं रणद्रुते ॥ ८५ ॥ अत्रैतन्निपात्यम् । उद्दारिअ । उज्झमाणं पलायिते ॥ ८६ ॥ अत्रेदं स्यात् । उज्झमाणं । अर्जिते विढ्ढितं ॥ ८७ ॥ असिन्निदं स्यात् । विढ्ढितं । च्छिकं स्पृष्टे ॥ ८८ ॥ असिन्निद निपात्यम् । च्छिवं । हृते पणिच्छिअं ॥ ८९ ॥ हृते इदं

१ Omitted in P., My  २ Omitted in P., My. ३ Omitted in My , P.  ४ Omitted in P., My  ५ P. and My. omit the lino.  ६ Omitted in My., P.  ७ Omitted in My , P.  ८ अविरुत्तेय निपात्य M.  ९ Omitted in My , P. १० Omitted in P., Mj. ११ P. and My. omit it. १२ Omitted in P., Mj. १३ Omitted in P., My  १४ स्पृष्टे इदं स्यात् P., My. १५ Omitted in My., P. १६ Omitted in P., My.

स्यात् । पैणिल्लिअं । आघ्रिते पिंडओ ॥ ९० ॥ अत्रायं स्यात् । पिंडओ । साणिअणिक्खाविओ शान्ते ॥ ९१ ॥ असिन्नेतौ स्याताम् । साणिओ । णिक्खाविओ । पिष्टे आप्पणसोहिअवक्कसमराइआः ॥ ९२ ॥ पिष्टे चत्वारो निपात्याः । आप्पणं । सोहिअं । वक्कं । समराइअं । वड्डिमवडिसाअअवसण्णाः स्रुते ॥ ९३ ॥ स्रुते त्रयो निपात्याः । वड्डिमं । वडिसाअं । अवसण्णं । स्रुतमित्यर्थः । वं[3]डइअं पीडिते ॥ ९४ ॥ असिन्नयं स्यात् । वंडइअं । विरचितविप्रगृहीतयोरग्गहिओ ॥ ९५ ॥ अनयोरयं स्यात् । अग्गहिओ । अवधूते गॅविअं ॥ ९६ ॥ असिन्निदं निपात्यम् । गॅविअं । निषिद्धे विडुच्छओ ॥ ९७ ॥ असिन्नयं निपात्यः । विडुंच्छओ । निर्गते णग्गठो ॥ ९८ ॥ अत्रायं निपात्यः । णग्गठो । वोट्टिकिपाडावत्यासक्तस्खलितयोः ॥ ९९ ॥ अनयोरेतौ क्रमात् स्तः । वोट्टी । किपाडो । पविरंजवलोट्टौ स्निग्धस्मृतयोः ॥ १०० ॥ अनयोरेतौ क्रमात् [10]स्याताम् । पविरंजवो । लोट्टो । उवडिअमुदूळिअमोणअमवनते ॥ १०१ ॥ अवनते [11]त्रयो निपात्याः । उवडिअं । उदूळिअं । ओणअं । उज्झळिअं प्रक्षिप्तविक्षिप्तयोः ॥ १०२ ॥ अनयोरयं स्यात् । उज्झळिअं । मत्ते अविहिओ ॥ १०३ ॥ मत्ते अयं स्यात् । [12]अविहिओ । परिक्खाइअओ परिक्षीणे ॥ १०४ ॥ परिक्षीणे अयं स्यात् । परिक्खाइअओ । क्षुते चि[13]क्कं पिलुअं च ॥ १०५ ॥ असिन्नेतौ स्याताम् । चिक्कं । पिलुअं । पविग्घं विस्मृते ॥ १०६ ॥ असिन्नयं स्यात् । [15]पैविग्घं । उज्झसिअमवडाहिअमुक्कासमुत्कृष्टे ॥ १०७ ॥ उत्कृष्टे त्रयो निपात्याः । उज्झसिअं । अवडाहिअं ।

---

१ Omitted in P., My. २ Omitted in My., P. ३ पंडइअं M. ४ पंडइअं M. ५ गव्विअं M. ६ गव्विअ M. ७ Omitted in My., P. ८ णग्घठो My. ९ Omitted in P., My. १० भवतः M. ११ त्रय एते स्युः M. १२ Omitted in My., P. १३ छिक्कं M. १४ छिक्कं M. १५ Omitted in P., My.

उक्कासं । हल्लपविअं त्वरिते ॥ १०८ ॥ त्वरिते अयं स्यात् । हॅल्लपविअं । उद्दारिअमुत्खाते ॥ १०९ ॥ उत्खाते अयं स्यात् । उद्दारिअं । याते आरिद्दो ॥ ११० ॥ असिन्नयं स्यात् । आरिद्दो । उल्लिकं दुश्चेष्टिते ॥ १११ ॥ असिन्नेतन्निपात्यम् । उॅल्लिकं । उच्चदिअं मुषिते ॥ ११२ ॥ मुषिते इदं स्यात् । उॅच्चदिअं । ऊगिअपट्ठिअमिआ अलंकृते ॥ ११३ ॥ अलंकृते त्रयो निपात्याः । ऊगिअं । पट्ठिअं । मिअं । उक्कअं प्रसृते ॥ ११४ ॥ प्रसृते अयं स्यात् । उॅक्कअं । उच्छिरणमुच्छिष्टे ॥ ११५ ॥ ओसरिओ आकीर्णे अक्षिसंकोचात् संज्ञिते च ॥ ११६ ॥ गत्तल्हिक्कगावसत्तो गते ॥११७॥एते चत्वारो निपात्याः । गत्तो । ल्हिक्को । गावो । सत्तो । ओसिअविच्छुरिअपडिहत्था अपूर्वे ॥ ११८॥ अपूर्वे त्रयो निपात्याः । ओसिअं । विच्छुरिअं । पडिहत्थो । णिउरं छिन्नजीर्णयोः ॥११९॥ अनयोरयं स्यात् । णिॅउरं । अध्यासिते उच्चल्लोप्पल्लोय्यल्लांजडिओत्तत्ताः ॥ १२० ॥ अध्यासिते पञ्चैते निपात्याः । उच्चल्लो । उप्पल्लो । उय्यल्लो । अंजडिओ । उत्तत्तो । ओअल्लअमुकंदं च विप्रलब्धे ॥ १२१ ॥ अॅसिन्नेतौ निपात्यौ । ओअल्लअं । उकंदं । लिप्ते उडंबो ॥ १२२ ॥ असिन्नयं स्यात् । उॅडंबो । छूहिअं पार्श्वपरावृत्ते ॥ १२३ ॥ असिन्नयं स्यात् । छूॅहिअं । अपिट्ठवल्लट्टं पुनरुक्ते ॥ १२४ ॥ असिन्नेतौ स्याताम् । अपिट्ठं । वलट्टं । आस्तृते अण्णासअं ॥ १२५ ॥ असिन्नयं स्यात् । अण्णासअं । अनष्टे अॅपंडिअं ॥ १२६ ॥ असिन्नयं स्यात् । अॅपंडिअं । अणहवणअं भर्त्सिते ॥ १२७ ॥ अॅसिन्नयं निपात्यः । अॅणहवणअं । उक्करिअमरि-

१ Omitted in My., P. २ Omitted in P., My. ३ Omitted in P., My. ४ Omitted in P., My. ५ Omitted in P., My. ६ Omitted in P., My. ७ विप्रलब्धे इयं स्यात् M. ८ Omitted in P., My. ९ Omitted in P., My. १० उच्चदिअ M. ११ उच्चंडिअ M. १२ भर्त्सिते M. १३ Omitted in My., P.

अओघिअविवअइसआ विस्तीर्णे ॥ १२८ ॥ विस्तीर्णे पञ्चैते निपात्यन्ते । उक्करिओ । मरिओ । ओघिओ । विवओ । इसओ । रुद्धवामावगळवेण्णधुत्ता आक्रान्ते ॥ १२९ ॥ आक्रान्ते पञ्चैते निपात्यन्ते । रुद्धो । वामो । अवगळो । वेण्णो । धुत्तो । आरोपितखण्डितयोरुक्करिअंउरविअंउक्कंडिअंअण्णंकव्वरिअं च ॥ १३० ॥ एतयोः पञ्चैतानि निपात्यन्ते । उक्करिअं इत्यादि । चूर्णिते आडविओ ॥ १३१ ॥ असिन्नयं स्यात् । आडविओ । उल्लुअं धुहअं ओउल्लिअं उक्कोसिअं उच्चरिअं वणनत्तडिअं च पुरस्कृते ॥ १३२ ॥ पुरस्कृते पडेते निपात्याः । वलक्किअं उत्सङ्गिते ॥ १३३ ॥ असिन्नयं स्यात् । वलक्किअं । उय्यकिअं पुञ्जीकृते ॥ १३४ ॥ अत्रैतत् प्रयोज्यम् । उय्यकिअं । पिङ्गइअं प्रशान्ते ॥ १३५ ॥ अत्रैतन्निपात्यम् । पिङ्गइअं । उल्लुहुंडिअं हेपिअं हक्किअं हेसमणं चोन्नते ॥ १३६ ॥ उन्नते चत्वार एते निपात्याः । उल्लुहुंडिअं । हेपिअं । हक्किअं । हेसमणं । निवासिते ज्झहुराविअं णिगमिअं च ॥१३७॥ असिन्नेतौ स्याताम् । ज्झहुराविअं । णिगमिअं । उच्छिल्लो अवजीर्णे ॥ १३८ ॥ असिन्नयं स्यात् । उच्छिल्लो । गुम्मिओ मूलाच्छिन्ने ॥ १३९ ॥ असिन्नयं स्यात् । गुम्मिओ । जलधौते णिप्पणिओ ॥ १४० ॥ असिन्नयं स्यात् । णिप्पणिओ । आच्छादिते वेक्खलं ॥ १४१ ॥ अत्रैतत् स्यात् । वेक्खलं । रञ्जिते तंतुरिअं ॥ १४२ ॥ अत्रैतत् स्यात् । तंतुरिअं । प्रोक्षिते रोकअं ॥ १४३ ॥ असिन्नयं

१ निपात्याः My. २ अनयोरेते पञ्च स्युः T. ३ पञ्चैते प्रयोज्याः My., P. ४ Omitted in My., P. ५ प्रयोज्याः My., P. ६ Omitted in P., My. ७ पुञ्जीकृते इदं स्यात् My. ८ Omitted in P., My. ९ अत्रेदं My., P. १० Omitted in P., My. ११ My. and P. drop एते. १२ Omitted in My., P. १३ Omitted in P., My. १४ Omitted in P., My. १५ Omitted in My., P. १६ पम्रित्तअं M. १७ पम्रियअं M., १८ तुत्तिरिअं M. १९ रञ्जिते एतत् M. २० तुत्तिरिअं M. २१ अयमत्र स्यात् P., My.

**लड्लटोश्च जर्जारौ ॥ २ । ४ । ३८ ॥**

लड्लटोर्वर्तमानभविष्यतोश्चकाराद्विध्यादिषु च सर्वत्र पुरुषेषु वचनेषु च विहितस्य प्रत्ययस्य स्थाने जजाविस्येतौ रितौ वा भवतः । रित्वाद् द्वित्वम् । इति लट्प्रथमपुरुषस्यैकस्थाने एतौ भवतः । होज्ज । होज्जा । पक्षे । होइ । सर्वलकारेषु जर्जाराविति केचित् ॥ 'लड्लटोश्च जर्जारौ' इत्यधिकृत्य

**मध्ये चाजन्तात् ॥ २ । ४ । ३९ ॥**

अजन्ताद्धातोः प्रकृतिप्रत्यययोर्मध्ये चकारात् प्रत्ययानां स्थाने जर्जारौ तु भवतो लड्लटोर्विध्यादिषु च । इति होइकारयोर्मध्ये भवतः । होज्जइ । होज्जाइ । इत्येकवचनम् । तिङन्तेपि द्विवचनस्य बहुवचनमेव ॥

**झिझौ न्तिन्तेइरे ॥ २ । ४ । ४ ॥**

लटः प्रथमपुरुषबहुत्वे वर्तमानयोः झिझयोः न्ति न्ते इरे इति त्रय आदेशा भवन्ति । होन्ति । होन्ते । होइरे । अत्रैव 'होहुवहवा भुवेस्तु' इत्यतः 'भुवेः' इत्यधिकृत्य

**हुरचिति ॥ ३ । १ । ५ ॥**

चिद्वर्जिते प्रत्यये परे भुवेर्हुरित्यादेशो भवति । हुति । हुन्ते । हुइरे । इत्याद्यपि बोद्धव्यम् । बहुलाधिकारात् कचिदेकत्वेपि इरे दृश्यते । सुसइरे ताण तारिसो कण्ठो । शुष्यति तासां तादृशः कण्ठः । 'रुपगेचो दि.' इत्युकारस्य दीर्घः । 'त्वनतः' इत्यगागमः । होअन्ति । होअन्ते । होअइरे । 'मध्ये चाजन्तात्' इति जर्जारौ । होजन्ति । होज्जन्ते । होज्जइरे । अत्र पूर्वोदाहरणद्वये 'संयोगे' इति ह्रस्वे सति जारोपीदमेवोदाहरणम् । होज्जाइरे इत्यत्र निमित्ताभावान्न 'संयोगे' इति ह्रस्वः । होज्ज । होज्जा ॥ मध्यमपुरुषैकवचने

---

१ T. omits वा २ अपि तौ M., T. ३ च स्थाने M. ४ इत्येतौ स्तः T. ५ तौ भवतः M.; अपि स्तः T. ६ आदेशाः स्युः T.

सिप्थासूसेसि ॥ २ । ४ । २ ॥

'लटः' इत्यनुवर्तते । लटः परस्मैपदात्मनेपदमध्यमपुरुषैकत्वे वर्तमानयोः सिप् थास् इत्येतयोः प्रत्येकं से सि इत्येतौ भवतः । होसि । नात्र से । अनदन्तत्वात् । 'त्वनतः' इत्यगागमे कृते अदन्तत्वात् से सि । होअसि । होअसे । 'मध्ये चाजन्तात्' इति जर्जारौ । होज्जसि । होज्जासि । 'लङ्लटोः—' इति जर्जारौ । होज्ज । होज्जा ॥ मध्यमपुरुषबहुवचने

थध्वमित्थाहचौ ॥ २ । ४ । ५ ॥

लटो मध्यमपुरुषबहुवचनयोः थध्वं इत्येतयोः प्रत्येकं इत्थाहच् इत्यादेशौ भवतः । होइत्था । होह । होअइत्था । होअह । होज्जइत्था । होज्जह । होज्जाइत्था । होज्जाह । होज्ज । होज्जा । बहुलाधिकारात् क्वचित् प्रथमपुरुषैकवचनेपि इत्था । जन्ते रोइत्था । यत्ते रोचते ॥ उत्तमपुरुषैकवचने

मिर्मिबिटौ ॥ २ । ४ । ३ ॥

लटः परस्मैपदात्मनेपदोत्तमपुरुषैकवचनयोः मिप् इट् इत्येतयोः प्रत्येकं मि इति भवति । होमि । बहुलाधिकारात् मिबिटोरादेशस्य मेरिकारलोपश्च । बहु वण्णिउ ण सक्कं । बहु वर्णितुं न शक्नोमि । 'त्वनतः' इत्यगागमे 'अदेल्लुक्यात्वोरतः' इत्यतः 'आत्' 'अतः' इति चानुवर्तते ।

तुमौ ॥ २ । ४ । १६ ॥

अदन्ताद्धातोरुत्तमपुरुषैकवचनादेशे मौ परे आत्वं तु भवति । इति धात्ववयवस्यागागमस्य विकल्पेनात्वे होआमि । होअमि । मौपरे इत्वमिति केचित् । होइमि ॥

वा लङ्लोट्छत्तृषु ॥ २ । ४ । २० ॥

---

१ स्तः T. २ उत्तमैकवचने P., My. ३ सात् T. ४ होअमि । होआमि. T.

स्यात् । रोकंअं । पीतपतितपेटितेषु वरत्तो ॥ १४४ ॥ एष्वयं स्यात् । वेरत्तो । वर्धितपरित्रुटयोः सडिअग्गिअं ॥ १४५ ॥ अनयोरयं स्यात् । सैडिअग्गिअं । दारिते उच्चलो ॥ १४६ ॥ अत्रेदं प्रयोज्यम् । उँच्चलो । वञ्चिते अव्वाडिओ ॥ १४७ ॥ अत्रैतत् स्यात् । अँव्वाडिओ । ऊरिसंकिअनङ्गअपंसुला रुद्धे ॥ १४८ ॥ रुद्धे त्रय एते निपात्याः । ऊँरिसंकिओ । नङ्गओ । पंसुलो । अपूर्णगूढस्खलितेषु गँमिदो ॥ १४९ ॥ त्रिष्वयं निपात्यः । गँमिदो । आरूढचूर्णितपीतोद्विग्नेषु संसाओ ॥ १५० ॥ चतुर्ष्वयं निपात्यः । संसाओ । दृष्टे उत्तुर्वो ॥ १५१ ॥ दृष्टे अयं निपात्यः । उत्तुर्वो । इत्यादि । [10]कृष्टानुपसर्ग[11]घृष्ट[12]वाक्येयेविद्वद्वाचस्पतिविष्टरश्रवस्प्रचेतस्प्रोक्तादीनां क्विबादिप्रत्ययान्तानां चाग्निचित्सोमसुदित्यादीनां सुग्लौसुम्लै [13]इत्यादीनां च पूर्वैः कविभिरप्रयुक्तानां प्रतीतिवैषम्यकरः प्रयोगो न कर्तव्यः । शब्दान्तरैरेव [14]तैरर्थोभिधेयः । यथा कृष्टः कृशः वाचस्पतिर्गुरुः विष्टरश्रवाः हरिरित्यादि । घृष्टशब्दस्य सोपसर्गस्य प्रयोग इष्यत एव । मंदरअडपरिघट्टं । मन्दरतटपरिघृष्टम् ॥

इति श्रीमदखिलविद्यापरिवारदक्षिणामूर्तिमहादेवप्रसादलब्धविद्य[15]पूर्वोत्तरमीमांसा[16]शब्दतर्कसाहित्यसार्वभौमच[17]रकूरियज्ञेश्वरभट्टोपाध्याय[18]तनयको[19]ण्डभट्टोपाध्यायशिष्येण सर्वाम्बिकागर्भ[20]शुक्तिमुक्तामणिना दक्षिणामूर्ति[21]महादेवकिङ्करेण सर्वविद्वत्कवि[22]मतेन लक्ष्मीधरेण विरचितायां षड्भाषाचन्द्रिकायां प्राकृतप्रक्रियायां सुबन्तविभागः [23]संपूर्णः[24] ॥

---

१ Omitted in P., My. २ Omitted in P., My. ३ Omitted in My., P. ४ Omitted in P., My. ५ Omitted in P., My. ६ P. and My. omit the instances. ७ गमिलो M. ८ स्यात् M. ९ गमिलो M.; Omitted in My., P. १० घृष्ट °M. ११ मृष्ट M. १२ M. omits वाक्य. १३ M. drops इत्यादीनां च. १४ तथाभिधेयाः M. १५ °विद्येन T. १६ T. has कर्तृ for शब्दतर्क. १७ T. has दव for चर. १८ °तनयेन T. १९ M. drops कोण्डभट्टोपाध्याय. २० M. drops शुक्ति. २१ M. drops महादेव २२ सुतेन T. २३ समाप्तः T. २४ T. adds श्रीमेधादक्षिणामूर्तये नमः ॥

श्रीहयग्रीवाय नमः।

नमो ब्रह्मादिदेवानामज्ञानध्वान्तभानवे ।
सर्वार्थबद्धदीक्षाय दक्षिणामूर्तये नमः ॥ १ ॥

## अथ तिङन्तप्रक्रिया निरूप्यते ।

भू सत्तायाम् । भू इति स्थिते

होहुवहवा भुवेस्तु ॥ ३ । १ । १ ॥

भवतेर्धातोर्हो हुव हव इति त्रय आदेशा भवन्ति । अकार उच्चारणार्थः । हो इति स्थिते । अनुक्तमन्यन्यायेन लटस्तिबादौ सति

लटस्तिप्ताविजेच् ॥ २ । ४ । १ ॥

लटः प्रथमपुरुषैकवचनयोस्तिप्तयोः प्रत्येकं इच् एच् इति भवतः । चकारौ 'हुर्रेचिति' इति विशेषार्थौ । अत्र लड्ग्रहणं लकारमात्रोपलक्षणम् । तेन लटः लस्येत्यर्थः । अनुक्तमन्यन्यायेन शबादिप्राप्तौ

न शपाम् ॥

अत्र शबादीनां प्रयोगो न भवति । इति शबादिप्रतिषेधः । होइ ॥

अत एवैच् से ॥ २ । ४ । ७ ॥

लटः प्रथमपुरुषस्यैकत्वे विहितो य एच् मध्यमपुरुषस्यैकत्वे विहितो यः से तावकारान्तादेव भवतो नान्यस्मात् । इत्यदन्तविषयत्वात् हो इ इत्यत्र तौ न भवतः ॥ 'हलोक्' इत्यतः 'अक्' इत्यनुवर्तमाने

त्वनतः ॥ २ । ४ । ६९ ॥

अकारान्तवर्जितादजन्ताद्धातोरगागमो भवति तु । होअइ । होअए । अत्रागमे कृते अदन्तत्वादेच् भवति ॥

---

१ चन्द्रचाइचराज्ञाय for सर्वार्थबद्धदीक्षाय P., My. २ T. gives this section after the treatment of शौरसेनी and other dialects. ३ आदेशाः स्युः T. ४ हुरचेति M. ५ विशेषणार्थौ T. ६ °मात्रोपलक्षणार्थम् T. ७ नास्ति T. ८ °पुरुषस्यैकत्वे My. ९ M. drops तु.

'अदेल्लुक्कि—' इत्यादेः 'एत्' इत्यनुवर्तते 'अतः' इति च । एषु परेषु अत एत्वं वा स्यात् । इत्यगागमस्यैव धात्ववयवस्य वा एत्वे । होएमि । होअमि । होज्जमि । होज्जामि । इदं सूत्रं लड्लोटोः सर्ववचनेषु अगागमस्य वा एत्वविधायकम् । कचिन्न भवति । . जअइ । क्वचिदात्वमपि । सुणाइ । 'वा लड्लोट्—' इत्यनेनैव एत्वे होज्जेमि । होज्जमि । 'लड्लटोश्च जर्जारौ' इति जर्जारौ भवतः । हुज्ज । हुज्जा ॥

उत्तमपुरुषबहुवचने[1]

**मोमुमुमसहिड्** ॥ २ । ४ । ६ ॥

उत्तमपुरुषस्य बहुत्वे वर्तमानयोः मस् महिङ् एतयोः[2] मो म मु इति त्रय आदेशा भवन्ति । हुमो । हुम । हुमु ॥ 'त्वनतः' इत्यगागमे सति 'अदेलुक्यात्स्वोरतः' इत्यतः 'अतः' इत्यधिकृत्य 'तुमो' इति 'अस्तु' इति च

**मोममुष्विच्च** ॥ २ । ४ । १७ ॥

अकारान्ताद्धातोः मो म मु इत्येतेषु परेषु अत इत्वं चकारादात्वं च वा स्यात् । इत्यगागमस्यैव धात्ववयवस्य इत्वे आत्वे च । हुइमो । हुआमो । पक्षे । हुअमो । 'वा लड्लोट्—'इत्येत्वे । हुएमो । हुइम । हुआम । होअम । हुएम । हुइम । हुइमु । हुआमु । हुअमु । होएमु । 'मध्ये चाजन्तात्' इति जर्जारौ । हुज्जिमो । होज्जमो । होज्जामो । होज्जेमो । एवं मम्वोरप्युदाहार्यम् । 'लड्लटोश्च जर्जारौ' । हुज्ज । हुज्जा । एवमजन्तानां लटि रूपं नेयम् । हवादीनां हलन्तानां तु भेदः । ह व इति स्थिते । अनुक्तमन्यन्यायेन 'उपदेशेजनुनासिक इत्' इत्यकारलोपः । सुखोच्चारणं प्रयोजनम् । 'हलोऽक्' इत्यगागमः । इजादयश्च । हवइ । हवए । 'लड्लटोश्च—' इति जर्जारौ ॥

**ज्ञाज्जे** ॥ २ । ४ । २१ ॥

'अदेल्लुक्यात्स्वोरतः' इत्यतः[3] 'अतः' इति 'एत्' इति चानुवर्तते ।

---

१ उत्तमस्य बहुवचने M. २ इत्येतौ प्रत्येकं मो म मु इत्यादेशानापद्येते.
३ [illegible] M

स्तः

'वा लड्लोट्—' इत्येतो 'वा' इति च। जॉर्जे इत्येतयोः परयोरत एत्वं वा स्यात्। हुवेज्जा। हुवेज्ज। 'अतः' इत्येत्र। हुज्जा। स्वतोनजन्तत्वात् 'मध्ये चाजन्तात्' इत्ययं विधिर्न भवति। 'वा लड्लोट्—' इत्येत्वं वा। हवेइ। हवइ। हवन्ति हवन्ते। हवइरे। एवमेदन्तेपि। मध्यमे। हवसि। 'अत एवैचूसे' इति सें। हवसे। हवेसि। हवेज्जा। हवेज्ज। हवज्जा। हवज्ज। हवइत्था। हवह। हवेइत्था। हवेह। हवज्जा। हवज्ज। हवेज्जा। हवेज्ज। उत्तमे 'तुमौ' इत्यात्वम्। हवामि। हवमि। मावित्वमिति केचित्। हविमि। हवेमि। जर्ज्जारौ च। 'मोमुमुष्विच्च' इति आदितौ वा। 'लड्लोट्—' इत्येत्वं च। हवमो। हवामो। हविमो। हवेमो। हवमु। हवामु। हविमु। हवेमु। हवम। हवाम। हविम। हवेम। हवेज्जा। हवेज्ज। एवमन्येषां हलन्तानां लटि रूपं नेयम्॥ 'हुहुवहवा भुवेस्तु' इत्यतः 'भुवेः' इत्यधिकृत्य

**पृथक्स्पष्टे णिव्वडः॥ ३। १। २॥**

पृथग्भूते स्पष्टे च कर्तरि भुवेः णिव्वड इत्यादेशो भवति। णिव्वडइ। णिव्वडए। पृथग्भवति। स्पष्टो भवति चेत्यर्थः॥

**प्रभौ हुप्पः॥ ३। १। ३॥**

'भुवेः' इत्यनुवर्तते। 'तु' इति च। प्रभुकर्तृकस्य भुवेः हुप्प इत्यादेशो वा भवति[१]। हुप्पइ। हुप्पए। प्रभवतीत्यर्थः। पक्षे पहवइ। बहुलाधिकारादन्यदपि। परिभवति संभवति उद्भवतीत्यर्थेपि। परिभवइ। संभवइ। उब्भवइ॥ लुङ्लङ्लिट्सु

**भूतार्थस्य सिहिअहि॥ २। ४। २२॥**

भूतार्थे विहितो यो लुङादिप्रत्ययः तस्य लुङो लङो लिटश्च स्थाने प्रत्येकं सि हिअ हि इति त्रय आदेशा भवन्ति[२]। उत्तरत्र 'हल ईअ' इति विधानात् स्वरान्तादेवायं विधिः[३]। होसि। होहिअ। होहि।

१ इति च M. २ स्यात् M., ३ आदेशाः स्युः T. ४ स्वरान्तादेशोयं विधिः T.

'त्वनतः' इत्यगागमः । होअसि । होअहिअ । होअहि । सर्वत्र अभूत् अभवत् बभूव वा । स्यादयस्तु तिसयोरेव । अस्मिन् शास्त्रे वर्तमानार्थवाचिनोपि भूतार्थवाचित्वमस्तीति लडादेशा इजादयोपि भवन्ति । तेन 'लड्लृटोश्च जर्जारौ' 'मध्ये चाजन्तात्' इति जर्जारौ सर्वत्र भवतः । तथा च होइ । होन्ति । होमि । इत्यादीनि सर्वाणि लड्रूपाण्युदाहर्तव्यानि । ग्रन्थविस्तारभयान्न लिख्यन्ते । एवमन्येषामजन्तानां भूतलकारेषु रूपनिर्णयः ॥ हलन्तानां तु

हल ईअ ॥ २ । ४ । २३ ॥

'भूतार्थस्य' इत्यनुवर्तते । भूतार्थे वर्तमानयोः हलन्तात् परयोः तिसयोः ईअ इत्यादेशो भवति । हवीअ । हवइ । हवन्ति । इत्यादि हलन्तवद्रूपाणि सर्वाण्युदाहर्तव्यानि । एवमन्येषां हलन्तानां भूतार्थवाचिषु रूपं नेयम् ॥ ललुटोः

**भविष्यति हिरादिः ॥ २ । ४ । २५ ॥**

भविष्यदर्थे विहितप्रत्यये परे तस्यैव हिरित्यादिः प्रयोक्तव्यः । पूर्ववदिजादयः । होहिइ । बहुलाधिकारात् क्वचिदेकपदेपि सन्धिः । होही । भविष्यति । भविता वा । बहुत्वे हिः । होहिन्ति । इत्यादि लड्वत् । लकारात् प्राक् हिकार एवाधिकः । मध्यमे । होहिसि । होज्जहिसि । होज्जाहिसि । होहिज्ज । होहिज्जा । होहिद्धा । होहिह । इत्यादि सर्वं लड्वत् । लकारात् प्राक् हिकार एवाधिकः ॥ उत्तमे

**हास्सा मिमोमुमे वा ॥ २ । ४ । २६ ॥**

'भविष्यति' इत्यनुवर्तते । 'आदिः' इति च । भविष्यदर्थे विहितेषु उत्तमपुरुषादेशेषु मिमोमुम इत्येतेषु परेषु एषामेवादिः हास्सा इत्येतौ वा प्रयोक्तव्यौ । पक्षे हिरपि । होहामि । होस्सामि । अत्र रित्वाद् द्वित्वम् । होहामो । होस्सामो । होहामु । होस्सामु । होहाम । होस्साम ।

---

१ वा स्यात् T. २ M. and T. drop 'आदिः' इति च.

पक्षे । होहिमि । होहिमो । होहिमु । होहिम । क्वचित्तु हा न भवति ॥
'डं मेश्छाचतः' इत्यतः 'मेः इत्यनुवर्तते 'भविष्यति' इति च

**सङ् ॥ २ । ४ । ३३ ॥**

धातोः परतो भविष्यति काले मेः स्थाने सङ् इति वा भवति । रित्वाद् द्वित्वम् । होहिस्सं । पक्षे । होहिमि ॥

**हिस्साहित्था मुमोमस्य ॥ २ । ४ । २७ ॥**

'वा' इत्यनुवर्तते 'भविष्यति' इति च । भविष्यति काले मु मो म इत्येतेषां स्थाने हिस्सा हित्था इत्येतौ धातोः परतो वा प्रयोक्तव्यौ । होहिस्सा । होहित्था । पक्षे । होहिमु । इत्यादि । पूर्ववत् जर्जारौ च[1] । 'त्वनतः' इत्यगागमादिलङ्घत् । एवमन्येषामजन्तानां भविष्यति रूपम् ॥ हलन्तानां तु भविष्यति अगागमे कृते 'अदेल्लुक्यात्त्वोरतः' इत्यतः[2] अतः' इत्यधिकृत्य 'मोमसुष्विच' इत्यतः[3] 'इत्' इति च

**एच्च क्त्वातुंतव्यभविष्यति ॥ २ । ४ । १९ ॥**

क्त्वातुंतव्येषु भविष्यत्कालविहिते च प्रत्यये परतः अत एत्वं चकारादिच्च भवति । हवेहिइ । हविहिइ । हवेहिज्ज । हवेहिज्जा । हविहिज्ज । हविहिज्जा । हवेहिति । हवेहिते । हविहिति । हविहिते । इत्यादि । जर्जारौ च । मध्यमे । हवेहिसि । हविहिसि । हवेहिइत्था । हविहिइत्था । हवेहिह । हविहिह । जर्जारौ च । उत्तमे । हवेहिमि । हविहिमि । हवेहामि । हविहामि । हवेस्सामि । हविस्सामि । हवेहिस्स । हविहिस्स । जर्जारौ च । हवेहिमो । हविहिमो । हवेहामो । हविहामो । हवेस्सामो । हविस्सामो । एवं मन्योऽपि[4] । हवेहिस्सा । हविहिस्सा । हवेहित्था । हविहित्था[5] । जर्जारौ च[6] । एवमन्येषां हलन्तानां भविष्यति रूपम्[7] ॥ लोटि

**एकस्मिन् प्रथमादेर्विध्यादिषु दुसुमु ॥ २ । ४ । ३५ ॥**

---

१ T. drops तु. २ M. omits च. ३ इत्यविट्स M., T. ४ इति च M., T. ५ हविहिस्सा । हवेहिस्सा M. ६ T. drops च. ७ P. and My. add नेयम् after it.

लिड्लोटोः प्रथममध्यमोत्तमपुरुषैकवचनानां स्थाने दु सु मु इति क्रमाद्भवन्ति । होदु । लिड्लोटोराशीरर्थे उकारान्तस्यैव प्रयोग इति केचित् । तदा दलोपः । दकारोच्चारणं भाषान्तरार्थमित्यपरे । प्राकृते विध्यादिषु होउ । अत्र 'प्रायो लुक्—'इति दलोपः । होसु । होमु ॥

**बहौ न्तुहमो ॥ २ । ४ । ३६ ॥**

लिड्लोटोः प्रथममध्यमोत्तमबहुवचनानां स्थाने न्तु ह मो इति क्रमाद् भवन्ति । होन्तु । होह । होमो ॥

**सोस्तु हि ॥ २ । ४ । ३७ ॥**

विध्यादिषु 'एकस्मिन्—'इति सूत्रविहितस्य सोर्मध्यमपुरुषैकवचनस्य स्थाने हि इत्यादेशो वा भवति । होहि । होसु । पूर्ववत् 'मध्ये चाजन्तात्' इति जर्जारौ । तदा । होज्जदु । होज्जादु । होज्ज । होज्जा । एवं वचनान्तरेष्वपि जर्जारावूह्यौ ॥ लिङि

**त्विज्जाल्लिङः ॥ २ । ४ । ३४ ॥**

लिङो जर्जाभ्यां पर इकारो वा प्रयोक्तव्यः । होज्जइ । होज्जाइ । इयान् विशेषः । शेषं पूर्ववत् । एवमन्येषामजन्तानां लिड्लोटो रूपम् । हलन्तानां तु 'वा लड्लोट्छतृषु' इति वा एत्वम् । हवेउ । हवउ । हवेन्तु । हवन्तु । हवेज । हवज्ज । हवेज्जा । हवज्जा ॥ मध्यमे 'सोस्तु हि' इत्यतः 'सोः' इत्यनुवर्तमाने

**लुगिज्जहीज्जसिज्जेतः ॥ २ । ४ । ३८ ॥**

अदन्ताद्धातोः मध्यमैकवचनादेशस्य सोः स्थाने लुक् इज्जहि इज्जसु इज्जे इति चत्वार आदेशा भवन्ति । हव । हविज्जहि । हविज्जसु । हविज्जे । पक्षे । हवसु । हवेसु । हवेज्ज । हवेज्जा । 'त्विज्जाल्लिङः' इति इत्वं च । हवेज्जइ । हवेज्जाइ । शेषं पूर्ववत् । एवमन्येषां हलन्तानां रूपं नेयम् ॥ लङि

---

१ क्रमात् स्युः T. २ °मिति केचित् T. ३ T. has प्रत्ययानां before स्थाने. ४ स्यात् T. ५ स्यात् T.

### माणन्तौलू च लङः ॥ २ । ४ । ४१ ॥

लङो माण न्त इत्यादेशौ सर्वत्र पुरुषेषु वचनेषु [1]भवतः । लित्वान्नित्यम् । चकारात् जर्जारौ च । होमाण । होन्त । होज्जमाण । होज्जन्त । होज्जामाण । होज्ज । होज्जा । हलन्तानां तु । हवमाण । हवन्त । हवेज्ज । हवेज्जा । एवमन्येष्वजन्तेषु हलन्तेषु च धातुष्वनया प्रक्रियया [2]सर्वलकाररूपाणि प्रयोज्यानि ॥

---

## अथ केचिदेधादयो धातवः प्रदर्श्यन्ते ।

एध वृद्धौ । अगागमः । 'खघथधभाम्' इति [3]धस्य हत्वम् । इजादयः । एहइ । [4]एहए । शेषं हववत् । डुपचप् पाके । अनुक्तमन्यन्यायेनानुबन्धलोपः । अक् । 'प्रायो लुक्—'इति चलोपः । पअइ । पअए ॥

### सोल्लपउल्लौ पचेः ॥ ३ । १ । ३८ ॥

पचतेः सोल्ल पउल्ल इत्यादेशौ [5]भवतः । सोल्लइ । पउल्लइ । टुनदि समृद्धौ । अक् । णंदइ । णंदए । ध्वंसु गतौ । अक् । 'त्वथ्वद्वध्वां क्वचित्—' इत्यादिना ध्वस्य झकारः । झंसइ । झंसए । पक्षे । 'लवराम्—' इति [6]वलोपः । धंसइ । धंसए । व्येञ् संवरणे । 'मनयाम्' इति यलोपः । वेइ । 'त्वनतः' इत्यगागमे । वेअइ । वेअए । अद भक्षणे । अक् । प्रायोग्रहणाद् [7]दलोपाभावः । अदइ । अदए ॥ अस्तेर्विशेष उच्यते । अस भुवि । लटि

### त्वस्तेर्म्हर्म्होर्म्हि ममोमिना ॥ २ । ४ । ८ ॥

'मिर्मिविटौ' इति विहितमिना 'मोममु मस्महिङ्' इति विहितममोभ्यां च सह अस्तेः स्थाने यथायोगं म्ह म्हो म्हि इत्यादेशा वा

---

१ च स्तः T. २ सर्वलकाराणां रूपाणि P., My. ३ M. and T. drop धस्य. ४ My. and P. drop it; T. has एहऐ only. ५ स्तः T. ६ यलोपे T. ७ दकारलोपाभावः M.

भवन्ति । गअम्हि । गतोसि । गअम्हो । गंअम्ह । गताः स्मः । मुकारस्याग्रहणादप्रयोग एव तस्येत्यवसीयते । पक्षे । तिङास्थि' इति अत्थिः सामान्यप्राप्तः । अत्थि ॥

सिना त्सि ॥ २ । ४ । ९ ॥

'अस्तेः' इत्यनुवर्तते । अस्तेर्धातोः सिना मध्यमपुरुषैकवचनादेशेन सह सि इत्यादेशो लिद् भवति । लित्वान्नित्यम् । णिट्ठुरो[2] जं सि । निष्ठुरो यदसि ॥

तिङात्थि ॥ २ । ४ । १० ॥

अस्तेस्तिङा सह अत्थि इत्यादेशो भवति । अत्थि सो । अस्ति स इत्यर्थः । अत्थि ते । सन्ति त इत्यर्थः । मध्यमे । अत्थि तुमं । असि त्वमित्यर्थः । अत्थि तुम्हे । स्थ यूयमित्यर्थः । उत्तमे । अत्थि हं । अस्म्यहम् । अत्थि अम्हे । स्मो वयमित्यर्थः ॥ लुङ्लङ्लिट्सु 'भूतार्थस्य सिहिअहि' इत्यतः 'भूतार्थस्य' इत्यधिकृत्य

अहेस्यासी तेनास्तेः ॥ २ । ४ । २४ ॥

अस्तेर्धातोर्भूतार्थप्रत्ययेन सह अहेसि आसि इत्यादेशौ भवतः । अहेसि । आसि । आसीत् । आसन् । आसीः । आस्त । आसम् । आस । इत्यर्थः । लुङ्लिटोः । अस्तेर्भ्वादेशे । अभूत् । बभूव । इत्यादि संचारणीयम् । इदं त्वादेशद्वयं सर्ववचनेषु पुरुषत्रये च साधारणम् । तेन भूतलकारमात्रे अस्तेरिदमेव रूपद्वयम् । लोटि सिद्धावस्थापेक्षया अस्तु इत्यत्र 'स्तः' इति स्तस्य थत्वे । अत्थु । संतु । इति च दृश्यते । लिङि । स्यादित्यत्र 'स्याद्भव्य—'इति सूत्रेण यात् प्रागित्वम् । यलोपः । अन्त्यहलो लोपश्च । सिअ । अन्येषु लकारेषु अनुक्तमन्यन्यायेन 'अस्तेर्भूः' इति भूधातोरेव प्रयोगः ॥ शीङ् स्वप्ने ।

सोरेङ् ॥ २ । ४ । ६५ ॥

---

१ गअम्हा M., T. २ सं My. ३ ट्ठुरो M. ४ अम्हो M. ५ स्तः T.

इश्च उश्च युः तस्य योर्धातोरिवर्णोवर्णयोः एङ् एदोतौ यथासंख्यं भवतः । इवर्णस्य एकारः । उवर्णस्य ओकारः । इत्येत्वे । 'शोस्सल्' । सेइ । 'त्वनतः' इत्यक् । सेअइ । सेअए । इत्यादि । हुवत् ॥ ब्रूञ् व्यक्तायां वाचि ।

**उवर्णस्यावः ॥ २ । ४ । ६४ ॥**

धातोरन्त्यस्य उवर्णस्य अव इत्यादेशो भवति । रेफलोपः । बवइ । बवए । 'योरेङ्' इत्योत्वे । बोइ । एवं ह्नुङ् पूंङ् प्रभृतयः ॥ हु दानादानयोः ।

**णो ह्रश्च चिजिपूश्रुधूस्तुहुलूभ्यः ॥ २ । ४ । ७२ ॥**

एभ्यः परो ण इत्यागमो वा भवति । तत्संनियोगेन दीर्घस्य ह्रस्वश्च[3] । हुणइ । हुणए । पक्षे उवर्णस्य अव इत्यादेशः । हवइ । हवए । नात्र 'योरेङ्' इत्युकारस्यौत्वम् । अनन्तरविषयत्वात् तस्य । परंतूवर्णस्य अव इत्यादेशः । बहुलाधिकाराण्णागमः क्वचिद्विकल्पितः । उच्चेणइ । उच्चेइ । जेणइ । जेइ । ओहाङ् गतौ । अनुक्तमन्यन्यायेनानुबन्धलोपः । 'त्वनतः' इत्यगागमः । हाअइ । हाअए । पक्षे । हाइ । डु धाञ् धारणपोषणयोः । अनुबन्धलोपः । अँट् । धाअइ । धाअए । पक्षे । धाइ ॥

**धो दहश्रदः ॥ २ । ४ । १३१ ॥**

श्रदित्यव्ययात् परस्य दधातेर्दह इत्यादेशो भवति । 'अश्रदः' इति पर्युदासादन्त्यहलो लोपो न भवति । रेफलोपः । सत्वम् । सद्दहइ । सद्दहए । दिवि क्रीडादौ । अक् । दिवइ । दिवए ॥ अथ पुरुपादयोपि प्रदर्श्यन्ते ।

**रुपगेचो दिः ॥ २ । ४ । ६८ ॥**

रुपादिप्वादेरचो दीर्घो भवति । रुप । रूसइ । रूसए । शुप । .

१ धूञ् M. २ भवति वा T. ३ M. drops च. ४ अक् M. ५ इत्यादेशः स्यात् T. ६ अन M.

सूसइ । तुष । तूषइ । पुष । पूसइ । शिष । सीसइ । धूंड् प्राणिप्रसवे । उवर्णस्य अव इत्यादेशः । सवइ । सवए । णह् बन्धने । णहइ । णहए । पुड् अभिषवे । अवादेशः । सवइ । सवए । सोइ । अश् व्याप्तौ । अक् । असइ । असए । चिञ् चयने । 'णो हश्च चिजि—'इत्यादिना णागमः । चिणइ । चिणए । पक्षे । 'योरेङ्' इत्येत्वम् । चेइ । चेए । 'त्वनतः' इत्यक्येत्वे च । चेअइ । चेअए । तुद व्यथने । अक् । तुदइ । तुदए । दलोपोपि । तुअइ । तुअए ॥ दंशतिदहत्योर्विशेषः । 'हलोक्' इत्यगागमे 'चेतस इति तोः' इत्यतः 'तोः' इत्यधिकृत्य 'टो डः' इत्यतः 'डः' इति च ।

**दंशदहोः ॥ १ । ३ । ३४ ॥**

दंशतिदहयोर्धात्वोस्तवर्गस्य डकारो भवति । डंसइ । डंसए । डहइ । डहए ॥ दीप्यतौ

**डो दीपि ॥ १ । ३ । ४६ ॥**

पूर्वसूत्रात् 'तोः' इत्यनुवर्तते । दीप्यतेर्धातोस्तवर्गस्य डत्वम् । डिप्पइ । प्रदीप्यतौ 'दोहदप्रदीप—'इत्यादिना तोर्लत्वम् । पलिप्पइ ॥ मृङ् मैरणे

**आर उः ॥ २ । ४ । ६६ ॥**

धातोर्ऋवर्णस्य अर इत्यादेशो भवति । मरइ । मरए ॥ गम्लृ गतौ

**छर्गमिष्यमासाम् ॥ २ । ४ । ५० ॥**

गम् इष् यम् आस् एषामन्त्यस्य छकारो रित् स्यात् । गच्छइ ॥

**गमिरणुवज्जावज्जसाकुसोक्कुसाइच्छाय्यवहरावसेहवदअपरिअलपरिअट्टचोट्टपरिणिसपच्छड्डणीणणिम्महवच्छद्दणिछुकारंभणीणिवहान् ॥ २ । १ । ९७ ॥**

---

१ पृञ् M. २ My. and P. drop it. ३ My. and P. drop मरणे.

गमिरणुवज्जादीनादेशान् प्राप्नोति । अणुवज्जइ । अवज्जसइ । अक्कुसइ । उक्कुसइ । अइच्छइ । अईइ । अवहरइ । अवसेहइ । वदअइ । परिअल्लइ । परिअलइ । वोलइ । परिणिसइ । पेच्छड्डइ । णीणइ । णिम्महइ । वच्छदइ । णिल्लुक्कइ । रंभइ । णीइ । णिवहइ ॥ दृशिर् प्रेक्षणे[1]

**दृशिरोअक्खणिअच्छावअच्छचज्ञावअज्झपुलअपुलोअदेक्खावअक्खपेच्छावआसपासणिअसच्चवावक्खान् ॥ २ । ४ । १५२ ॥**

दृशिर् प्रेक्षण इत्ययं धातुः ओअक्ख णिअच्छ अवअच्छ चज्ज अवअज्झ पुलअ पुलोअ देक्ख अवअक्ख पेच्छ अवआस पास णिअ सच्चव अवक्ख इति पञ्चदशादेशानापद्यते[1] । ओअक्खइ । णिअच्छइ । अवअच्छइ । चज्जइ । अवअज्झइ । पुलअइ । पुलोअइ । देक्खइ । अवअक्खइ । पेच्छइ । अवआसइ । पासइ । णिअइ । सच्चवइ[2] । अवक्खइ । इति पञ्चदशादेशाः ॥ गम्दृशोर्भविष्यति

**डच्छ दृशिगम इजादौ हिलुक् च वा ॥ २ । ४ । २८ ॥**

'भविष्यति हिरादिः' ईत्यतः[4] 'भविष्यति' इत्यनुवर्तते । दृश्[5] गम् आभ्यां धातुभ्यां भविष्यदादेशेषु इच् इत्यादिषु[6] परेषु डित् अच्छ इत्ययं भवति हेर्वा लुक् च । डित्वादन्त्यस्याजादेर्लुक् । दच्छिइ । दच्छिहिइ । दच्छिति । दच्छिहिंति । दच्छिसि । दच्छिहिसि । दच्छिइत्था । दच्छिहिईत्था । दच्छिह । दच्छिहिह । दच्छिमि । दच्छिहिमि । दच्छिहामि । दच्छिस्सामि । दच्छिस्सं । दच्छिहिस्सं । दच्छिमो । दच्छिहिमो । दच्छिहामो । दच्छिस्सामो । दच्छिहिस्सा । दच्छिहित्था । दच्छिम । दच्छिहिम । इत्यादि । मोवत् मम्वोरप्युदा-

---

१ आपद्यते T. २ पञ्चदइ M. ३ My. and P. drop प्रेक्षणे. ४ इत्यनुवर्तते M., T. ५ दृशिर् M. ६ इत्यादिषु P., My. ७ °इद्दा P°, My. ८ °इद्दा My., P.

हार्यम् । एवं गमेरपि ॥ भिदिर् विदारणे । छिदिर् द्वैधीकरणे । 'अन्त्यस्य वचिमुचि—'इत्यादेः 'अन्त्यस्य' इत्यनुवर्तते ।

**छिदिभिदो न्दः[1] ॥ २ । ४ । ५४ ॥**

अनयोरन्त्यस्य न्दे[2] इत्यादेशो भवति । [3]छिन्दइ । भिं[4]दइ । भविष्यति विशेषः ।

**छिदिभिदिविदो डेच्छ ॥ २ । ४ । २९ ॥**

'भविष्यति हिरादिः' इत्यतः 'भविष्यति' इत्यनुवर्तते। 'हिलुक् च' इति च 'इजादौ' इति च । छिदा[5]दिभ्यो भविष्यति इजादिषु परेषु डित् एच्छ इत्ययं स्यात् हिलुक् च वा । चेच्छि[6]इ । चेच्छिहिइ । चेच्छिति । चेच्छिहिति । चेच्छिसि । चेच्छिहिसि । चेच्छि[7]त्था । चेच्छिहि[8]त्था । चेच्छिह । चेच्छिहिह । चेच्छिमि । चेच्छिहिमि । चेच्छिहामि । चेच्छिस्सामि । एवं हौ । चेच्छिस्सं । चेच्छिहिस्सं । चेच्छिमो । चेच्छिहिमो । चेच्छिहामो । चेच्छिस्सामो । चेच्छिहिस्सा । चेच्छिहित्था । एवं मन्वोरपि। एवं भिदविदोरपि रूपाण्युदाहर्तव्यानि ॥ वच परिभाषणे । मुच्लृ मोक्षणे । रुदिर् अश्रुविमोचने । श्रु श्रवणे । भुज पालनाभ्यवहारयोः । अक् । वअइ । मुअइ । रुअइ । एषु भविष्यति

**डोच्छ वचिमुचिरुदिश्रुभुजः ॥ २ । ४ । ३० ॥**

वच्यादिभ्यो धातुभ्यो भविष्यदर्थे इजादिषु परेषु डित् ओच्छ इति भवति हिलुक् च वा । वचि । वोच्छिइ । वोच्छिहिइ । वोच्छिति । वोच्छिहिति । वोच्छिसि । वोच्छिहिसि । वोच्छिइत्था । वोच्छिहित्था । इत्यादि भिदिवत् । एवं मुचादीनामुदाहार्यम् ।

---

१ न्धः P., My. २ न्द P., My. ३ छिन्धइ My. ४ भिन्धइ My. ५ भिदादिभ्यः M. and P. ६ My. has भेच्छिइ । भेच्छिहि etc.; T. has छेच्छिइ, छेच्छिहि, etc. ७ छेच्छित्था P., My. ८ छेच्छिहित्था P., My.

**डं मेश्छात्ततः ॥ २ । ४ । ३१ ॥**

भविष्यति दृशादिभ्यो धातुभ्यः पूर्वसूत्रैस्त्रिभिरुक्तानां डच्छ डेच्छ डोच्छानां यश्छकारस्ततः परस्य मेरुत्तमपुरुषैकवचनस्य स्थाने डित् अमित्यादेशो भवति[1] । दच्छं । द्रक्ष्यामि । गच्छं । गमिष्यामि । संगच्छं । संगंस्ये । भेच्छं । भेत्स्यामि । वेच्छं । वेत्स्यामि । चेच्छं । छेत्स्यामि । वोच्छं । वक्ष्यामि । मोच्छं । मोक्ष्यामि । इत्यादि । पक्षे । दच्छिमि । दच्छिहिमि । इत्यादि । 'छात्ततः' इति किम् । अन्येभ्यः परो मा भूत् ॥

**णिव्वडो मुचेर्दुःखे ॥ ३ । १ । ४० ॥**

दुःखं[2] मुञ्चत्यर्थमुचेः णिव्वड इत्यादेशो भवति । णिव्वडइ ।

**अवहेडमोल्लणिल्लुंछोसिक्कदिसडरेअवछंडाः ॥ ३ । १ । ४१ ॥**

'मुचेः' इत्यनुवर्तते । मुञ्चतेरवहेड इत्यादि सप्तादेशा[3] भवन्ति स्वरूपार्थे[4] । अवहेडइ । मोल्लइ । णिल्लुंच्छइ । उसिक्कइ । दिसडइ । रेअवइ । छंडइ । सिद्धावस्थापेक्षया । मुंचइ । मुंचए ॥ रुधिर् आवरणे । 'अन्त्यस्य वचिमुंचि—'इत्यादेः[5] 'अन्त्यस्य' इत्यनुवर्तते ।

**रुधो न्धम्भौ ॥ २ । ४ । ५० ॥**

रुधेरन्त्यस्य न्धम्भ इत्यादेशौ भवतः[6] । रुन्धइ । रुम्भइ ।

**ढंसोत्तंघौ विवृतिरुध्योः ॥ ३ । १ । ६४ ॥**

विपूर्वकस्य वर्तते रुधेश्च ढंस उत्तंघ इत्येतौ प्रत्येकं वा भवतः[7] । ढंसइ । उत्तंघइ । इदमेव वर्ततेरपि । पक्षे । रुंधइ । वट्टइ । अत्र 'तैस्राधूर्तादौ टः' इति तैस्य टत्वम् । 'युधबुधगृधक्रुधसिधमुहां च झः' इति चकारानुकृष्टरुधेरन्त्यस्य झः । रुझइ । रुझए । युजिर्योगे

**जुंजजुज्जजुप्पा युजेः ॥ २ । ४ । १३९ ॥**

---

१ स्यात् T. २ दुःखविषयस्य मुचिर् मोक्षणे इत्यस्य धातोः T. ३ इत्यादेशाः स्युः T. ४ °देशाः स्युः T. ५ 'मुचिरुचिरुधिभुजाम्—' इत्यादिना M. ६ स्तः T. ७ स्तः T.

युजेर्धातोः जुंजादय आदेशाः स्युः । जुंजइ । जुज्जइ । जुप्पइ । भुज पालनाभ्यवहारयोः । अक् । भुअइ । भुअए । लृलुटोः । 'डोच्छ वञ्चिमुचि—'इत्यादिना ओच्छादेशो हिलुक् च वा । भोच्छिइ । भोच्छिहिइ । 'डं मेश्छात्ततः' इति मेर्डं । भोच्छं । पक्षे । भोच्छिमि । शेषं हववत् ॥

**णिवरो बुभुक्षाक्षिप्योः ॥ ३ । १ । ७८ ॥**

सन्नन्तस्य भुजेराङ् पूर्वस्य क्षिपेश्च णिवर इत्यादेशो भवति । णिवरइ । बुभुक्षति । आक्षिपति वा ॥

**भुजेरण्णभुञ्जकम्मसमाणचमडचड्डजेमजिमाः ॥ २।४।१३७ ॥**

भुजेर्धातोरण्णादय आदेशा भवन्ति वा । अण्णइ । अण्णए । भुज्जइ । कम्मइ । समाणइ । चमडइ । चड्डइ । जेमइ । जिमइ ॥ तनु विस्तारे । अक् । तणइ । तणए ।

**तड्डवविरल्लतडतड्डास्तनेः ॥ ३ । १ । ७४ ॥**

तनु विस्तार इत्यस्य तड्डव इत्यादयश्चत्वार आदेशाः स्युः । तड्डवइ । विरल्लइ । तडइ । तड्डइ । मनु अवबोधने । अक् । मणइ । मणए । कृञ् । 'अर ऊः' इत्यरः । करइ । कलए ॥ लुङ्लङ्लिट्सु 'अन्त्यस्य वञ्चिमुचि—'इति सूत्रात् 'अन्त्यस्य' इत्यनुवर्तते ।

**आ भूतभविष्यति च कृञः ॥ २ । ४ । ४७ ॥**

भूतार्थे भविष्यदर्थे च प्रत्यये परे कृञोन्त्यस्य आ इत्ययमादेशो भवति । 'भूतार्थस्य सिहिअहि' इति स्यादयः । कासि । काहिअ । काहि । अकार्षीत् । अकरोत् चकार वा । लृलुटोः । काहिइ । काहिंति ॥ 'डं मेश्छात्ततः' इत्यतः 'मेः' इत्यनुवर्तमाने

**कृदो हं ॥ २ । ४ ३२ ॥**

---

१ नयः for जुंजादयः T. २ भुजिधातुः M.; भुजधातुः T. ३ आदेशानापद्यते M.; आदेशानाप्नोति T. ४ °मुचिरधिभुजाम्—' इत्यतः ५ °मादेशः स्यात् T. ६ इत्यनुवर्तते T.

करोतेर्ददातेश्च भविष्यति मेस्थाने हं इति वा स्यात् । 'आ भूत-भविष्यति—'इत्याकारः । काहं । पक्षे । काहिमि । 'सें' इत्यनेन 'सं' च । कस्सं । पक्षे । काहिमि । शेषं हववत् ॥

कृञः कुणः ॥ ३ । १ । २० ॥

कृञः कुण इति वा स्यात् । कुणइ । कुणए ॥

काणेक्षिते णिआरः ॥ ३ । १ । २१ ॥

कृञ इत्यनुवर्तते । कृञः काणेक्षितविषयस्य णिआर इत्यादेशो भवति । णिआरइ । काणेक्षितं करोतीत्यर्थः ॥

निष्टम्भे णिट्ठुहः ॥ ३ । १ । २२ ॥

निष्टम्भविषयस्य कृञो णिट्ठुह इत्यादेशो भवति । णिट्ठुहइ । निष्टम्भं करोतीत्यर्थः ॥

श्रमे वांपंफः ॥ ३ । १ । २३ ॥

श्रमं करोतीत्यर्थे कृञो वांपंफ इत्यादेशो भवति । वांपंफइ ॥

सद्दाणोवष्टम्भे ॥ ३ । १ । २४ ॥

अवष्टम्भं करोतीत्यर्थे कृञः सद्दाणादेशो भवति । सद्दाणइ ॥

णिव्वोलो मन्युनौष्ठमालिन्ये ॥ ३ । १ । २५ ॥

मन्युना ओष्ठमालिन्यं करोतीत्यर्थे कृञः णिव्वोल इत्यादेशो[14] भवति । णिव्वोलइ ॥

गुललश्चाटौ ॥ ३ । १ । २६ ॥

चाटु करोतीत्यर्थे कृञो गुलल इत्यादेशो भवति । गुललइ ॥

पपडो लम्पनशैथिल्ययोः ॥ ३ । १ । २७ ॥

---

1 T. has परतः after it. 2 T. has मिहितस्य after भविष्यति. 3 इत्यादेशः स्यात् T. 4 णिआरः M. 5 णिआर M. 6 इत्यादेशः स्यात् T. 7 णिट्टम्भ° My., P.; णिट्टम्भ° M. 8 इत्यादेशः स्यात् T. 9 णिट्टम्भं° My., P. णिट्टम्भं° M. 10 वांपंफः M. 11 वांपंफ M. 12 वांपंफइ M. 13 अवष्टम्भविषयस्य 14 °देशः स्यात् T. 15 °देशः स्यात् T.

लम्बनं करोति शैथिल्यं करोति इत्यनयोरर्थयोः कृञः पयल्लादेशो भवति । पयल्लइ ॥

क्षुरे कम्मः ॥ ३ । १ । २८ ॥

क्षुरं करोतीत्यर्थे कृञः कम्मादेशो भवति । कम्मइ । कम्मए ॥

णीलुंछो निष्पाताच्छोटे ॥ ३ । १ । २९ ॥

निष्पातं करोतीत्यौच्छोटनं करोतीत्यनयोरर्थयोः कृञः णीलुंछ इत्यादेशो भवति । णीलुंछइ ॥ डुक्रीञ् द्रव्यविनिमये । 'योरेद्' इत्येत्वम् । केइ । 'त्वनतः' इत्यगागमः । केअइ ॥

क्रियः कीणः ॥ २ । ४ । १२२ ॥

क्रीणातेः कीण इत्यादेशो भवति । कीणइ । कीणेए ॥

केर्चे वेः ॥ २ । ४ । १२३ ॥

विपूर्वस्य क्रीणातेः केर् इत्यादेशो भवति । रित्वाद् द्वित्वम् । विक्केइ । 'त्वनतः' इत्यगागमे विक्केअइ । चकारात् कीणश्च । विकीणई । विकीणए ॥ वृञ् । 'अर उः' वरइ ॥

साहट्टसाहरौ संवुः ॥ ३ । १ । ३० ॥

संपूर्वस्य वृणोतेः साहट्ट साहर इत्यादेशौ भवतः । साहट्टइ । साहरइ ॥ दृञ् । दरइ । दरए ॥ ग्रह उपादाने ।

ग्रहेर्णिरुवारगेण्हवलहरपग्गाहिपच्चुआः ॥ २ । ४ । १५७ ॥

ग्रहेर्णिरुवाराद्याः षडादेशा वा स्युः । णिरुवारइ । गेण्हइ । वलइ । हरइ । पग्गइ । अहिपच्चुअइ ॥ 'अन्त्यस्य वचिर्मुचि—'इत्यतः 'अन्त्यस्य' इत्यधिकृत्य

नमोद्विजरुदां वः ॥ २ । ४ । ४८ ॥

---

१ °देशः स्यात् T. २ °ताच्छादनयोः M. ३ °त्साच्छादनं M. ४ °देशः स्यात् T. ५ M. and P. omit it ६ °देशः स्यात् T. ७ स्तः T. ८ °मुचिदिशिभुजाम्—'इत्यधिकृत्य M., T.

नमतेरुद्विजते रोदतेश्चान्त्यस्य वकारो भवति । णम् । णवइ । उद्विज् । अस्क् । उव्विवइ । अत्र दलोपद्वित्वे । रुदिर् । रुवइ । उव्वेवइ । रोवइ । 'अचोचाम्' इत्येत्वमोत्वं च ॥

चनृतिमदिव्रजाम् ॥ २ । ४ । ४९ ॥

'अन्त्यस्य' इत्यनुवर्तते । नृति मद व्रज एषां धातूनामन्त्यस्य चकारो रिद्भवति । रित्वाद् द्वित्वम् । णच्चइ । अत्र 'ऋतोत्' इत्यतः अत्वम् । मच्चइ । वच्चइ । अत्र 'लवराम्—' इति रेफलोपः ॥

छर्गमिष्यमासाम् ॥ २ । ४ । ५० ॥

'अन्त्यस्य' इत्यनुवर्तते । गम् इष् यम् आस् एषामन्त्यस्य छोरित् स्यात् । गच्छइ । इच्छइ । जच्छइ । अत्र जत्वम् । अच्छइ । अत्र 'संयोगे' इति ह्रस्वः ॥

युधबुधगृधक्रुधसिधमुहां च ज्झः ॥ २ । ४ । ५२ ॥

युधादीनां चकाराद्बुधेश्चान्त्यस्य द्विरुक्तो झकारः स्यात् । जुज्झइ । बुज्झइ । गिज्झइ । अत्र कृपादित्वादृत इत्वम् । 'अचोचाम्' इति वा इत्वम् । कुज्झइ । अत्र रेफलोपः । सिध । सिज्झइ । मुह । मुज्झइ ॥

जद् स्विदाम् ॥ २ । ४ । ५३ ॥

स्विदिप्रकाराणां धातूनामन्त्यस्य जकारो रिद् भवति । स्विद् । सिज्झइ । संपद् । संपज्जइ । खिज्जइ । बहुवचनं प्रयोगानुसरणार्थम् ॥

ढः कथिवर्धाम् ॥ २ । ४ । ५५ ॥

कथतेर्वर्धतेश्चान्त्यस्य ढः स्यात् । 'लवराम्—' इति र्धलोपः । कढइ । वेड्डइ । बहुवचनाद्वृधेः कृतगुणस्य वर्धतेश्चाविशेषेण ग्रहणम् ॥

वेष्टेः ॥ २ । ४ । ५६ ॥

---

१ अन्त्यस्य is omitted in My., P. २ M., My., and P. drop च. ३ Omitted in My., M., P.

'ढः' इत्यनुवर्तते । वेष्ट वेष्टन इत्यस्य 'कगटड—' इत्यादिना षलोपेऽन्त्यस्य ढो भवति । वेढइ ॥

**समुदो ल्लः ॥ २ । ४ । ५७ ॥**

'वेष्टेः' इत्यनुवर्तते । सम् उद् इत्युपसर्गाभ्यां परस्य वेष्टतेरन्त्यस्य लकारो रित् स्यात् । संवेल्लइ ।[1] बहुलाधिकारादुतः परस्य वा ल्लः । उव्वेल्लइ । उव्वेढइ ॥

**खादधावि लुक् ॥ २ । ४ । ५८ ॥**

खादतौ धावतौ चान्त्यस्य लुग्भवति । खाइ । 'त्वनतः' इत्यक् । खाअइ । खाहिइ । अत्र 'भविष्यति हिरादिः' इति हिः । खाउ । अत्र 'एकस्मिन् प्रथमादेर्विध्यादिषु—' इत्यादिना दुः दलोपश्च । धाइ । धाहिइ । धाउ । बहुलाधिकाराद् वर्तमानभविष्यद्विध्याद्येकवचन एवान्त्यलोपः । तेनेह न भवति । खादन्ति । धावन्ति । क्वचिद् धावइ पुरओ इति च दृश्यते । धावति पुरतः । ओसैरइ ॥

**रः सृजि ॥ २ । ४ । ५९ ॥**

सृजिधातोरन्त्यस्य रत्वं भवति ।[2] विसरइ ॥

**डः सीदपति ॥ २ । ४ । ६० ॥**

सीदतौ पततौ चान्त्यस्य डत्वं भवति । सडइ । पडइ ॥

**मीलेः प्रादेर्द्वे तु ॥ २ । ४ । ६१ ॥**

प्रादेरुपसर्गात् परस्य मीलेरन्त्यस्य वा द्वित्वं स्यात् । समिल्लइ । अत्र 'संयोगे' इति ह्रस्वः । समीलइ । अत्र समो मांसादित्वाद्विकल्पेन बिन्दुलोपः । संमिल्लइ । संमीलइ ।[5] निमीलइ । निमिल्लइ । 'प्रादेः' इति किम् । मीलइ ॥

**चलस्फुटे ॥ २ । ४ । ६२ ॥**

---

१ M. adds उव्वेल्लइ. २ लुक् स्याद् T. ३ M. drops it. ४ M. drops it. ५ P. and My. omit it. ६ M. drops it. ७ M. inserts उम्मिल्लइ before it.

चलतौ स्फुटितौ चान्त्यस्य द्वे रूपे वा भवतः। चल्लइ चलइ। फुट्टइ। फुडइ। अत्र 'प्पस्पोः फः' इति फत्वम्। 'टो डः' इति डत्वं च॥

शकगे॥ २। ४। ६३॥

'द्वे' इत्यनुवर्तते। शकादिषु धातुष्वन्त्यस्य द्वे रूपे भवतः। योगविभागान्नित्यम्। शक। सक्कइ। मृग। मग्गइ। पिवुं। सिव्वइ। अटि। अट्टइ। लुटि। लुट्टइ। त्रुटि। तुट्टइ। कुपु। कुप्पइ। जभ। जम्भइ। णश। णस्सइ॥ 'अर उः' इत्यतः 'उः' इत्यधिकृत्य

अरि वृपाम्॥ २। ४। ६७॥

वृषमकाराणां धातूनामृवर्णस्य अरि इत्यादेशो भवति। वृष। वरिसइ। मृष। मरिसइ। हृष। हरिसइ। बहुवचनं प्रयोगानुसरणार्थम्॥

निमेर्निम्मवनिम्माणौ॥ २। ४। १२०॥

'अन्त्यस्य' इति निवृत्तम्। निपूर्वस्य मिमीतेः निम्मव निम्माण इत्यादेशौ भवतः। निम्मवइ। निम्माणइ। 'आदेस्तु' इति वा णत्वे। णिम्मवइ। णिमाणइ। पक्षे णिम्मइ॥

आलीङोल्लिः॥ २। ४। १२१॥

आङ् पूर्वस्य लीयतेः अल्लि इति भवति। अल्लिइ॥

स्त्यस्समः खा॥ २। ४। १२४॥

संपूर्वस्य स्त्यै ष्टै शब्दसंघातयोरित्यस्य खा इत्यादेशो भवति। संखाइ। 'त्वनतः' इत्यरु। संखाअइ॥

---

१ My. and P. drop योगविभागान्नित्यम्। २ पिटु M. ३ अट M. ४ लुट M. ५ तुट M. ६ कुप् P., कुप M. ७ मिम। निम्मइ M. ८ दग My., P. ९ इत्यादेशः स्यात् T. १० M. inserts हरइ। हरिसइ before it. ११ इति भवतः M.

**ध्मो धुमोदः ॥ २ । ४ । १२५ ॥**

उत्पूर्वस्य ध्मा शब्दाग्निसंयोगयोरिति धातोर्धुमा इत्यादेशो भवति । उद्धुमाइ । अक् । उद्धुमाअइ ॥

**स्थष्ठकुक्कुरौ ॥ २ । ४ । १२६ ॥**

'उदः' इत्यनुवर्तते । उदः परस्य स्थाधातोः ठ कुक्कुर इत्यादेशौ भवतः । उट्ठइ । उक्कुक्कुरइ ॥

**णिरप्पथक्कठाचिट्ठाः ॥ २ । ४ । १२७ ॥**

'स्थः' इत्यनुवर्तते । तिष्ठतेः णिरप्प थक्क ठा चिट्ठ इति चत्वार आदेशाः स्युः । णिरप्पइ । थक्कइ । ठाइ । चिट्ठइ । 'त्वनतः' इत्यगागमे । ठाअइ ॥

**विस्मरः पैम्हसवीसरौ ॥ २ । ४ । १२८ ॥**

विस्मरतेः पैम्हस वीसर इत्यादेशौ भवतः । पैम्हसइ । वीसरइ । पक्षे । विम्हेरइ । अत्र 'अर उ.' इति ऋतो रादेशः । 'श्मष्म—' इत्यादिना स्मस्य म्हादेशः ॥

**कृपो णिजवहः ॥ २ । ४ । १२९ ॥**

कृप कृपायामित्यस्य धातोरवह इत्यादेशो भवति णिजन्तश्च । इति णिजन्तत्वात् 'णिजदेदावावे' इत्यावे भवति । अवहावेइ । कृपां करोतीत्यर्थः ॥

**जाणमुणौ ज्ञः ॥ २ । ४ । १३० ॥**

ज्ञा अवबोधन इत्यस्य जाण मुण इत्यादेशौ भवतः । जाणइ । मुणइ । मणइ इति तु मन्यतेरेव ॥

**स्पृशिश्छिवालुक्खफरिसफासफंसालिहच्छिहान् ॥२।४।१३२॥**

स्पृश स्पर्शन इत्ययं धातुः छिव आलुक्ख फरिस फास फंस

---

१ °ष्क M. २ पम्हस° My. ३ पम्हस My. ४ पम्हसइ My. ५ विम्हरइ My. ६ म्हादेशः My. ७ My. and P. omit this sentence. ८ स्तः M. ९ स्पर्श My., P.

आलिह छिह इति सप्तादेशानापद्यते । छिवइ । आलुक्खइ । एवमन्येपि ॥

फक्कस्थक्कः ॥ २ । ४ । १३३ ॥

फक्क नीचैर्गतावित्यस्य धातोः थक्क इत्यादेशो भवति । थक्कइ ॥

श्लाघः सळाहः ॥ २ । ४ । १३४ ॥

श्लाघृ कत्थन इत्यस्य धातोः सळाह इत्यादेशो भवति । सळाहइ ॥

दिप्पस्तृपः ॥ २ । ४ । १३५ ॥

तृप प्रीणन इत्यस्य दिप्प इत्यादेशो भवति । दिप्पइ ॥

भियो भाभिहौ ॥ २ । ४ । १३६ ॥

ञिभी भय इत्यस्य भा भिह इत्यादेशौ भवतः । भाइ । अन्[१] । भाअइ । भिहइ ॥

जृम्भेरवेर्जंभा ॥ २ । ४ । १३८ ॥

वीत्युपसर्गरहितस्य जृंभि गात्रविनाम इत्यस्य जंभा इत्यादेशो भवति । जंभाइ । जंभाअइ । 'अवेः' इति किम् । विअंभइ ॥

जनो जाजम्मौ ॥ २ । ४ । १४० ॥

जनी प्रादुर्भाव इत्यस्य जा जम्म इति भवतः । जाइ । जाअइ । जम्मइ ॥

उत्थल्ल उच्छलेः ॥ २ । ४ । १४१ ॥

उत्पूर्वस्य शल गतावित्यस्य उत्थल्ल इत्यादेशो भवति । उत्थल्लइ ॥

घूर्णेर्घुम्मपहल्लघोलघुलाः ॥ २ । ४ । १४२ ॥

घूर्ण भ्रमण इत्यस्य घुम्म पहल्ल घोल घुल इति चत्वार आदेशा भवन्ति । घुम्मइ । पहल्लइ । घोल्लइ । घुलइ ॥

लिपो लिंपः ॥ २ । ४ । १४३ ॥

---

१ स्तः M. २ जुंभि P. ३ T. drops it. ४ वीत्युपसर्गम्य न for 'अवेः' इति किम् T. ५ स्तुः T. ६ त्रिः M.

लिपेर्धातोर्लिंप इत्यादेशो भवति । लिंपइ ॥

शदेर्झडपक्खोडौ ॥ २ । ४ । १४४ ॥

शद्लृ शातन इत्यस्य झड पक्खोड इत्येतावादेशौ भवतः । झडइ । पक्खोडइ ॥

नेः सदेर्मज्जः ॥ २ । ४ । १४५ ॥

निपूर्वस्य सदेर्धातोर्मज्ज इत्यादेशो भवति । णुमज्जइ । निषीदति । अत्र 'ह्रिनीक्षुभवातिषु' इति सूत्रेण नेरिकारस्योत्वम् ॥

पृच्छेः पुच्छः ॥ २ । ४ । १४६ ॥

पृच्छतेः पुच्छादेशः स्यात् । पुच्छइ ॥

गंठो ग्रन्थेः ॥ २ । ४ । १४७ ॥

ग्रन्थ संदर्भे इत्यस्य गंठ इत्यादेशो भवति । गंठइ ॥

तुवरजेअडौ त्वरेः ॥ २ । ४ । १४८ ॥

त्वरतेः तुवर जेअड इत्येतौ भवतः । तुवरइ । जेअडइ ॥

तूरः शतृतिङि ॥ २ । ४ । १५० ॥

त्वरेः इत्यनुवर्तते । शतृप्रत्यये तिङि च त्वरेस्तूर इत्यादेशो भवति । तूरइ ॥

पर्यसेः पल्लट्टपल्लोट्टपल्हत्थाः ॥ २ । ४ । १५१ ॥

परिपूर्वस्यासु क्षेपण इत्यस्य पल्लट्ट पल्लोट्ट पल्हत्थ इति त्रय आदेशा भवन्ति । पल्लट्टइ । पल्लोट्टइ । पल्हत्थइ ।

मृद्नातेर्मलपरिहट्टखुड्डपन्नाडचड्डमड्डमडाः ॥ २ । ४ । १५२ ॥

मृद्नातेर्मल परिहट्ट खुड्ड पन्नाड चड्ड मड्ड मड इति सप्तादेशा भवन्ति । मलइ । परिहट्टइ । खुड्डइ । पन्नाडइ । चड्डइ । मड्डइ । मडइ ॥

---

१ इति स्तः T. २ पुच्छादेशो भवति M.; पुच्छादेशः T. ३ T. *drops* it. ४ °जयडौ M. ५ जयड M. ६ जयडइ M. ७ इत्यादेशः स्यात् T. ८ T. drops it. ९ T. drops it. १० M. has एवमन्येपि in place of the remaining instances.

झरपज्झरपचड्डखरणिड्डुलणिञ्चलाः क्षरेः ॥ २ । ४ । १५४ ॥

क्षरतेः झर पज्झर पचड खर णिड्डुल णिञ्चल इति षडादेशा भवन्ति । झरइ । पज्झरइ । एवमन्येपि ॥

कासेरवाद्वासः ॥ २ । ४ । १५५ ॥

अवात्परस्य कासेर्वास इत्यादेशो भवति । ओवासइ । अत्र 'त्वोदवापोताः' इति सूत्रेण अवेत्युपसर्गस्य ओ ईत्यादेशः ॥

न्यसेर्णिमणुमौ ॥ २ । ४ । १५६ ॥

अस्यतेर्निपूर्वस्य णिम णुम ईत्यादेशौ भवतः । णिमइ । णुमइ ॥

आघ्राक्षिस्नामाइग्घणिज्झराब्हुत्ताः ॥ ३ । १ । ६ ॥

आजिघ्रतिक्षयतिस्नातीनां आइग्घ णिज्झर अब्हुत्त इति यथासंख्यं भवन्ति । आइग्घइ । णिज्झरइ । अब्हुत्तइ । पक्षे । आग्घाइ । खअइ । ण्हाइ । अत्र 'श्नक्ष्ण—' इत्यादिना स्नस्य ण्हादेशः ।

रा वेर्लियः ॥ ३ । १ । ७ ॥

लीङ् श्लेषण इत्यस्य धातोर्विपूर्वस्य रा इत्यादेशो भवति । राइ ॥

निना ल्हिक्कणिलुक्कणिलिअलिक्कलुक्कणिरुग्घाः ॥३। १ । ८ ॥

'लियः' इत्यनुवर्तते । नि इत्युपसर्गेण सह लीयतेः ल्हिक्क णिलुक्क णिलिअ लिक्क लुक्क णिरुग्घ इति षडादेशा भवन्ति । णिक्कइ । एवमन्येपि ॥

सारः प्रहुः ॥ ३ । १ । ९ ॥

प्रहरतेः सार इत्यादेशो भवति वा । साइ । पक्षे । पहरइ ॥

प्रह्लुरुवेल्लवअल्लौ ॥ ३ । १ । १० ॥

---

१ इत्यादेशो भवति M.; इत्यादेशो वा स्यात् T. २ इति गः T. ३ वा स्युः T. ४ षडादेशाः स्युः M; षडादेशा वा स्युः T. ५ इति वा स्यात् T.

प्रसरतेः उवेल्ल पअल्ल इत्यादेशौ भवतः । उवेल्लइ । पअल्लइ । पक्षे । पसरइ ॥

**महमहो गन्धे ॥ ३ । १ । ११ ॥**

गन्धः प्रसरतीत्यर्थे प्रसरतेर्महमह इत्यादेशो भवति । महमहइ माळईगंधो । प्रसरति मालतीगन्धः । 'गन्धे' इति किम् । पसरइ ॥

**झरझारसुमरविम्हरभरभललढपअरपम्हुहाः सरतेः ॥ ३ । १ । १२ ॥**

स्मृ आध्यान इत्यस्य धातोः झर झार सुमर विम्हर भर भल लढ पअर पम्हुह इति नवादेशा भवन्ति । झरइ । झारइ । एवमन्येपि । पक्षे । म्हरइ । सरइ । [2]उभयत्रारः ॥

**[3]व्याप्रेराअड्डः ॥ ३ । १ । १३ ॥**

व्याप्रियतेराअड्डादेशो भवति । आअड्डइ । पक्षे । वाविरइ ॥

**निस्सुर्निहरनिलदाढवरहाढाः ॥ ३ । १ । १४ ॥**

[4]निःसरतेर्निहर निल दाढ वरहाढ इति [5]चत्वार आदेशा वा स्युः । निहरइ । निलइ । इत्यादि । पक्षे । णिसरइ ॥

**जागुर्जग्गः ॥ ३ । १ । १५ ॥**

[6]जागर्तेर्जग्ग इत्यादेशो भवति । जग्गइ । पक्षे । जागरइ ॥

**पट्टघोट्टडल्लपिज्जाः पिबेः ॥ ३ । १ । १६ ॥**

पिबतेर्धातोः पट्ट घोट्ट डल्ल पिज्ज इति चत्वार आदेशा वा स्युः । पट्टइ । एवमन्येपि । पक्षे । पिवइ ॥

**धुवो धूजः ॥ ३ । १ । १७ ॥**

---

१ इति तु स्तः T. २ P. and My. drop उभयत्रारः ३ My. and P. drop Sûtras ३ । १ । १३ and ३ । १ । १४ and their commentaries. ४ निःपूर्वस्य सरतेः T. ५ चत्वारः स्युः T. ६ जागृ निद्राक्षय इत्यस्य T.

घूर्ञ् कम्पन इत्यस्य धुव इत्यादेशो वा स्यात् । धुवइ । पक्षे । धुणइ । अत्र 'णो ह्रस्व चिजिपूश्रुधूस्तुहुलूभ्यः' इत्यनेन णागमह्रस्वौ ॥

भण शृणोतेः ॥ ३ । १ । १८ ॥

श्रु श्रवण इत्यस्य भण इत्यादेशो वा भवति । भणइ । पक्षे । सुणइ । अत्रापि पूर्ववण्णागमः । 'लवराम्—' इति रेफलोपः । 'शोस्सल्' इति सत्वं च ॥

म्लै वापव्वाऔ ॥ ३ । १ । १९ ॥

म्लै गात्रविनाम इत्यस्य वा पव्वाअ इत्यादेशौ वा भवतः । वाइ । वाअइ । पव्वाअइ । पक्षे । मिलाअइ । अत्र 'लादक्लीबेषु' इति लात् प्रागित्वम् ॥

ओहिरोग्घौ निद्रः ॥ ३ । १ । ३१ ॥

निपूर्वस्य द्रै स्वप्न इत्यस्य ओहिर उग्घ इत्यादेशौ वा भवतः । ओहिरइ । उग्घइ । पक्षे । णिद्दाइ ॥

उद्वः ओरुम्मावसुऔ ॥ ३ । १ । ३२ ॥

उत्पूर्वस्य वा गतिगन्धनयोरित्यस्य ओरुम्म अवसुअ इत्यादेशौ वा भवतः । ओरुम्मइ । अवसुअइ । पक्षे । उव्वाइ ॥

रुवो रुंजरुंटौ ॥ ३ । १ । ३३ ॥

रु शब्द इत्यस्य धातोरुंज रुंट इत्यादेशौ वा भवतः । रुंजइ । रुंटइ । पक्षे । रुवइ ॥

फोक्कवोक्कौ व्याहृः ॥ ३ । १ । ३४ ॥

*व्याहरतेः फोक्क वोक्क इति वा भवतः । फोक्कइ । वोक्कइ । पक्षे ।* वाहरइ ।

सग्घाम आदृङः ॥ ३ । १ । ३५ ॥

आद्रियतेः सग्घाम इति वा भवति । सग्घामइ । पक्षे । आअरइ ॥

---

१ °णागमह्रस्वौ T. २ इत्यादेशानापद्येते T. ३ स्तः T. ४ इति for इत्यादेशौ P., My. ५ स्तः T. ६ इति स्तः T. ७ स्यात् for वा भवति T.

**ओहरौसरावववतरेस्तु ॥ ३ । १ । ३६ ॥**

अवपूर्वस्य तॄ प्लवनतरणयोरित्यस्य ओहर ओसर इत्यादेशौ[1] वा भवतः । ओहरइ । ओसरइ । त्वधिकारे पुनस्तुग्रहणमधिकारस्यानुसारणार्थम्[2] ॥

**शकेस्तरतीरपारचआः ॥ ३ । १ । ३७ ॥**

शक्लृ शक्तावित्यस्य तर तीर पार चअ इति चत्वार आदेशा[3] भवन्ति । तरइ । तीरइ । पारइ । चअइ । पक्षे । सक्कइ ॥

तरतेरपि तरइ । पारतीर कर्मसमाप्तावित्यनयोरपि । पारइ । *तीरइ । त्यजेरपि । चअइ । अत्र 'त्योऽचैत्ये' इति त्यस्य चः जलोपश्च*[4] ॥

**वेअडः खचेः ॥ ३ । १ । ३९ ॥**

खचतेर्वेअड इति वा स्यात् । वेअडइ । पक्षे । खअइ ॥

**सिंचसिप्पौ सिचेः ॥ ३ । १ । ४२ ॥**

षिच क्षरणे इत्यस्य सिंच सिप्प इति वा भवतः[5] । सिंचइ । सिप्पइ । पक्षे । सेअइ ॥

**रचेर्विडविड्डावहोग्गहाः ॥ ३ । १ । ४३ ॥**

रच प्रतियत्न इत्यस्य विडविड्ड अवह उग्गह इति त्रय आदेशा भवन्ति[6] । विडविड्डइ । अवहइ । उग्गहइ । पक्षे । रअइ ॥

**केवलाअसारवसमारोवहट्टास्समारभेः ॥ ३ । १ । ४४ ॥**

समाङ्पूर्वस्य रभ रामस्य इत्यस्य केवलाअ सारव समार उवहट्ट इति चत्वार[7] आदेशा भवन्ति । केवलाअइ । सारवइ[8] । समारइ । उवहट्टइ । पक्षे । समारहइ ॥

---

१ इति तु स्तः T. २ °सरणार्थम् M. ३ आदेशाः for आदेशा भवन्ति T. ४ एवमन्येपि for तीरइ—चअइ M.; इत्यादि T. for तीरइ-चअइ. ५ स्तः T. ६ T. drops भवन्ति. ७ चत्वारः स्युः T. ८ T. has इत्यादि in place of this and the remaining instances.

मस्जेराउड्डणिउड्डबुड्डखुप्पाः ॥ ३ । १ । ४५ ॥

टुमस्जौ शुद्धावित्यस्य आउड्ड णिउड्ड बुड्ड खुप्प इति चत्वार आदेशा भवन्ति । आउड्डइ । णिउड्डइ । बुड्डइ । खुप्पइ । पक्षे । मज्जइ ॥

अनुव्रजेः पडिअग्गः ॥ ३ । १ । ४६ ॥

अनुपूर्वस्य व्रज गतावित्यस्य पडिअग्ग इति वा स्यात् । पडिअग्गइ । पक्षे । अणुवज्जइ ॥

वंचेर्वेहववेलवजूरवोम्मच्छाः ॥ ३ । १ । ४७ ॥

वंचु प्रलंभन इत्यस्य वेहव वेलव जूरव उम्मच्छ इति चत्वार आदेशा वा स्युः । वेहवइ । एवमन्येपि । पक्षे । वंचइ ॥

रोसाणोबुसलुहलुच्छपुच्छफुसफुस्सघसहुला मार्जेः ॥३।१।४८॥

मृजू शुद्धावित्यस्य रोसाण उबुस लुह लुच्छ पुच्छ फुस फुस्स घस हुल इति नवादेशा भवन्ति । रोसाणइ । उंबुसइ । एवमन्येपि । पक्षे । मज्जइ ॥

भञ्जेर्वेमअमुसुमूरमूरपविरञ्जसूरसूडकरंजनिरंजविराः ॥ ३ । १ । ४९ ॥

भञ्जो आमर्दन इत्यस्य वेमअ मुसुमूर मूर पविरञ्ज सूर सूड करंज निरंज विर इति नवादेशाः स्युः । वेमअइ । मुसुमूरइ । एवमन्येपि । पक्षे । मंजइ ॥

गर्जेर्बुक्कः ॥ ३ । १ । ५० ॥

गर्जतेर्बुक्कादेशो वा स्यात् । बुक्कइ । पक्षे । गज्जइ ॥

डिक्को वृषे ॥ ३ । १ । ५१ ॥

वृषकर्तृकस्य गर्जतेर्डिक्क इत्यादेशो वा स्यात् । डिक्कइ । वृषो गर्जतीत्यर्थः ॥

---

१ आदेशाः स्युः T २ M. drops वा. ३ नवादेशाः स्युः M ; नवादेशाः T. ४ इत्यादि for उबु……न्येपि T. ५ T. has अत्र संयोग इति ह्रस्वः after it. ६ T. drops it. ७ इत्यादि T. ८ T. drops वा स्यात्. ९ My. and P. drop the sentence.

तिजेरोसुक्कः ॥ ३ । १ । ५२ ॥

तिज निशातन[1] इत्यस्य ओसुक्क इति[2] भवति । ओसुक्कइ । पक्षे । तेअइ । अत्र 'अचोचाम्' इति इकारस्य एकारः ॥

आरोलवमालौ पुञ्जेः ॥ ३ । १ । ५३ ॥

पुञ्जधातोः[3] आरोल वमाल इत्यादेशौ[4] वा स्तः । आरोलइ । वमालइ । पक्षे । पुंजइ ॥

कम्मवमुपभुजिः ॥ ३ । १ । ५४ ॥

उपपूर्वको भुजिः कम्मव इत्यादेशमापद्यते । कम्मवइ । पक्षे । उवभुंजइ ।

पिडवमर्जिः ॥ ३ । १ । ५५ ॥

अर्जिः[6] पिडव इत्यादेशमापद्यते । पिडवइ । पक्षे । अज्जइ ॥

लज्जेर्जीहः[7] ॥ ३ । १ । ५६ ॥

ओलस्जी व्रीडायामित्यस्य जीह[8] इति वा स्यात् । जीहइ[9] । पक्षे । लज्जइ ॥

स्फुटेः सहासे मुरः ॥ ३ । १ । ६० ॥

हाससहितार्थे प्रयुक्तस्य[10] स्फुटि[11]धातोः[12] मुर इत्यादेशो वा[13] भवति[14] । मुरइ । हासेन स्फुटतीत्यर्थः ॥

मण्डेष्टिविडिक्करिडचिंचचिंचिल्लचिंचआः ॥ ३ । १ । ६१ ॥

मडि भूषायामित्यस्य टिविडिक्क रिड चिंच चिंचिल्ल चिंचअ इति पञ्चादेशा वा[15] भवन्ति । टिविडिक्कइ । रिडइ । एवम[16]न्येपि । पक्षे । मंडइ ।

---

१ क्षमानिशातन M. २ इत्यादेशः । T. ३ °धातुः M. ४ इति स्तः T. ५ °देशावापद्यते M. ६ T. has धातुः after it. ७ °जिहः M., T. ८ जिह M., T. ९ जिहइ । M. १० प्रयुज्यमानो T. ११ स्फुटतेः M. १२ °धातुः तस्य T. १३ T. drops it १४ स्यात् M. १५ T. drops वा भवन्ति । १६ इत्यादि T.

तुडिरुल्लुकणिल्लुकोल्लूरोक्खुडलुकतोडखुट्टखुडान्
॥ ३ । १ । ६२ ॥

तुडि तोडन इत्ययं धातुः उल्लुक्क णिल्लुक उल्लूर उक्खुड लुक तोड खुट्ट खुड इत्यष्टादेशानाप्नोति । उल्लुकइ । णिल्लुकइ । एवमन्येपि । पक्षे । तुडइ । त्रुटेः शकादित्वात् 'शकगे' इत्यनेनान्त्यस्य द्वित्वे तुट्टइ ॥

घुसलविरोलौ मथिः ॥ ३ । १ । ६३ ॥

मन्थ विलोडन इत्ययं धातुः घुसल विरोल इत्यादेशावाप्नोति । घुसलइ । विरोलइ । पक्षे । मंथइ ॥

णिहर आक्रन्देः ॥ ३ । १ । ६५ ॥

आङ्पूर्वस्य क्रन्देः णिहर इति वा स्यात् । णिहरइ । पक्षे । अक्कंदइ ॥

ओअंदोद्दालौ च्छिदेराङा ॥ ३ । १ । ६६ ॥

छिदिर् द्वैधीकरण इत्यस्य आङ्सहितस्य ओअंद उद्दाल इत्येतौ वा भवतः । ओअंदइ । उद्दालइ । पक्षे । छिंदइ ॥

अट्टः क्वथेः ॥ ३ । १ । ६८ ॥

क्वथे निष्पाक इत्यस्य अट्ट इति वा स्यात् । अट्टइ । पक्षे । कढइ ॥

कथेर्वज्जरपज्जरसग्घसाससाहचवजप्पपिसुणबोल्लोव्वालाः
॥ ३ । १ । ६९ ॥

कथयतेः वज्जर पज्जर सग्घ सास साह चव जप्प पिसुण बोल्ल उव्वाल इति दशादेशा भवन्ति । वज्जरइ । पज्जरइ । एवमन्येपि । पक्षे । कहइ ॥

दुःखे णिव्वरः ॥ ३ । १ । ७० ॥

---

१ नापयते T. २ इत्यादि T. ३ इत्यस्य for इत्ययं धातुः T. ४ इत्यादेशौ । T. ५ इत्यादेशो वा T. ६ इत्यादेशौ तु स्तः T. ७ क्रथ M. ८ एते M. ९ T. has तु after it. १० M has पजरइ । वजरइ । ११ My. and P. drop Sutras ३ । १ । ७० and ३ । १ । ७१ and the commentary thereon.

दुःखविषयस्य कथेः णिव्वर इति वा स्यात् । णिव्वरइ । दुःखं कथयतीत्यर्थः ॥

**निषेधेर्हक्कः ॥ ३ । १ । ७१ ॥**

निपूर्वस्य षिधू शास्त्रे माङ्गल्ये चेत्यस्य हक्क इति वा स्यात् । हक्कइ । पक्षे । सिहइ ॥

**जूरः क्रुधेः ॥ ३ । १ । ७२ ॥**

क्रुधेर्जूर इत्यादेशो वा स्यात् । जूरइ । पक्षे । कुज्झइ । 'ध्यह्यो-र्झल्' इति झल् ॥

**विसूरश्च खिदेः ॥ ३ । १ । ७३ ॥**

खिद दैन्य इत्यस्य विसूर इति वा स्यात् चकारात् जूर इति च । विसूरइ । जूरइ । पक्षे खिज्जइ । अत्र 'घय्यर्योजः' इति घस्य जः ॥

**निरः पद्यतेर्वलः ॥ ३ । १ । ७५ ॥**

निपूर्वस्य पद्यतेर्वल इति वा स्यात् । णिव्वलइ । पक्षे । णिवज्जइ ॥

**संतपां झंखः ॥ ३ । १ । ७६ ॥**

संपूर्वस्य तप्यतेः बहुवचनान्निश्वसिति विलपत्युपालभतीनां च झंख इत्यादेशो वा स्यात् । झंखइ । संतप्यते निश्वसिति विलपति उपालभते वा । पक्षे । णीससिइ । 'शोर्लुप्त—'इति दीर्घः । विल-वइ । उपालहइ ।

**णिरवो बुभुक्षाक्षिप्योः ॥ ३ । १ । ७८ ॥**

बुभुक्षतेराङ्पूर्वस्य क्षिपतेश्च णिरव इत्यादेशो वा स्यात् । णिरवइ । बुभुक्षते । आक्षिपति वा । पक्षे । बुंहुक्खइ ।

**क्षिपेरड्डक्खपरिहुलघत्तचूहपेल्लणोल्लसोल्लगल्लत्थाः ॥ ३ । १ । ७९ ॥**

---

१ जल्पम् T. २ इत्यादेशो M. ३ इति for इत्यादेशो My., P. ४ णीसा-झंस M. ५ इत्यादेशः । T. ६ बुभुक्खइ M.

क्षिप प्रेरणे इत्यस्य अड्डक्ख परि हुल घत्त चूह पेल्ल णोल्ल सोल्ल गल्लत्थ इति नवादेशा वा स्युः । अड्डक्खइ । परिइ । एवमन्येपि । पक्षे । खिपइ ॥

उत्क्षिपेरुत्थंघोसिक्कहक्खुवाल्लत्थगुलुगुंछाञ्हुत्ताः ॥ ३।१।८०॥

उत्पूर्वस्य क्षिपतेः उत्थंघ उसिक्क हक्खुव अल्लत्थ गुलुगुंछ अञ्हुत्त इत्यादेशौ वा भवन्ति । उत्थंघइ । उसिक्कइ । एवमन्येपि । पक्षे । उक्खिवइ ॥

वेपेराअञ्झाअज्झौ ॥ ३ । १ । ८१ ॥

टुवेपृ कम्पन इत्यस्य आअञ्झ आअज्झ इत्यादेशौ वा भवतः । आअञ्झइ । आअज्झइ । पक्षे । वेवइ ॥

विरणडौ गुंपेः ॥ ३ । १ । ८२ ॥

गुंप व्याकुलत्व इत्यस्य विर णड इति वा भवतः । विरइ । णडइ । पक्षे । गुंप्पइ ॥

चचारवेलवमुपालभेः ॥ ३ । १ । ८३ ॥

उपाङ्पूर्वस्य डुलभष् प्राप्तावित्यस्य चचार वेलव इति वा भवतः । चचारइ । वेलवइ । पक्षे । उवालहइ ॥

खउरपड्डुहौ क्षुभेः ॥ ३ । १ । ८४ ॥

क्षुभ्यतेः खउर पड्डुह इति वा भवतः । खउरइ । पड्डुहइ । पक्षे । खुब्भइ ॥

प्रदीपेः संदुक्खाञ्हुत्ततेअवसंधुमाः ॥ ३ । १ । ८५ ॥

प्रपूर्वस्य दीप्यतेः सदुक्ख अञ्हुत्त तेअव सधुम इति चत्वार

१ इत्यस्य धातु T. २ नवादेशानामयवें वा T. ३ M. drops it. ४ खिपति M., T. ५ °देशानाप्नोति M, इति षडादेशानामयवे T. ६ इति वा भवत My., P. ७ गुम्फे M. ८ गुम्प M. ९ इत्येतौ M. १० गुम्पइ M. ११ स्त for वा भवतः T. १२ उम्पल्हइ My. १३ तु स्त. T. १४ भवतस्तु स्तुः । T.

आदेशा भवन्ति । संदुक्खइ । अब्हुत्तइ । तेअवइ । संधुमइ । पक्षे । पलीवइ । अत्र 'दोहदप्रदीप—' इत्यादिना दस्य लः ॥

अल्लिअ उपसर्पेः ॥ ३ । १ । ८६ ॥

उपपूर्वस्य सृप गतावित्यस्य अल्लिअ इति वा स्यात् । अल्लिअइ । पक्षे । उपसप्पइ ॥

कमवसलिसलोट्टाः स्वपेः ॥ ३ । १ । ८७ ॥

ञिष्वप् शय इत्यस्य कमव सलिस लोट्ट इति त्रय आदेशा वा स्युः । कमवइ । सलिसइ । लोट्टइ । पक्षे 'स्वाप्ने उदोत्' इत्यतः 'उदोत्' इत्यनुवर्तमाने

स्वपि ॥ १ । २ । २८ ॥

स्वपि धातौ आदेरत उदोतौ वा भवतः । सुवइ । सोवइ ॥

वेडवडो[1] विलपेः ॥ ३ । १ । ८८ ॥

विपूर्वस्य लपव्यक्तायां वाचीत्यस्य[2] वडवड[3] इत्यादेशो वा स्यात् । वेडवडइ[4] । पक्षे । विलवइ ॥

रम्भिराङोरम्भडवौ ॥ ३ । १ । ८९ ॥

आङ्पूर्वः रभ रामस्य इत्ययं धातुः रम्भ डव इत्येतावादेशावाप्नोति[5] । रम्भइ । डवइ । पक्षे । आरहइ ।

भाराक्रान्ते नमेर्निसुडः ॥ ३ । १ । ९० ॥

भाराक्रान्तो[6] नमतीत्यर्थे नमतेर्निसुड[7] इत्यादिशो[8] भवति । निसुडइ[9] ॥

उब्भाववेल्लणिसरकोड्डुमसंखुड्डखेड्डमोट्टाअकिलिकिंचा रमेः ॥ ३ । १ । ९१ ॥

---

१ विडविडो P., My. २ °त्यस्यायमादेशः । M. ३ विडबिड P., My. ४ विडविडइ My., P. ५ इत्येतावापद्यते M. ६ भाराक्रान्ते कर्तरि M.; ननु प्रह्वत्वे शब्दे इत्यस्य भाराक्रान्ते T. ७ M. drops नमतेः. ८ इत्यादेशः T. ९ M. *adds* नमतीत्यर्थः । T. *has* भाराक्रान्तो नमतीत्यर्थः ।

रमु क्रीडायामित्यस्य धातोः उम्माव वेल्ल णिसर कोड्डुम संखुड्ड खेड्ड मोट्टाअ किलिकिंच इत्यष्टादेशा वा स्युः । उम्मावइ । वेल्लइ । एवमन्येपि । पक्षे । रमइ ॥

पडिसापडिसामौ शमेः ॥ ३ । १ । ९२ ॥

शम उपशम इत्यस्य पडिसा पडिसाम इत्यादेशौ वा भवतः । पडिसाइ । पडिसामइ ॥

लुभेः संभावः ॥ ३ । १ । ९३ ॥

लुभ गार्ध्ये इत्यस्य धातोः संभाव इति वा स्यात् । संभावइ । पक्षे । लुभइ ॥

आक्रमिरोहावोत्थारच्छुंदान् ॥ ३ । १ । ९४ ॥

आङ्पूर्वः क्रमु पादविक्षेप इत्ययं धातुः ओहाव उत्थार छुंद इति त्रीनादेशानाप्नोति । ओहावइ । उत्थारइ । छुंदइ । पक्षे । अक्कमइ ॥

विश्रमतेर्णिव्वा ॥ ३ । १ । ९५ ॥

विपूर्वस्य श्रमु तपसि खेदे चेत्यस्य णिव्वा इत्यादेशो वा स्यात् । णिव्वाइ । पक्षे । वीसमइ । अत्र 'शोल्लुप्त—' इत्यादिना दीर्घः ॥

झंझल्लडुमडंडल्लममाडझुमभंमडतलअंटझंटगुमटिरिटिल्लपरिपरघमचकमुममडघसझंपझुसा भ्रमेः ॥ ३ । १ । ९६ ॥

भ्रमु अनवस्थाने इत्यस्य ढुंढुल्ल ढुम डंडल्ल ममाड झुम भंमड तलअंट झंट गुम टिरिटिल्ल परि पर घम चकमु भमड घस झंप ढुस इत्यष्टादशादेशा वा भवन्ति । ढुंढुल्लइ । ढुमइ । एवमन्येपि । पक्षे । भमइ ॥

१ M. drops it. २ मवन्ति । M., T. ३ M. drops it. ४ स्युः M., T. ५ इत्यादेशः । T. ६ चात्स्यात् M. ७ भवतः M. ८ भ-स्यात् M. ९ श्रमु परिश्रम इत्यस्य M. १० T. drops it. ११ स्युः M., T.

प्रत्यागमागमाभ्यागमां पल्लोट्टाहिपच्चुओम्मच्छाः ॥ ३ । १ । ९८ ॥

प्रत्यागमेरागमेरभ्यागमेश्च यथाक्रममेते त्रय आदेशा वा भवन्ति । पल्लोट्टइ । अहिपच्चुअइ । उम्मच्छइ । पक्षे । पच्चाअच्छइ । अत्र 'त्योचैत्ये' इति त्यस्य चः । आअच्छइ । अब्भाअच्छइ ॥

रिहरिंगौ प्रविशेः ॥ ३ । १ । ९९ ॥

प्रविशतेः रिह रिंग इति वा भवतः । रिहइ । रिंगइ । पक्षे । पविसइ ॥

संगमो[3]ब्हिडः ॥ ३ । १ । १०० ॥

संगच्छतेरब्भिंड इति भवति । अब्भिंडइ । पक्षे । संगच्छइ ॥

डिप्पणिड्डुहौ विगलेः ॥ ३ । १ । १०१ ॥

विपूर्वस्य गलतेः डिंप्प णिड्डुह इति वा भवतः । डिप्पइ । णिड्डुहइ । पक्षे । विगळइ ॥

णिवहणिरिणासणिरिणिज्जरोच्चचंडाः पिष्टेः ॥ ३ । १ । १०२ ॥

पिष्ऌ संचूर्णने इत्यस्य णिवह णिरिणास णिरिणिज्ज रोच्च चंड इति पञ्चादेशा वा स्युः । णिवहइ । एवमन्येऽपि । पक्षे । पिसइ ॥

वलेर्वफः ॥ ३ । १ । १०३ ॥

वलेर्वंफ इति वा स्यात् । वंफइ । पक्षे । वलइ ॥

भ्रंशेः पिड्डपिट्टचुंकचुल्लघट्टघाडाः ॥ ३ । १ । १०४ ॥

भ्रंशु अधःपतन इत्यस्य पिड्ड पिट्ट चुंकं चुल्ल घट्ट घाड इति षडादेशा वा स्युः । पिड्डइ । एवमन्येपि । पक्षे । भंसइ ॥

भपेर्बुक्कः ॥ ३ । १ । १०५ ॥

भप ध्वनिराव इत्यस्य बुक्क इति वा स्यात् । बुक्कइ । पक्षे । भसइ ॥

---

१ स्युः M., T. २ तु स्तः T. ३ संगमोच्छिडः P. ४ °रच्छिड P. ५ तु स्तः T. ६ अच्छिडइ P. ७ द्वौ आदेशौ तु । T. ८ इत्यादेशास्तु T. ९ बुक्कबुल्लबुट्टबुटाः P. १० बुक्क बुल्ल बुट्ट बुट P.

पुरग्घवाग्घोडाहिरेमांगुमाद्धुमाः ॥ ३ । १ । १०६ ॥

पृ पालनपूरणयोरित्यस्य अग्घव अग्घोड अहिरेम अंगुम अद्धुम इति पञ्चादेशा वा स्युः । अग्घवइ । एवमन्येपि पक्षे । पूरइ ॥

आहाहिलंघवच्चाहिअक्खमहसिहचिलुंपचंपाः काङ्क्षेः ॥ ३ । १ । १०७ ॥

काङ्क्षतेः आह अहिलंघ वच्च अहिअक्ख मह सिह चिलुंप चंप इत्यष्टादेशा वा स्युः । आहइ । एवमन्येपि । पक्षे । कंखइ ॥

नशिरवहरावसेहणिवहपडिसासेहणिरणासान् ॥ ३ । १।१०८॥

नश्यतीत्ययं धातुः अवहर अवसेह णिवह पडिसा सेह णिरणास इति षडादेशानापद्यते वा । अवहरइ । एवमन्येपि । पक्षे । णासइ । अत्र 'शोल्लेस—' इति दीर्घः ॥

साअड्डाणच्छकड्ढाच्छाअंछाणंछाः कृपेः ॥ ३ । १ । १०९ ॥

कृप विलेखन इत्यस्य साअड्ड आणच्छ कड्ढ अच्छ आअंछ आणंछ इति षडादेशा वा स्युः । साअड्डइ । एवमन्येपि । पक्षे । कासइ ॥

असावक्खोडः ॥ ३ । १ । ११० ॥

कृपेरित्यनुवर्तते । असिं कोशात् कर्षतीत्यर्थे कर्षतेः अक्खोड इति भवति । अक्खोडइ । असिं कोशादाकर्षतीत्यर्थः ॥

उल्लपेरूसलोसुंभारोअणिल्लसगुंजोल्लपुलआआः ॥ ३ । १ । १११ ॥

उत्पूर्वस्य लप कान्तावित्यस्य ऊसल ऊसुंभ आरोअ णिल्लस गुंजोल्ल पुलआअ इति षडादेशा भवन्ति । ऊसलइ । गुंजोल्लइ । ह्रस्वे । गुंजुल्लइ । एवमन्येपि । पक्षे । उल्लसइ ॥

---

१ 'पुरापुडाहिरेमांगुमाड्डुमाः P. २ अगुव अपूड अहिरेम अंगुम अंडुम P. ३ अगुवइ P. ४ धातोः M. ५ षडादेशा वा स्युः M. ६ My. and P. drop this sentence. ७ वा स्युः M.

संदिशोप्पाहः ॥ ३ । १ । ११२ ॥

संपूर्वस्य दिश अतिसर्जन इत्यस्य अप्पाह इति वा स्यात् । अप्पाहइ । पक्षे । संदिसइ ॥

ग्रसेर्घिसः ॥ ३ । १ । ११३ ॥

ग्रसु अदन इत्यस्य घिस इति वा स्यात् । घिसइ । पक्षे । गसइ ॥

भासेर्भिसः[1] ॥ ३ । १ । ११४ ॥

भासृ[2] दीप्तावित्यस्य भिस इति वा स्यात् । भिसइ । पक्षे । भासइ ॥

प्रतीक्षेर्विहरविरमालसामआः[3] ॥ ३ । १ । ११५ ॥

प्रतिपूर्वस्येक्षतेः विहर विरमाल सामअ इति वा भवन्ति । विहरइ । एवमितरौ । पक्षे । पडिक्खइ ॥

स्रंसेर्ल्हसडिम्भौ ॥ ३ । १ । ११६ ॥

स्रंसु अवस्रंसन इत्यस्य ल्हस डिम्भ इति द्वौ भवतः । ल्हसइ । डिम्भइ । पक्षे । संसइ । परिल्हसइ इत्यपि दृश्यते ॥

मृक्षेश्चोप्पडः ॥ ३ । १ । ११७ ॥

मृक्ष संघात इत्यस्य चोप्पड इति वा स्यात् चोप्पडइ । पक्षे । मक्खइ ॥

विसट्टो दलेः ॥ ३ । १ । ११८ ॥

दलतेर्विसट्ट इति वा स्यात् । विसट्टइ । पक्षे । दळइ ॥

त्रसेर्वज्जडरौ ॥ ३ । १ । ११९ ॥

त्रसतेर्वज्ज डर इत्येतौ वा भवतः । वज्जइ । डरइ ॥

वोज्जो वीजेश्च ॥ ३ । १ । १२० ॥

वीज व्यजन इत्यस्य चकारात् त्रसेश्च वोज्ज इति वा स्यात् । वोज्जइ । पक्षे । वीजइ । तसइ ॥

---

[1] भासुर्भिसः P., My. [2] भास M. [3] °सामयाः M.

गवेपेर्घत्तगमेसडुंडुल्लडंडोलाः ॥ ३ । १ । १२१ ॥

गवेपयतेः घत्त गमेस डुंडुल्ल डंडोल्ल इति चत्वार आदेशा वा स्युः । घत्तइ । एवमन्येपि । पक्षे । गवेसइ ॥

तक्षेश्चंछरंपरंफाः ॥ ३ । १ । १२२ ॥

तक्षू तनूकरण इत्यस्य चंछ रंप रंफ इति त्रय आदेशा भवन्ति । चंछइ । रंपइ । रंफइ । पक्षे तक्खइ । स्पृहादिपाठात् क्षस्य छः । तच्छइ ॥

हसेर्गुंजः ॥ ३ । १ । १२३ ॥

हसतेर्गुंज इति वा स्यात् । गुंजइ । पक्षे । हसइ ॥

दहेरहिऊलालुंखौ ॥ ३ । १ । १२४ ॥

दह भसीकरण इत्यस्य अहिऊल आलुंख इति वा भवतः । अहिऊलइ । आलुंखइ । पक्षे । दहइ ।

विकसेः कोआसवोसैग्गौ ॥ ३ । १ । १२५ ॥

विकसेः कोआस वोसैग्ग इति वा भवतः । कोआसइ । वोसैग्गइ । पक्षे । विकसइ ।

श्लिषोपआससामग्गपरिअन्तीः ॥ ३ । १ । १२६ ॥

श्लिष आलिङ्गन इत्यस्य अपआस सामग्ग परिअन्त इति वा भवन्ति । अपआसइ । सामग्गइ । परिअन्तइ । पक्षे । सिसइ ।

जुगुप्सतेर्झणदुगुच्छदुगुंच्छझप्पदुगच्छाः ॥ ३ । १ । १२७ ॥

जुगुप्सतेः झण दुगुच्छ दुगुंछ झप्प दुगच्छ इत्यादेशा वा स्युः । झणइ । दुगुच्छइ । एवमन्येपि । पक्षे । जुउच्छइ । अत्र 'ध्यथत्सप्साम्' इति पस्य छः ॥

घलगच्छहामाएहेः ॥ ३ । १ । १२८ ॥

---

१ °डग्गौ P. २ आहुख P. ३ °कोग्गौ P. ४ खोसा P. ५ सोगगइ P. ६ °परिअत्ता. P. ७ परिअन्त P. ८ परिअत्तइ P.

आङ्पूर्वस्य रुहेः वलग्ग छड इति वा भवतः । वलग्गइ । छडइ । पक्षे । आरुहइ ॥

**[1]झुंखो लक्ष्यात् स्खलेः ॥ ३ । १ । १२९ ॥**

लक्ष्यविषयकस्य स्खलतेः [2]झुंख इति भवति लक्ष्यात् स्खलतीत्यर्थे । [3]झुंखइ ॥

**गाहोवाद्वाहः ॥ ३ । १ । १३० ॥**

अवात्परस्य गाहू विलोडन इत्यस्य वाह इति वा स्यात् । ओवाहइ । पक्षे । ओगाहइ । अत्र 'त्वोदवापोताः' इति सूत्रेण अवस्य ओ इत्यादेशः ॥

**गुंमगुंमडौ मुहेः ॥ ३ । १ । १३१ ॥**

मुह वैचित्य इत्यस्य गुंम गुंमड [4]इति वा भवतः । गुंमइ । गुंमडइ । पक्षे । मुज्झइ । अत्र 'घ्यह्योर्झल्' इति झत्व ॥

विशेषानुवृत्तेः 'तूरः शतृतिङि' इति ज्ञापकाच्च उक्ता धात्वादेशाः [5]शतृशानजादिष्वपि संचारणीयाः ॥

**धातवो[6]ऽर्थान्तरेष्वपि ॥ ३ । १ । १३२ ॥**

उक्तेभ्योन्येष्वप्यर्थेषु धातवो भवन्ति । पलिः प्राणने पठितः खादनेपि । पलिर्द्वयोः प्रयोज्यः । पलइ खादति । प्राणिति वा । कलिः संख्याने संज्ञाने च । कलिरुभयोः प्रयोज्यः । कलइ । जानाति संख्यानं करोति वा । गिरिर्गतौ प्रवेशे च । अनयोरयं प्रयोज्यः । गिरइ । गच्छति । प्रविशति वा । विलपत्युपालंभि[7]संतपनिश्वसां कंखादेशः । विलपत्यादीनां चतुर्णां कंखादेशो भवति । कंखइ । विलपति । उपालभते । [8]संतप्यति । निश्वसिति वा । केचिद् भाष्यन्ते कैश्चिदुपसर्गैर्नित्यम् । अत्र केचिद् धातवः कैश्चिदुपसर्गैरर्थान्तरेषु नित्यं

---

१ झुंखो P. २ झुंख P. ३ झुंखइ P. ४ इत्यादेशौ वा स्याताम् M. ५ तादृशानडादिष्वपि M. ६ अर्थान्तरेष्वपि M. ७ सतपि M. ८ सतपति M.

भाप्यन्ते । पहरइ । युध्यते । संहरइ । संवृणोति । अणुहरइ । सदृशीभवति । णिहरइ । पुरीषोत्सर्जनं करोति । विहरइ । क्रीडति । आहरइ । खादति । परिहरइ । त्यजति । पडिहरइ । पुनः पूरयति । उपहरइ । पूजयति । आहरइ । आह्वयति । पवसइ । देशान्तरं गच्छति । उच्चुवइ । चटति । झल्लहरइ । निःसरति । इत्यादि ॥

अत्र भावकर्मणोरेभ्य एव धातुभ्यः कतिचिद्रूपाणि प्रदर्श्यन्ते । अत्राकर्मकेषु धातुषु भावे प्रथमपुरुषैकवचनमेव । उपसर्गवशात् सकर्मकत्वे तेभ्योपि बहुवचनानि भवन्ति । भावे भू इति स्थिते । अनुक्तमन्यन्यायेन यकि हो इत्यादेशः । पूर्ववत् हो य इति स्थिते

ईअइज्जौ यकः ॥ २ । ४ । ९१ ॥

सर्वेभ्यो धातुभ्यो भावकर्मणोर्विहितो यो यक् प्रत्ययस्तस्य ईअ इज्ज इत्यादेशौ भवतः । होईअ । होइज्ज इति स्थिते तिबादयस्तदादेशा इजादयश्च पूर्ववत् । भावे । होईअइ । होईअए । होइज्जइ । होइज्जए । 'वा लड्लोट्छतृषु' इत्येत्वं वा । होईएइ । होइज्जेइ । 'लड्लटोश्च जर्जारौ' इति इचः स्थाने जर्जारौ च । 'ज्जाज्जे' इत्यत एत्वं च वा । होईएज्ज । होईएज्जा । होइज्जेज्ज । होइज्जेज्जा । कर्मणि लटि प्रथमपुरुषैकवचने अनुपूर्वत्वमेव विशेषः । रूपाणि तु अणुहोईअइ । इत्यादि । भाववत् । कर्मणि प्रथमपुरुषबहुत्वे झिझयोरादेशाः पूर्ववत् । यक ईआदेशपक्षे । अणुहोईअंति । अणुहोईअंते । अणुहोईअइरे । 'वा लड्लोट्छतृषु' इति वा एत्वे । अणुहोईएन्ति । अणुहोईएन्ते । अणुहोईएइरे । अत्र लड्लटोः जर्जारौ । 'ज्जाज्जे' इत्येत्वं च । अणुहोईएज्ज । अणुहोईएज्जा । एवं यक इज्जादेशपक्षेपि रूपाणि कल्पनीयानि । मध्यमपुरुषैकवचने सिप्थासोरादेशौ पूर्ववत् । यक ईआदेशपक्षे । अणुहोईअसि । अणुहोईएसि । अणुहोईएज्ज । अणु-

---

१ उपरद M. २ बहुवचनान्यपि M. ३ इत्यादेशावपक्षे M. ४ My. and P. drop पुरु. ५ My. and P. drop पुरु.

होईएज्जा । एवं यक इज्जादेशपक्षेपि । मध्यमपुरुषबहुत्वे थध्वमोरादेशौ पूर्ववत् । अणुहोईअहत्था । अणुहोईअह । अणुहोईएइद्धा । अणुहोईएह । अणुहोईएज्ज । अणुहोईएज्जा । एवं यक इज्जादेशपक्षेपि । उत्तमैकवचने । यक ईआदेशपक्षे मिबिटोरादेशाः पूर्ववत् । अणुहोईअमि । अणुहोईआमि । अणुहोईइमि । अणुहोईएमि । अणुहोईएज्ज । अणुहोईएज्जा । एवं यक इज्जादेशपक्षेपि । उत्तमपुरुषबहुत्वे । मसहिङ्ङोरादेशाः पूर्ववत् । यक ईआदेशपक्षे । अणुहोईअमो । अणुहोईआमो । अणुहोईइमो । अणुहोईएमो । अणुहोईएज्ज । अणुहोईएज्जा । एवं यक इज्जादेशपक्षेपि । एवं मस्महिङ्ङोरादेशयोः महोरपि रूपनिर्णयः कर्तव्यः । यक इज्जादेशपक्षेपि तद्वद्रूपक्लृप्तिः ॥

एवमजन्तानां हलन्तानां च धातूनां भावकर्मणोः लँटि रूपाणि निर्णेतव्यानि । आर्धधातुके यगभावेपि तस्य स्थाने ईअइज्जावचगन्तव्यौ । तथा च लुङ्लङ्लिट्सु भावे 'भूतार्थस्य सिहिअहि' इति स्यादयः । यक ईअइज्जौ च । होईअसि । होईअहिअ । होईअहि । इज्जादेशे । होइज्जसि । होइज्जहिअ । होइज्जहि । कर्मणि अणुहोईसि । अणुहोईअहिअ । अणुहोईअहि । एवमिज्जादेशेपि स्यादयस्तुतिसयोरेवेत्युक्तत्वात् । अन्यत्र लङ्रूपाण्युदाहर्तव्यानि ॥

एवमन्येषामजन्तानां हलन्तानां च धातूनां भूतार्थे रूपक्लृप्तिर्भवति । लृलुटोः 'भविष्यति हिरादिः' इति हिः । ईअइज्जौ च । 'एच क्त्वातुंतव्यभविष्यति' इत्येदितौ । भावे । होईएहिइ । होईइहिइ । होईएहिज्ज । होईइहिज्ज । होईएहिज्जा । होईइहिज्जा । एवं यक इज्जादेशेपि । कर्मणि प्रथमैकवचने अनुपूर्वत्वमेव विशेषः । रूपाणि तु भाववत् । कर्मणि प्रथमबहुत्वे । अणुहुईएहिंति । अणुहोई-

---

१ °देशेपि P., My. २ °पक्षे M. ३ °देशे एतद्व° My., P.
४ M. has अपि for लटि.

हिंति । अणुहोईएहिंते । अणुहोईइहिंते । अणुहोईएहिरे । अणुहोईइहिरे । अणुहोईएहिज्ज । अणुहोईएहिज्जा । एवमिज्जादेशेपि । मध्यमैकवचने । अणुहोईएहिसि । अणुहोईइहिसि । अणुहोईएहिसे । अणुहोईइहिसे । जर्जारौ च । एवमिज्जादेशेपि । [1]मध्यमबहुत्वे । अणुहोईएहिइत्था । अणुहोईइहिइत्था । अणुहोईएहिहा । जर्जारौ च । एवमिज्जादेशेपि । उत्तमैकत्वे । अणुहोईएहामि । अणुहोईइहामि । अणुहोईएस्सामि । अणुहोईइस्सामि । अणुहोईएस्सं । अणुहोईइस्सं । जर्जारौ च । एवमिज्जादेशेपि । बहुत्वे । अणुहोईएहिमो । अणुहोईइहिमो । अणुहोईएहामो । अणुहोईइहामो । अणुहोईएस्सामो । अणुहोईइस्सामो । एवं मन्वोरपि । हिस्साहित्थयोः । अणुहोईएहिस्सा । अणुहोईइहिस्सा । अणुहोईएहित्था । अणुहोईइहित्था । जर्जारौ च । एवमिज्जादेशेपि ।

एवमन्येषां धातूनां भावकर्मणोर्भविष्यति रूपाणि । लोटि पूर्ववदीआइज्जौ । 'एकस्मिन् प्रथमादेः–' इति दुसुमवः । 'वहौ न्तुहमो', 'सोस्तु हि', 'लुगिज्जहीज्जस्विज्जेतः' इति लुगादयः । 'वा लड्लोड्छतृपु' इत्येत्वं च वा । शेषं पूर्ववत् । भावे । होईएदु । होईअदु । होइज्जेदु । होइज्जदु । कर्मणि । ईआदेशपक्षे । प्रथमैकत्वे । अणुहोईएदु । अणुहोईअदु । जर्जारौ च । एवमिज्जादेशेपि । अणुहोईएन्तु । अणुहोईअन्तु । जर्जारौ च । मध्यमैकत्वे । अणुहोईएसु । अणुहोईअसु । अणुहोईएदि । अणुहोईअहि । अणुहोईए । अणुहोईअ । अणुहोईएइज्जहि । अणुहोईअइज्जहि । अणुहोईएइज्जसु । अणुहोईअइज्जसु । अणुहोईएइज्जे । अणुहोईअइज्जे । जर्जारौ च । एवमिज्जादेशेपि । [2]बहुत्वे । अणुहोईएह । अणुहोईअह । जर्जारौ च । एवमिज्जादेशेपि । उत्तमैकत्वे । अणुहोईएमु । अणुहोईअमु । जर्जारौ च । एवमिज्जा-

---

1 My. and P. omit मध्यमबहुत्वे—एवमिज्जादेशेपि. 2 My. omits बहुत्वे—इज्जादेशेपि.

देशेपि । वहुत्वे । अणुहोईएमो । अणुहोईअमो । जर्जारौ च । एवमिज्जादेशेपि ॥

एवमन्येषां हलन्तानामजन्तानां च लोटि भावकर्मणो रूपसिद्धि- रूह्या ॥

लिङि । 'लिज्जालिङः' इति लिङादेशादिज्जात्पर इकारो वा प्रयो- क्तव्यः । अयमेव विशेषः । रूपाणि तु लोड्वत् ॥

लङि । ईअइज्जौ । 'माणन्तौल् च लङः' इति माणन्तौ च । भावे । होईअमाण । होईअन्त । होइज्जमाण । होइज्जन्त । कर्मणि । अणुहोईअमाण । अणुहोईअन्त । अणुहोइज्जमाण । अणुहोइज्जन्त । जर्जारौ च । एवमन्येषु पुरुषेषु वचनेषु ईअइज्जयोरुदाहरणानि ॥

धात्वन्तराणामपि लङ्येवं रूपाणि कल्पनीयानि ॥

अथ भावकर्मणोरेधादयः प्रदर्श्यन्ते । ईअइज्जौ । एहीअइ । एहिज्जहि ॥ डुपचष् पाके । वईअई । वइज्जइ ॥ टुनदि समृद्धौ । णंदीअइ । णंदिज्जइ ॥ ध्वंसु गतौ । झुंसीअइ । झुंसिज्जइ । धंसी- अइ धंसिज्जइ ॥ व्येञ् संवरणे । वेईअइ । वेइज्जइ ॥ अद भक्षणे । अदीअइ । अदिज्जइ ॥ ओहाक् त्यागे । हाईअइ । हाइज्जइ ॥ डुधाञ्—धाईअइ । धाइज्जइ ॥ पूञ्—सवीअइ । सविज्जइ ॥ णह बन्धने । णहीअइ । णहिज्जइ ॥ तुद व्यथने । तुदीअइ । तुदिज्जइ ॥ मृङ् मरणे । मरीअइ । मरिज्जइ ॥ मुच्लृ [3]मोक्षणे । मुईअइ । मुइ- ज्जइ । ल्लुटोः 'डोच्छ वचिमुचिरुदिश्रुभुजः' इति ओच्छादेशो हिलुक् च वा । मोच्छीअहिइ । मोच्छिज्जहिइ । 'डं मेश्छात्तः' इति मेस्थाने डं च । मोच्छीअअं । मोच्छिज्जअं ॥ एवं वच्यादेरपि भाव- कर्मणोर्ल्लुटो रूपम् । शेषं पूर्ववत् । रुधिर्—रुंधीअइ । रुंधिज्जइ । 'युधबुध—' इत्यादि सूत्रेण रुधेरन्त्यस्य झादेशो । रुंझीअइ । रुंझि-

१ अजन्तानां हलन्तानां च M. २ मृन् । My., P. ३ P. and My. drop it.

ज्जइ ॥ युजिर्—जुंजीअइ । जुंजिज्जइ । जुप्पीअइ । जुप्पिज्जइ । जुज्जीअइ । जुज्जिज्जइ । अत्र 'जुंजजुज्जजुप्पा युजेः' इति सूत्रेण त्रय आदेशाः । क्वचित् सिद्धावस्थापेक्षया जुज्जइ इति च दृश्यते । भुज पालनाभ्यवहारयोः—भुईअइ । भुइज्जइ । ल्लुटोः । 'डोच्छ वचिमुचिरुदिश्रुभुजः' इति ओच्छादेशो हिलुक् च वा । मोच्छीअहिइ । मोच्छिज्जहिइ । मोच्छीअइ । मोच्छिज्जइ । 'डं मेश्छाचतः' इति मेस्थाने डं च । मोच्छीअअं । मोच्छिज्जअं । मोच्छीअहिमि । मोच्छिज्जहिमि ॥ तनु—तणीअइ । तणिज्जइ । 'तड्डवविरल्लतडतड्डाखनेः' इति तड्डवाद्यादेशाः । तड्डवीअइ । तड्डविज्जइ । इत्याद्यपि ॥ मनु—मणीअइ । मणिज्जइ ॥ कृञ्—करीआई । करिज्जइ । लुङ्लङ्लिट्सु 'आ भूतमविष्यति च कृञः' इत्याकारः स्यादयश्च । काईअसि । काईअहिअ । काईअहि । एवमिज्जादेशेपि । भविष्यति । काईएहिइ । काईइहिइ । एवमिज्जादेशेपि । 'कृदो हं' इति भविष्यति मेस्थाने हं । काईएहं । काईइहं । काइज्जेहं । काइज्जिहं । पक्षे । काईएहिमि । काइज्जहिमि ॥ धृञ्—धरीअइ । धरिज्जइ ॥ ग्रह उपादाने—गहीअइ । गहिज्जइ ॥

अनया दिशा धात्वन्तराणां सामान्येन विहितोक्तधात्वादेशस्थले च भावकर्मणोर्लकारेषु रूपाण्युदाहर्तव्यानि । ग्रन्थविस्तरभयाद्विशेषविधानाभावाच्चास्माभिर्न लिख्यन्ते ॥

अथ भावकर्मणोर्धातूनामागमादेशाश्च प्रदर्श्यन्ते ॥

'णो ह्ध चिजिपूधुपूलुहुलुम्यः' इत्यतः 'णो ह्ध' इत्यधिकृत्य

**भावकर्मणि तु वर्यग्लुक् च ॥ २ । ४ । ७२ ॥**

भावे कर्मणि च वर्तमानेभ्यश्चिज्यादिभ्यो धातुभ्यः परो वकारागमो रित् स्याद्वा । तत्संयोगेन यको लुक् । रित्वाद् द्वित्वम् । चिव्वइ ।

---

१ सिद्धावस्थापेक्षया M. २ M. has ह्द—दरीअइ । दरिज्जइ in place of this line.

जिव्वइ । पुव्वइ । सुव्वइ । धुव्वइ । थुव्वइ । हुव्वइ । लुव्वइ । अत्र 'संयोगे' इति यथायोगं ह्रस्वः । बहुलाधिकारात् 'स्तौ' इत्युत ओत्वं न भवति । पक्षे 'णो ह्रश्च—' इत्यादिना ण इत्यागमः । यक ईअइज्जौ । चिणीअइ । चिणिज्जइ । जिणीअइ । जिणिज्जइ । इत्यादि । भविष्यति । चिणिज्जहिइ । इत्यादि ॥

**मश्चेः ॥ २ । ४ । ७४ ॥**

'भावकर्मणि' इत्यनुवर्तते 'यग्लुक् च' इति च । चिनोतेः परो भावकर्मणि मकारागमो रिद्वा स्यात् । चिम्मइ । पक्षे । चिव्वइ । चिणिज्जइ । भविष्यति । चिम्महिइ । पक्षे । चिणिज्जहिइ ॥

**अन्त्यस्य हनखनोः ॥ २ । ४ । ७५ ॥**

'मर्' इत्यनुवर्तते । हन खन इत्येतयोरन्त्यस्य भावकर्मणि[1] मोरिद्वा स्यात् तत्संनियोगेन यग्लुक् च । हम्मइ । पक्षे । हणिज्जइ[2] । भविष्यति । हम्महिइ[3] । खणिज्जहिइ । बहुलाधिकारात् कर्तर्यपि । हम्मइ । हन्तीत्यर्थः । क्वचिन्न भवति । हंतव्वं कहंचण ॥

**दुहलिहवहरुहां भरत उच्च ॥ २ । ४ । ७६ ॥**

दुहादीनामन्त्यस्य भावकर्मणि भकारो रिद्वा स्यात् तत्संनियोगेन यग्लुक् च वहेरत उकारश्च । दुब्भइ । लिब्भइ । वुब्भइ । रुब्भइ । पक्षे । दुहिज्जइ । लिहिज्जइ । वहिज्जइ । रुहिज्जइ ॥

**दहेर्झर् ॥ २ । ४ । ७७ ॥**

'अन्त्यस्य' इत्यनुवर्तते । दहेरन्त्यस्य भावकर्मणि झकारो रिद्वा स्यात् तत्संनियोगेन यग्लुक् च । दज्झइ । पक्षे । दहिज्झइ ॥

**बन्धो न्धः ॥ २ । ४ । ७८ ॥**

---

१ भावे कर्मणि M. २ M. adds after पक्षे हणिज्जहि । खम्मिहिइ । ३ M. inserts खम्मइ । खणिज्जइ after it. ४ हम्मिहिइ M. ५ M. has हंतव्वं । हंतूण । हन्तव्यम् । हत्वा ।

'झइ' अनुवर्तते । बन्ध बन्धन इत्यस्य धातोः न्धइत्यस्य भावकर्मणि[1] झकारो द्विः स्यात् तत्संनियोगेन यग्लुक् च । बज्झइ । बन्धिज्झइ[2] ॥

रुध उपसमनोः ॥ २ । ४ । ७९ ॥

'अन्त्यस्य' इत्यनुवर्तते 'झइ' इति च । उपसमनुभ्यः परस्य रुधेरन्त्यस्य भावकर्मणि झकारो द्विः स्यात् तत्संनियोगेन यग्लुक् च । उपरुज्झइ[3] । पक्षे । उपरुंधिज्जइ । इत्यादि[4] ॥

द्वे गमिगे ॥ २ । ४ । ८० ॥

'अन्त्यस्य' इत्यनुवर्तते । गमादौ धातोरन्त्यस्य द्वे भवतो भावकर्मणि[5] तत्संनियोगेन यग्लुक् च । गम्मइ । गमिज्जइ । हस्सइ । हसिज्जइ । भण्णइ । भणिज्जइ । इत्यादि[6] । गमादि—गम् हस् भण् लुभ् कथ् भस् भुज् रुद् । 'नमो द्विजरुदां वः' इति कृतवकारो रुदिरत्र गृह्यते ॥

ईर हृकृतृजाम् ॥ २ । ४ । ८१ ॥

हृञ् कृञ् तृ जृ इत्येतेषामन्त्यस्य भावकर्मणि ईर इत्यादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । हीरइ । हरिज्जइ । तीरइ । तरिज्जइ । जीरइ । जरिज्जइ । अत्र सर्वत्र ईकारादेशाभावे[7] 'अर उः' इति ऋकारस्य अरादेशः[8] ॥

अजेर्विडप्पः ॥ २ । ४ । ८२ ॥

'अन्त्यस्य' इति निवृत्तम् । अजेर्विडप्प इत्यादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । विडप्पइ । पक्षे । अज्जिज्जइ ॥

---

१ भावकर्मणोः M. २ M. adds भविष्यति । बन्धिज्झहिअ । ३ M. adds after it रुंज्झइ. ४ After this M. inserts भविष्यति । उपरुज्झहिअ । उपरुन्धिज्जिहाइ । ५ भावकर्मणोः M. ६ M. adds भविष्यति गमिमहइ । गमिम्मइइ । इत्यादि. ७ ईकाराभावे M. ८ M. adds भविष्यति हिरिज्जिहिइ । इत्यादि.

आरभ आढप्पः ॥ २ । ४ । ८३ ॥

आरभतेर्भावकर्मणि आढप्प इत्यादेशो वा स्यात् । तत्संनियोगेन यग्लुक् च । आढप्पइ । पक्षे । आरभिज्जयि ॥

णप्पणज्जौ ज्ञः ॥ २ । ४ । ८४ ॥

जाणातेर्भावकर्मणि णप्प णज्ज इत्येतावादेशौ स्यातां तत्संनियोगेन यग्लुक् च । णप्पइ । णज्जइ । पक्षे । जाणिज्जइ । मुणिज्जइ । अत्र 'जाणमुणौ ज्ञः' इति ज्ञाधातोर्जाणमुणादेशौ । 'ज्ञम्नोः' इति णत्वे । णाइज्जइ ॥

सिप्पस्सिचस्निहोः ॥ २ । ४ । ८५ ॥

सिञ्चतेः स्निह्यतेश्च भावकर्मणि सिप्पादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । सिप्पइ । सिच्यते । स्निह्यते वा । पक्षे । सिंचिज्जइ । ण्हिहिज्जइ । अत्र 'श्लक्ष्ण—'इत्यादिना ण्हादेशः ॥

वाहिप्पो व्याहृः ॥ २ । ४ । ८६ ॥

व्याहरतेर्भावकर्मणि वाहिप्प इत्यादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । वाहिप्पइ । पक्षे । वाहरिज्जइ ॥

ग्रहेर्घेप्पः ॥ २ । ४ । ९० ॥

ग्रहेर्धातोर्भावकर्मणि घेप्पादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । घेप्पइ । पक्षे । गेण्हिज्जइ । अत्र 'ग्रहेर्णिरुवारगेण्ह—'इत्यादिना गेण्हादेशः ॥

छिप्पः स्पृशतेः ॥ २ । ४ । ८८ ॥

स्पृशतेर्भावकर्मणि छिप्प इत्यादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । छिप्पइ । पक्षे । छिविज्जइ । अत्र 'स्पृशिश्छिवालुक्—' इत्यादिना स्पृशतेश्छिवादेशः ॥

दीसलृ दृशेः ॥ २ । ४ । ९१ ॥

दृशेर्भावकर्मणि दीस इत्यादेशो लित् स्यात् तत्संनियोगेन यग्लुक् च । लित्वान्नित्यम् । तथा च 'दृशिरोअवखणिअच्छावअच्छ—'

इत्यादि सूत्रेण विधीयमाना आदेशाः दृशेः कर्मणि न भवन्ति । दीसइ॥

वचेरुंचः ॥ २ । ४ । ९० ॥

वचेर्भावकर्मणि उंच इत्यादेशो वा स्यात् तत्संनियोगेन यग्लुक् च । उंचइ । पक्षे । वइज्जइ । एषां धातूनामुक्ता एते आदेशा भावकर्मणोरेव भवन्ति । एषां धातूनामेतद्व्यतिरिक्ता आदेशाः कर्तर्यपि भवन्ति ॥

---

अथ णिचि रूपनिर्णयः प्रदर्श्यते ।

भू इति स्थिते । अनुक्तमन्यन्यायेन णिचि भुवो हो इत्यादेशाः पूर्ववत् । होणि इति स्थिते ॥

णिजदेदावावे ॥ २ । ४ । ११ ॥

धातोः प्रेरणार्थे विहितस्य णिच्प्रत्ययस्य स्थाने अत् एत् आव आवे इति चत्वार आदेशा भवन्ति । तकारस्तावन्मात्रप्रदर्शनार्थः । इजादयः पूर्ववत् । होअइ । होएइ । होआवइ । होआवेइ । बहुलाधिकारात् क्वचिदेतन्नास्ति । जाणअइ । जाणावइ । जाणावेइ । क्वचिदावे नास्ति । भारइ । भारेइ । भारावइ । पारइ । पारेइ । पारावइ ॥

गुर्वादेरविर्वा ॥ २ । ४ । १२ ॥

'णिज्' अनुवर्तते । गुरुरादिर्यस्य धातोः स गुर्वादिः । गुर्वादेर्णिचः अविर्वा स्यात् । होअविइ । अत्र न यण् । 'एङः' इति च प्रतिषेधात् संधिर्न भवति । 'अपदे' इत्युक्तत्वाद्वा । लटि प्रथमे पूर्ववदिजादयः जर्जारौ च । अत्र णिजादेशयोरावे आव इत्येतयोः 'ज्ञाज्जे' इत्येत्वे कृते णिजादेशयोः अत् एत् इत्येतयोश्च सरूपतो भेदाभावाच्चतुर्णामुदाहरणवेलायां द्वैरूप्यमवगन्तव्यम् । होअइ । होएइ । होआवइ । होआवेइ । एवं तिप्तयोरिजादेशे रूपाणि । 'मध्ये चाजन्तात्' इति जर्जारौ । होएज्जइ । होएज्जाइ । इदमदेतोः समानम् । होआवेज्जइ । होआविज्जाइ । इदमावेआवयोस्तुल्यम् । होअविज्जइ ।

होअविज्जाइ । 'लङ्लटोश्च जर्जारौ' । होएज्ज । होएज्जा । इदमदेतोः समानं रूपम् । होआवेज्ज । होआवेज्जा । इदमावेआवयोस्तुल्यम् । होअविज्ज । होअविज्जा । लट्प्रथमबहुत्वे । होअन्ति । होअन्ते । होअइरे । होएन्ति । होएन्ते । होएइरे । एवमावावेअन्तानामप्युदाहार्यम् । होएज्जन्ति । होएज्जन्ते । होएज्जइरे । इदमदेतोस्तुल्यम् । होआवेज्जन्ति । होआवेज्जन्ते । होआवेज्जइरे । इदमावेआवयोस्तुल्यम् । पूर्वोक्तान्येव जारादेशपक्षेप्युदाहरणानि । विशेषस्तु । होएज्जाइरे । होआवेज्जाइरे । युक्तपरे 'संयोगे' इति ह्रस्वः । होअविज्जन्ति । होअविज्जन्ते । होअविज्जइरे । होअविज्जाइरे । जारि । पूर्ववत् । होएज्ज । होएज्जा । इति 'मध्ये चाजन्तात्' इति जर्जारावुदाहर्तव्यौ । एवमावेआवयोरपि जर्जारावुदाहर्तव्यौ । मध्यमे । होअसि । होअसे । होआवसि । होआवसे । होएसि । होआवेसि । होअविसि । नात्र से । अनदन्तत्वात् । होएज्जसि । होएज्जासि । अदेतोरिदम् । होआवेज्जसि । होआवेज्जासि । आवेआवयोरिदम् । होअविज्जसि । होअविज्जासि । अन्ते जर्जारौ च । मध्यमबहुत्वे । होअइत्था । होअह । होएइत्था । होएह । एवमावावेअवीनामुदाहार्यम् । होएज्जइत्था । होएज्जाइत्था । होएज्जह । होएज्जाह । अदेतोः । होआवेज्जइत्था । होआवेज्जाइत्था । होआवेज्जह । होआवेज्जाह । आवेआवयोः समानम् । होअविइत्था । होअविह । जर्जारौ च । उत्तमे । होअमि । होआमि । होएमि । होइमि । एवमावादेशेपि । होएमि । होआवेमि । होअविमि । मध्ये । जर्जापक्षे । मीत्यस्योच्चारणमेव विशेषः । अन्यन्मध्यमैकत्ववत् । बहुत्वे । होअमो । होआमो । होएमो । एवमावादेशेपि । एवमवावयोर्मम्वोरपि । होएमो । होआवेमो । एवमनयोर्मम्वोरपि । होअविमो । एवं मम्वोरपि । जर्जापक्षे । होअज्जमो । होअज्जामो । इत्यादि । पूर्ववत् । विशेषस्तु मोममूनामुच्चारणम् । अन्ते जर्जारौ च । एवमन्येषामजन्तानां णिचि लटि च रूपम् । लुङ्लङ्लिट्सु णिजादेशा इजादयश्च पूर्ववत् । 'भूतार्थस

सिहिअहि' इति स्वादयः । शेषं लड्वत् । होअसि । होअहित्थ । होअहि । होएसि । होएहित्थ । होएहि । एवमावावेअवीनामुदाहार्यम् । लड्रूपाणि च सर्वाणि । ल्लटोः । णिजादेशाः । 'भविष्यति हिरादिः' इति हिः । 'हास्सा मिमोमुमे वा' इति हास्सा । 'सं' इति सं । 'हिस्साहित्था मुमोमस्य' इति हिस्साहित्था च । शेषं पूर्ववत् । होअहिइ । होएहिइ । होआवहिइ । होआवेहिइ । होअविहिइ । होएज्जहिइ । अदेतोः । होआवेज्जहिइ । आवेआवयोः । होएहिज्जा । अदेतोः । होआवेहिज्जा । आवेआवयोः । होअविज्जहिइ । होअविज्जाहिइ । होअविहिज्ज । होअविहिज्जा । प्रथमबहुत्वे । होअहिन्ति । होअहिन्ते । होअहिइरे । एवमावावेअवीनामुदाहार्यम् । होअविज्जहिन्ति । होअविज्जहिन्ते । होअविज्जइरे । एवं जारोपि । होएहिज्ज । होएहिज्जा । एवमावावेअवीनाम् । मध्यमे । होअहिसि । होएहिसि । एवमावावेअवीनाम् । होएज्जहिसि । होएज्जाहिसि । अदेतोः । एवमावेआवयोः । होअविज्जहिसि । होअविज्जाहिसि । जर्जारौ च । मध्यमबहुत्वे । होअहिइत्था । होअहिह । एवमावावेअवीनामुदाहार्यम् । होएज्जहिइत्था । होएज्जाहिइत्था । होएज्जहिह । होएज्जाहिह । अदेतोस्तुल्यम् । एवमावावेअवीनामुदाहर्तव्यम् । जर्जारौ च । उत्तमे । होअहिमि । होएहिमि । एवमावावेअवीनामुदाहार्यम् । होअहामि । होएहामि । एवमावावेअवीनामुदाहार्यम् । होअहामि । होएहामि । एवमावावेअवीनाम् । होअस्सामि । होएस्सामि । एवमावावेअवीनाम् । होअहिस्सं । होएहिस्सं । एवमावावेअवीनाम् । होएज्जहिमि । होएज्जाहिमि । अदेतोः । एवमावावेअवीनाम् । जर्जारौ च । उत्तमबहुत्वे । होअहिमो । होएहिमो । एवमावावेअवीनाम् । होअहामो । होएहामो । एवमावावेअवीनाम् । होअहामो । होएहामो । एवमावावेअवीनाम् । होअस्सामो । होएस्सामो । एवमावावेअवीनाम् । एवं मन्वोरप्युदाहर्तव्यम् । होअहिस्सा । होअहिहा । होएहिस्सा । होएहिहा । एवमावावेअवीनाम् । होएज्जहिमो । होएज्जाहिमो ।

अदेतोरिदं रूपम्। एवमावावेअवीनाम् । एवं मम्वोरपि । होअहिज्ज । होअहिज्जा । एवमावावेअवीनाम् । एवमन्येषामजन्तानां णिचि भविष्यति रूपं ज्ञेयम्। लोटि णिजादेशाः दुसुमवः। 'बहौ न्तुहमो'। 'सोस्तु हि' । 'वा लड्लोट्—' इत्येत्वं च यथायोगम्। प्रथमे। होअदु। होएदु। अदेतोः। होआवदु। होआवेदु। आवेआवयोरिदम्। होअएदु। होएज्जदु। होएज्जादु। अदेतोः। एवमावावेअवीनाम् । होएज्ज। होएज्जा। अदेतोः । एवमावावेअवीनाम्। होएज्जन्तु। अदेतोः। एवमावावेअवीनाम्। जर्जारौ च । मध्यमे। होअसु। होएसु । एवमावावेअवीनाम्। होएज्जसु । होएज्जासु। अदेतोः। एवमावावेअवीनाम्। एवं 'सोः' इत्यादेशपक्षेपि। जर्जारौ च। मध्यमबहुत्वे । होअह। एवमावावेअवीनाम् । होएज्जह । होएज्जाह। अदेतोः। एवमावावेअवीनाम् । जर्जारौ च। उत्तमे। एकवचने मीत्यस्योचारणम्। बहुवचने मो इत्यस्योचारणं च विशेषः। रूपाणि तु प्रथममध्यमैकत्वबहुत्ववत्। एवं णिचि लोट्यन्येषामजन्तानां धातूनां रूपं नेयम्। लिङि णिजादेशाः। 'विज्जालिङः' इतीज्जात्पर इत्। होएज्जइ। होएज्जाइ। होआवेज्जइ । होआवेज्जाइ। इत्यादि लोड्रूपाणि च। लृङि णिजादेशाः। 'माणन्तौ लृ च लङः' इति माणन्तौ च। होअमाण। होअन्ते। होएमाण। होएन्त। एवमावावेअवीनाम्। होएज्जमाण। होएज्जन्त। एवमावावेअवीनां सर्वत्र पुरुषेषु वचनेषूदाहार्यम्। हवादीनां तु भेदः। पूर्ववणिजादेशाः। 'णिजदेदावावे' इत्यतो 'णिज्' इत्यधिकृत्य षष्ठ्यन्तविपरिणामः।

अदेल्लुक्यात्त्वोरतः ॥ २ । ४ । १५ ॥

णिचः स्थाने विहितेषु अत् एत् लुक् इत्येतेषु परतः धातोरादेरतः आद् भवति ॥

लुक् भावकर्मणिच्स्थले प्रदर्शयिष्यते ॥

हावइ। हावेइ। केचिदावे आव इत्येतयोरपि आदेरत आत्वमि-

च्छन्ति । हावावइं । हावावेइ । पूर्ववज्जर्जारौ च । लटि प्रथमे । होवइ । होवेइ । होहवइ । होहवेइ । होवेज्ज । होवेज्जा । होवन्ति । होवन्ते । होवइरे । होवेन्ति । होवेन्ते । होवेइरे । होहवन्ति । होहवन्ते । होहवइरे । जर्जारौ च । मध्यमे । हावसि । हावेसि । हावावसि । हावावेसि । जर्जारौ च । मध्यमबहुत्वे । हावइद्धा । हावह । हावेइद्धा । हावेह । हावावइद्धा । हावावह । हावावेइद्धा । हावावेह । जर्जारौ च । उत्तमे । हावमि । हावामि । हाविमि । हावेमि । हावावमि । हावावामि । हावाविमि । हावावेमि । जर्जारौ च । उत्तमबहुत्वे । हावमो । हावामो । हाविमो । हावेमो । हावावमो । हावावामो । हावाविमो । हावावेमो । एवं मम्चोरपि । जर्जारौ च । एवं हलन्तानां णिचि लटि रूपं नेयम् । लुङ्लङ्लिट्सु णिजादेशाः । भूतार्थे 'हलईअ' इति तिङयोरीअः । हावईअ । हावईआ । हावावईअ । हावावेईअ । शेषं लङ्वत् । लृलुटोः णिजादेशः । 'भविष्यति हिरादिः' इति हिः । 'हासौ मिमोमुमे वा' । 'सै' । 'हिस्साहित्था मुमोमस्य' । शेषं पूर्ववत् । हाविहिइ । हावेहिइ । हावाविहिइ । हावावेहिइ । हाविहिज्ज । हावेहिज्जा । हावाविहिज्ज । हावावेहिज्ज । एवं जारोपि । हावहिन्ति । हावेहिन्ति । एवं तेइरयोः । हावावहिन्ति । हावावेहिन्ति । एवं तेइरयोः । जर्जारौ च । मध्यमे । हावहिसि । हावेहिसि । हावावहिसि । हावावेहिसि । जर्जारौ च । मध्यमबहुत्वे । हावहिइद्धा । हावहिह । हावेहिइद्धा । हावेहिह । हावावहिइद्धा । हिवावहिह । एवमदन्तेपि । जर्जारौ च । उत्तमे । हावहिमि । हावहामि । हाविस्सामि । एवमदन्तेपि । हावावहिमि । हावावहामि । हावाविस्सामि । हावाविस्सं । एवमत एदादेशेपि । जर्जारौ च । उत्तमबहुत्वे । हावहिमो । हावहामो । हाविस्सामो । एवमेदादेशेपि । हावावहिमो । हावावहामो । हावाविस्सामो । एवमत एदादेशेपि । एवं मम्चोरपि । हावहिस्सा । हावहित्था । हावावहिस्सा । हावावहित्था । हावाविहिस्सा । हावाविहित्था । एवमेदन्तेपि ।

जर्जारौ च। अत्र सर्वत्र 'एच क्त्वातुंतव्यभविष्यति' इत्यत्र एदितौ। एवं हलन्तान्तराणां लोटि णिजादेशाः दुसुमवः। 'बहौ न्तुहमो' 'सोस्तु हि'। 'लुगिज्जहीज्जस्विज्जेतः' इति लुगादयश्च। शेषं पूर्ववत्। प्रथमे। हावदु। हावेदु। हावावदु। हावावेदु। जर्जारौ च। बहुत्वे। हावन्तु। हावेन्तु। हावावेन्तु। हावावन्तु। जर्जारौ च। मध्यमे। हावसु। हावेसु। हावावसु। हावावेसु। हावहि। हावेहि हावावहि। हावावेहि। लुगादयः। हाव। हावेज्जहि। हाविज्जसु। हाविज्जे। हावाव। हावावेज्जहि। हावावेज्जसु। हावावेज्जे। इत्यादि। जर्जारौ च। बहुत्वे। हावह। हावेह। हावावह। हावावेह। जर्जारौ च। उत्तमे। हावमि। हावामि। हाविमि। हावेमि। उत्तमबहुत्वे। हावमो। हावामो। हाविमो। हावेमो। इत्यादि। अत्र सर्वत्र यथायोगं 'वा लड्लोट्—'इत्यादिना अत एत्वं वा। 'मोमसुष्विच्च' इतीत्वं च। लिङि 'स्विज्जालिङः' इतीत्वम्। हावेज्जइ। हावेज्जाइ। हावावेज्जइ। हावावेज्जाइ। लोड्रूपाणि च। लङि माणन्तौ। हावमाण। हावन्त। हावावमाण। हावावन्त। एवमेदन्ता अपि। जर्जारौ च। एवं सर्वेषु पुरुषेषु वचनेषूदाहार्यम्॥

एधादयः प्रदर्श्यन्ते णिजादेशाः। 'गुर्वादेरविर्वा'। एहइ। एहावइ। एहावेइ। एहाविइ॥ पच्। 'अदेल्लुक्यात् स्वोरतः' इत्यात्वम्। पाअइ। पाएइ। पाआवइ। पाआवेइ। अत्र आत्वे कृते बहुलाधिकारादाविर्न भवति॥ टुनदि। णंदइ। णंदेइ। णंदावइ। णंदावेइ। णंदविइ॥ ध्वंसु गतौ। झंसइ। झंसेइ। झंसावइ। झंसावेइ। झंसविइ। एवं धंसइ। इत्याद्यपि॥ व्येञ्। 'गुर्वादेरविर्वा'। वेअइ। वेएइ। वेआवइ। वेआवेइ। वेअविइ॥ अद्। आदइ। आदेइ। आदावइ। आदावेइ। 'अदेल्लुक्यात्—' इत्यात्वम्॥ शीङ्। 'योरेङ्' इत्येत्वम्। सेअइ। सेएइ। सेआवइ। सेआवेइ। सेआविइ॥ ब्रूञ्।

'उवर्णस्याव:' । 'अदेल्लुक्यात्—'इत्यात्वम् । बावइ । बावेइ । बावावइ । बावावेइ ॥ हु दानादानयोः । 'णो ह्रश्च—'इत्यादिना णः । हुणअइ । हुणएइ । हुणावइ । हुणावेइ ॥ ओहाङ् । हाअइ । हाएइ । हाआवइ । हाआवेइ । हाअविइ । अत्र गुर्वादित्वाददविः ॥ धाञ् । धाअइ । धाएइ । धाआवइ । धाआवेइ। धाअविइ ॥ दिव् । दिवइ । दिवेइ । दिवावइ । दिवावेइ ॥ षूञ् । 'उवर्णस्याव:' । 'अदेल्लुक्यात्—' इत्यात्वम् । सावइ । सावेइ । सावावइ । सावावेइ ॥ मृङ् । 'अर उः' । आत्वम् । मारइ । मारेइ । मारावइ । मारावेइ ॥ रुधि । न्धन्भौ । रुन्धइ । रुन्धेइ । रुन्भइ । रुन्भेइ । रुज्झइ । इत्यादि ॥ डुकृञ् । कारइ । कारेइ । इत्यादि ॥ डुक्रीञ् । केअइ । केएइ । केआवइ । केआवेइ । केअविइ ॥ भ्रम् । 'णिजदेदावावे' इत्यतः 'णिच्' इत्यधिकृत्य

भ्रमेराडः ॥ २ । ४ । १३ ॥

भ्रमेः परो णिच् आड इति वा स्यात् । भमाडइ । पक्षे । भामइ । भामेइ । भामावइ । भामावेइ ॥ पटिधातौ णिचि 'फः पाटिपरिघपरिखा—' इत्यादिना पस्य फः । फाळइ । फाळेइ । इत्यादि । अत्र बडिशादित्वाट्टस्य ळत्वम् । अथ चुरादयः । चुर स्तेये । णिचि । णिजादेशाः । 'अचोचाम्' इत्युकारस्य ओकारः । चोरइ । चोरेइ । चोरावइ । चोरावेइ । चोरविइ ॥ पाल रक्षणे । पाळइ । पाळेइ । पाळावइ । पाळावेइ । पाळविइ ॥ अर्च पूजायाम् । अचइ । अचेइ । अचावइ । अचावेइ अचविइ ॥ इत्याद्युक्तसर्वधातुषु तदादेशेषु च णिचि रूपाणि बुद्धिमद्भिरूह्यानि । ग्रन्थगौरवभयादस्माभिर्न लिख्यन्ते ॥

---

अथ णिचि धात्वादेशाः प्रदर्श्यन्ते ।

स्फुटदृशोः सिढदूमौ णिचोः ॥ २ । ४ । १२ ॥

णिजन्तयोरनयोः सिढदूम इत्येतावादेशौ भवतः । सिढइ । दूमइ । सिढेइ । इत्यादि ॥

निवृपतोर्णिहोडो वा ॥ २ । ४ । ९३ ॥

इत उत्तरं यावद्धात्वादेशं 'णिच्' अनुवर्तते । निपूर्वस्य वृञः पतेश्च णिहोड इत्यादेशो वा स्यात् । णिहोडइ । निवारयति पातयति वा । पक्षे । णिवारेइ । पाडेइ । अत्र मत्यादिपाठात् तस्य डत्वम् ॥

धवलोद्घटोर्दुमोग्गौ ॥ २ । ४ । ९४ ॥

'वा' इत्यनुवर्तते । धवलयतेर्नामधातोरुत्पूर्वस्य घटयतेश्च णिजन्तस्य यथासंख्यं दुमउग्ग इत्यादेशौ वा भवतः । दुमइ । उग्गइ । पक्षे । धवळइ । उग्घाडेइ । अत्र 'टो डः' इति टस्य डत्वम् ॥

भ्रमवेष्ट्योस्तालिअंटपरिआलौ ॥ २ । ४ । ९५ ॥

भ्रमयतिवेष्टयत्योर्णिजन्तयोर्यथाक्रमं तालिअंट परिआल इत्येतावादेशौ वा भवतः । तालिअंटइ । पक्षे । भमाडइ । अत्र 'भ्रमेराडः' इत्याडः । भामइ । वेष्टेः परिआलइ । पक्षे । वेडइ । अत्र 'वेष्टेः' इत्यन्त्यस्य डः ॥

रावो रञ्जयतेः ॥ २ । ४ । ९६ ॥

रञ्जयतेर्णिजन्तस्य राव इत्यादेशो वा स्यात् । रावेइ । पक्षे । रंजेइ ॥

तुलिडोल्योरोहामरंखोलौ ॥ २ । ४ । ९७ ॥

णिजन्तस्य तुलयतेर्दोलयतेश्च नामधातोर्यथासंख्यं ओहाम रंखोल इत्येतौ वा भवतः । ओहामइ । रंखोलइ । पक्षे । तुलइ । दोलइ ॥

आसंघः संभावेः ॥ २ । ४ । ९८ ॥

संभावयतेरासंघ इति वा स्यात् । आसंघइ । पक्षे । संभावेइ । संभावयति ॥

अर्पेरल्लिवपणामचच्चुप्पाः ॥ २ । ४ । ९९ ॥

णिजन्तस्यार्पयतेः अल्लिव । पणाम । चच्चुप्प इति त्रय आदेशा वा भवन्ति । अल्लिवइ । पणामइ । चच्चुप्पइ । पक्षे । अप्पेइ । ओप्पेइ । अत्र 'त्वर्पौ' इत्यादेरत ओत्वं वा ॥

गुलुगुंछोत्थंघोव्वेल्लोल्लोला उन्नमेः ॥ २ । ४ । १०० ॥

नमतेरुत्पूर्वस्य णिजन्तस्य गुलुगुंछ उत्थंघ उव्वेल्ल उल्लोल इति चत्वार आदेशा वा स्युः। गुलुगुंछइ । उत्थंघइ। उवेल्लइ। उल्लोलइ । पक्षे । उण्णवेइ । अत्र 'नमोद्विजरुदां वः' इत्यन्त्यस्य वत्वम् ॥

प्रकाशेर्णुव्वः ॥ २ । ४ । १०१ ॥

प्रकाशतेर्णिजन्तस्य णुव्व इति वा स्यात् । णुव्वइ । पक्षे । पआसेइ ॥

णिहुवः कमेः ॥ २ । ४ । १०२ ॥

कमेः स्वार्थे णिजन्तस्य णिहुव इत्यादेशो वा स्यात् । णिहुवइ । पक्षे । कामेइ ॥

नशेर्विप्पगालणासवपलावहारवविउडाः ॥ २ । ४ । १०३ ॥

नाशयतेर्णिजन्तस्य विप्पगाल णासव पलाव हारव विउड इति पञ्चादेशा वा स्युः। विप्पगालइ । णासवइ। पलावइ । हारवइ। विउडइ। पक्षे। णासेइ ॥

वल आरोपेः ॥ २ । ४ । १०४ ॥

णिजन्तस्यारोपेर्वल इति वा स्यात् । वलइ । पक्षे । आरोवेइ ॥

विरेचेरोलुङ्कोलुङ्कपल्हत्थाः ॥ २ । ४ । १०५ ॥

विपूर्वस्य रेचयतेर्णिजन्तस्य ओलुङ्क उलुङ्क पल्हत्थ इति त्रय आदेशा वा भवन्ति । ओलुङ्कइ । उलुङ्कइ। पल्हत्थइ । पक्षे। विरेएइ ॥

कम्पेर्विच्छोलः ॥ २ । ४ । १०६ ॥

कम्पयतेर्णिजन्तस्य विच्छोल इति वा स्यात्। विच्छोलइ। पक्षे। कम्पेइ ॥

रोमन्थेरोग्गालवग्गालौ ॥ २ । ४ । १०७ ॥

रोमन्थतेर्णिजन्तस्य ओग्गाल वग्गाल इति वा स्याताम् । ओग्गालइ । वग्गालइ । पक्षे । रोमन्थेइ ॥

**प्लावेरोंवालपव्वालौ ॥ २ । ४ । १०८ ॥**

प्लावयतेः रोंवाल पव्वाल इति वा भवतः । रोंवालइ । पव्वालइ । पक्षे । पावेइ ॥

**मिश्रेर्मीसाळमेळवौ ॥ २ । ४ । १०९ ॥**

मिश्रयतेर्मीसाळ मेळव इति वा भवतः । मीसाळइ । मेळवइ । पक्षे । मीसेइ । अत्र 'शोर्लुप्त—'इति दीर्घः ॥

**छादेर्णूमणुमोंवालढक्कपव्वालसण्णुमाः ॥ २ । ४ । ११० ॥**

छादयतेः णूम णुम उंवाल ढक्कपव्वाल सण्णुम इति षडादेशा वा स्युः । णूमइ । णुमइ । उंवालइ । ढक्कइ । पव्वालइ । सण्णुमइ । पक्षे । छाएइ ॥

**अच्चुकवोकौ विज्ञापेः ॥ २ । ४ । १११ ॥**

विज्ञापेः अच्चुक वोक इति वा भवतः । अच्चुकइ । वोकइ । पक्षे । विण्णावेइ ॥

**परिवाडो घटेः ॥ २ । ४ । ११२ ॥**

घटयतेः परिवाडो वा स्यात् । परिवाडइ । पक्षे घडेइ ॥

**दृशेर्दावदक्खवदंसाः ॥ २ । ४ । ११३ ॥**

दृशेर्णिजन्तस्य दाव दक्खव दंस इति त्रय आदेशा वा स्युः । दावइ । दक्खइ । दंसइ । पक्षे । दंसेइ ॥

**प्रस्थापेः पेट्ठवपेंडवौ ॥ २ । ४ । ११४ ॥**

प्रस्थापेर्णिजन्तस्य पेट्ठव पेंडव इत्येतौ वा भवतः । पेट्ठवइ । पेंडवइ । पक्षे । पत्थावेइ । अत्र 'कग—'इति सलोपद्वित्वे ॥

**यापेर्जवः ॥ २ । ४ । ११५ ॥**

यापयतेर्जव इत्यादेशो वा स्यात् । जवइ । पक्षे । जावेइ ॥

**विकोशेः पक्खोडः ॥ २ । ४ । ११६ ॥**

विकोशेर्नामधातोः पक्खोड इति वा स्यात् । पक्खोडइ । पक्षे । विओसेइ ॥

**गुंठ उद्धूलेः ॥ २ । ४ । ११७ ॥**

उद्धूलयतेर्नामधातोर्णिजन्तस्य गुंठ इत्यादेशो वा स्यात् । गुंठइ । पक्षे उद्धूलेइ ॥

**तडेराहोडविहोडौ ॥ २ । ४ । ११८ ॥**

ताडयतेर्णिजन्तस्य राहोड विहोड इत्यादेशौ वा भवतः । राहोडइ । विहोडइ । पक्षे । ताडेइ ॥

**ह्लादेरवअच्छलणिचश्च ॥ २ । ४ । ११९ ॥**

ह्लादयतेरणिजन्तस्य चकाराण्णिजन्तस्य च अवअच्छल् इत्यादेशो वा भवति । अवअच्छइ ॥

एवमन्येषु धातुषु तदादेशेषु च णिजादेशा अदादयश्च कल्पनीयाः । अथ णिचि भावकर्मविवक्षायां धातोरुपरि णिच् । तदुपरि यक् । तस्य पूर्ववदीअइज्जयोर्विधाने 'णिजदेदावावे' इत्यतः 'णिच्' इत्यधिकृत्य

**लुगाविल्भावकर्मक्के ॥ २ । ४ । १४ ॥**

भावकर्मविहिते प्रत्यये क्ते च परे णिचो लुक् आवि इत्यादेशौ वा भवतः । लित्वान्नित्यम् । एवं णिचो लुकि आवौ च सति लटि भावे रूपाणि । होइअइ । होइअए । इत्यादि । लुक्पक्षे केवलभाववद्रूपाणि । आविपक्षे । होआविअइ । होआइअए । होआविज्जइ । होआविज्जए । 'वा लट्लोट्—' इत्येत्वं वा । होआविएइ । होआविज्जेइ । होआविएज्ज । होआविएज्जा । होआविज्जेज्ज । होआविज्जेज्जा । कर्मणि प्रथमैकत्वे भाववत् । बहुत्वे णिचो लुक्पक्षे अण्यन्तकर्मबहुत्ववद्रूपाणि । आविपक्षे । अणुहोआविअन्ति । अणुहोआविअन्ते । अणुहोआविएन्ति । अणुहोआविएन्ते । अणुहोआविइरे । अणुहोआविएइरे । अणुहोएएज्ज । अणुहोएएज्जा । एवमा-

विल्पक्षे । यक इज्जादेशेपि । मध्यमे णिज्लुक् पक्षे अण्यन्तकर्मवत् । आविल्पक्षे । अणुहोआविअसि । अणुहोआविअसे । एवं यक इज्जा-देशेपि । अणुहोआविअसे । एवं यक इज्जादेशेपि । जर्जारौ च । मध्यमबहुत्वे णिज्लुकि पूर्ववत् । आवौ । अणुहोआविअइत्था । अणुहोआविह् । अणुहोआविएइत्था । अणुहोआविएह् । एवमिज्जा-देशेपि । जर्जारौ च । उत्तमे लुकि पूर्ववत् । आवौ । अणुहोआवि-अमि । अणुहोआविआमि । अणुहोआविइमि । अणुहोआविएमि । एवमिज्जादेशेपि । जर्जारौ च । बहुत्वे णिचि लुकि पूर्ववत् । आवौ । अणुहोआविअमो । अणुहोआविआमो । अणुहोआविइमो । अणुहो-आविएमो । जर्जारौ च । एवं मन्योरपि । एवमिज्जादेशेपि ॥

एवमजन्तानां लटि रूपम् । लुङ्लङ्लिट्सु । 'भूतार्थस्य सिहि-अहि' इति स्यादयः । शेषं पूर्ववत् । भावे लुक्पक्षे पूर्ववत् । आवौ । होआविअसि । होआविअहिअ । होआविअहि । एवमिज्जादेशेपि । कर्मण्यनुपूर्वत्वमेव विशेषः । अणुहोआविअसि । इत्यादि । भाववत् । लृलुटोः । 'भविष्यति हिरादिः' । हासौच । 'सैं' । हिस्साहिह्वा च । भावे लुकि पूर्ववत् । आवौ । होआविएहिइ । होआविइहिइ । होआविज्जेहिइ । होआविज्जहिइ । कर्मणि लुकि पूर्ववत् । आवौ । एकत्वे प्रथमभाववत् । बहुत्वे । अणुहोआविएहिन्ति । अणुहोआवि-एहिन्ते । अणुहोआविएहिरे । इत्यादि । शेषं पूर्ववदुन्नेयम् । लोटि णिचि लुगाविल् च ईअइज्जौ । दुसुमवः । 'बहौ न्तुहमो' । 'सोस्तु हि' । शेषं पूर्ववत् । भावे लुकि पूर्ववत् । आवौ । होआविअदु । होआविएदु । एवमिज्जादेशेपि । कर्मणि लुकि पूर्ववत् । आवौ । अणुहोआविअदु । अणुहोआविएदु । एवमिज्जादेशेपि । अणुहोआ-विअन्तु । अणुहोआविएन्तु । इत्यादि कल्पनीयम् । तिङि 'त्विज्जा-लिङः' इति इज्जात् पर इत् । शेषं लोड्वत् । लृङि माणन्तौ । लुकि भावकर्मणोः पूर्ववत् । आवौ । होआअविमाण । होआअविआन्त । होआविज्जमाण । होआविज्जन्त । कर्मण्यनुपूर्वत्वमेव विशेषः । एवं

सर्वेषु वचनेषूदाहार्यम् । ह्वादीनां पूर्ववण्णिचि लुगाविल् च ईअइज्जौ च । 'अदेल्लुक्यादेरतः' इति णिचो लुकि आदेरत आत्वम् । ह्वाविअइ । ह्वाविअए । ह्वावाविअइ । ह्वावाविअए । ह्वावाविज्जइ । ह्वावाविज्जए । अणुह्वावाविअइ । अणुह्वावाविअए । अणुह्वावाविइ । अणुह्वावाविज्जइ । अणुह्वावाविज्जए । इत्यादि ॥

एवमन्येषां हलन्तानां धातूनां रूपम् ॥

एधादयः केचित् प्रदर्श्यन्ते ॥ एहीअइ । एहिज्जइ । एहाविअइ । एहाविज्जइ ॥ पच्—पाईअइ । पाइज्जइ । पाआविअइ । पाआविज्जइ ॥ नद्—णंदीअइ । णंदिज्जइ । णंदाविअइ । णंदाविज्जइ । ध्वंसु—झंसीअइ । झंसिज्जइ । झंसाविअइ । झंसाविज्जइ । धंसीअइ । इत्याद्यपि । व्येञ्—वेईअइ । वेइज्जइ । वेआविअइ । वेआविज्जइ । अद्—आदीअइ । आदिज्जइ । आदाविअइ । आदाविज्जइ । चिञ्—चिणीअइ । चिणिज्जइ । चिणाविअइ । चिणाविइज्जइ । कृञ्—कारीअइ । कारिज्जइ । काराविअइ । काराविज्जइ । ग्रह्—गाहीअइ । गाहिज्जइ । गाहाविअइ । गाहाविज्जइ । चुर्—चोरीअइ । चोरिज्जइ । चोराविअइ । चोराविज्जइ । इत्यादि ॥

एवमन्येषां धातूनां अदाद्यादेशानां चानया दिशा रूपाण्युदाहर्तव्यानि । ग्रन्थविस्तरभयादस्माभिर्न प्रदर्श्यन्ते ॥

क्यजन्तक्यषन्तयोर्विशेषाः प्रदर्श्यन्ते । 'क्वचिदमादेः' इत्यतः 'क्वचित्' इत्यनुवर्तमाने

लुग्यक्योर्यस्य ॥ २ । ३ । ४२ ॥

'कर्तुः क्यङ् सलोपश्च' इति विहितस्य क्यङन्तस्य द्विवचनात् 'लोहितादिडाज्भ्यः क्यष्' इति विहितस्य क्यषन्तस्य संबन्धिनो यकारस्य क्वचिल्लुग् भवति ॥

क्यङ् । गुरूयते च्छात्रः । गुरूअइ । अत्र यलोपे गुरूइ । गुरुरिवाचरतीत्यर्थः ॥

क्यचि । धमधमायते । धमधमाअइ । यलोपे । धमधमाइ । लोहिता-
यते । लोहिआअइ । यलोपे । लोहिआइ ॥

अस्मिन् शास्त्रे यङन्तयङ्लुगन्तसन्नन्तक्यजन्तसुब्धात्वादिरूपाणां विशेषविधानाभावात् सिद्धावस्थापेक्षया वर्णानां विशेषादेशानाकलय्य बुद्धिमद्भिः प्रयोगाः संचारणीयाः ॥

श्रीमदखिलविद्यापरिवारदक्षिणामूर्तिप्रसादलब्धविद्यपूर्वोत्तरमीमांसासाहित्यशब्द-तर्कसार्वभौमचरकूरियज्ञेश्वरभट्टोपाध्यायतनयकोण्डभट्टोपाध्यायशिष्येण सर्वाम्बिका-गर्भशुक्तिमुक्तामणिना सर्वविद्वत्कविसंमतेन दक्षिणामूर्तिमहादेवकिंकरेण लक्ष्मी-धरेण विरचितायां षड्भाषाचन्द्रिकायां प्राकृतप्रक्रियाविभागः संपूर्णः ॥

एवं निबन्धनिर्मित्या या परोपकृतिस्तया ।
वृषाकपायीरमणः प्रीयतां परमेश्वरः ॥



श्रीरस्तु ।

मतिमुद्रापरश्वेण जानुभिः सक्तबाहवे ।
भुजङ्गबद्धकक्षाय दक्षिणामूर्तये नमः ॥

अथ शौरसेन्यादयो भाषाः प्रदर्श्यन्ते । राम इति स्थिते [1]प्रथमैकवचनमारभ्य [2]पञ्चम्येकवचनपर्यन्तं प्राकृतवदेव । पञ्चम्येकवचने तु राम ङसि इति स्थिते 'दस्तस्य शौरसेन्यामखावचोस्तोः' इत्यतः 'शौरसेन्याम्' इत्यधिकृत्य

अतो ङसेर्डुदोश्च ॥ ३ । २ । २० ॥

शौरसेन्यामकारात् परस्य ङसेर्डु दो इत्येतौ शितौ भवतः । रामाद् । रामादो । अत्र शित्वाद् [3]दीर्घः ॥ शेषं प्राकृतवत् । एवं घटादीनां सर्वनाम्नां च प्राकृतवत् । [4]पूर्वशब्दस्य तु ।

पूर्वस्य पुरवः ॥ ३ । २ । ९ ॥

पूर्वशब्दस्य पुरव [5]इत्यादेशः स्यात् । पुरवो । [6]पुरवे । [7]इत्यादि । पितृशब्दे तलोपे प्राप्ते

दस्तस्य शौरसेन्यामखावचोस्तोः ॥ ३ । २ । १ ॥

शौरसेन्यां भाषायामचः [8]परस्यासंयुक्तास्यानादौ वर्तमानस्य तकारस्य दकारः स्यात् । पिदा । पिदरो । इत्यादि । प्राकृतवदेव । सर्वत्रैवं भूतस्य तस्य द एव । 'अखौ' इति किम् । तरुणो । 'अचः' इति किम् । कंतो । 'अस्तोः' इति किम् । मत्तो । अज्जउत्तो ॥

संयोगे धः क्वचित् ॥ ३ । २ । २ ॥

'शौरसेन्याम्' अनुवर्तते । 'दस्तस्य' इति च । पूर्वसूत्रेणास्तोरित्यपोदितेपि कश्चिद्विशेषः । उच्चारिते शौरसेन्यां संयोगे धो वर्तमानस्य

---

१ प्रथमाविभक्तिमारभ्य T. २ तृतीयाविभक्त्यन्तं T. ३ पूर्वस्य दीर्घः T. ४ पूर्वस्य तु T. ५ इत्यादेशो भवति T. ६ T. has before it अत्र 'तावति धोर्वा' इत्यतः 'वा' इत्यनुवर्तते । ७ After this T. has शेषं प्राकृतवत् । ८ परस्यानादौ वर्तमानस्यासंयुक्तस्य.

तकारस्य केचिल्लक्ष्यानुरोधेन दकारो भवति[1] । णिच्छिन्दो महन्धो । निश्चिन्तो महान् । आर्यपर्याय इत्यादिषु 'तावति खोर्वा' इत्यतः 'वा' इत्यनुवर्तमाने

र्योय्यः ॥ ३ । २ । ८ ॥

र्य इत्यस्य स्थाने य्य इति वा स्यात् । जत्वापवादः । अय्यो । अज्जो । पय्याओ । पज्जाओ ॥

इत्यजन्ताः पुंलिङ्गाः ।

स्त्रीलिङ्गेषु कथाप्रथा इत्यादिषु थस्य हत्वे प्राप्ते

थो धः ॥ ३ । २ । ४ ॥

'वा' इत्यनुवर्तते । 'शौरसेन्याम्' इति च । शौरसेन्यां थस्य धः स्याद्वा[2] । कथा । कहा । प्रथा । पहा । इत्यादि । मातृशब्दे तस्य दः । मादा । इत्यादि । शेषं प्राकृतवत् ॥

अथाजन्तेषु नपुंसकलिङ्गेषु कुण्डप्रभृतिषु शौरसेनी अकारान्तपुंलिङ्गवदेव । अन्तःपुरे । 'संयोगेधः कचित्' इत्यनेन संयुक्तस्याधो वर्तमानस्य तस्य प्रयोगानुसारेण दः स्यादित्युक्तत्वाचस्य दत्वम् । अंदेउरं ॥

---

अथ हलन्तेषु विशेष उच्यते ।

नकारान्तेष्विन्नन्तेषु

आत् सावामन्त्रइनो नः ॥ ३ । २ । २१ ॥

आमन्त्रे सौ परे इनो नकारस्यात्वं वा स्यात् । दे करिआ । पक्षे । दे करी । दे कंचुइआ । दे कंचुई ॥

मः ॥ ३ । २ । २२ ॥

'आत्' इति व्यतिरिक्तं पूर्वसूत्रं सर्वमनुवर्तते । आमन्त्रे सौ परे नकारस्य मकारो वा स्यात् । दे राअं । दे राअ । दे सुकम्मं । दे सुकम्म ॥ तकारान्तेषु

---

[1] दकारो भवति कचिल्लक्ष्यानुसारेण । T. [2] इत्यादेशो वा भवति T. [3] धो वा स्यात् T. [4] इत्युक्तत्वात् प्रयोगानुसारेण स्योरपि तस्य दः । My., P. [5] °स्य वा त्वम् P., My.

भवताम् ॥ ३ । २ । २३ ॥

'आमन्त्रे' इति निवृत्तम् । 'मः' इत्यनुवर्तते । 'नः' इति च । भवन् भगवन् मघवन् कृतवन् इत्येवमादीनां दृश्यमानस्य नकारस्य सौ परे मकारो भवति । किं भवं हिअए णंदेइ । किं भवान् हृदये नन्दति । पज्जलिदो भअवं हुदासणो । प्रज्वलितो भगवान् हुताशनः । मह्वं पाअसासणो । मघवान् पाकशासनः । कअवं । कृतवान् । हलन्तेपु स्त्रीनपुंसकयोर्विशेषो नास्ति । युष्मदस्मच्छब्दावपि प्राकृतवदेव ॥

अथाव्ययेपु विशेषाः प्रदर्श्यन्ते । तावत् । 'दस्तस्य—' इत्यनुवर्तते ।

तावति खोर्वा ॥ ३ । २ । ३ ॥

तावच्छब्दे खोस्तस्य दो वा स्यात् । 'अखौ' इत्यस्यापवादः । दाव । ताव । कथं । 'थो धः' इति वा धत्वम् । कधं । कहं ॥

इहहचोर्हस्य ॥ ३ । २ । ५ ॥

'थो धः' इत्यतः 'धः' इत्यनुवर्तते । इहशब्दे हकारस्य 'थध्वमित्याहचौ' इति विहितहकारस्य च धो वा स्यात् । इध । इह ॥

इदानींशब्दस्य

इदानीमोल्दाणिं ॥ ३ । २ । १२ ॥

शौरसेन्यामिदानींशब्दस्य दाणिमिति लिद् भवति । दाणिं । 'तद्वत्यस्यश्च' इति सूत्रात् प्राकृतेपि ॥

तस्मात्ता ॥ ३ । २ । १३ ॥

तस्माच्छब्दस्य शौरसेन्यां ता इति भवति । ता ॥ क्त्वाप्रत्ययस्य

इअदूणौ क्त्वः ॥ ३ । २ । १० ॥

'शौरसेन्याम्' इत्यनुवर्तते । क्त्वाप्रत्ययस्य शौरसेन्यां इअ दूण

१ 'नपुंसकस्त्रीलिङ्गयोर्विशेष' P., My. २ शौरसेन्यां तस्माच्छब्दः ता इति आदर्शे T.

इत्येतौ वा भवतः । भविअ । होदूण । पढिअ । पढिदूण । रमिअ । रमिदूण । इत्यादि । पढित्ता रंता इति तु सिद्धावस्थापेक्षया भवतः ॥[1]

**कृगमोर्डदुअः ॥ ३ । २ । ११ ॥**

'क्त्वः' इत्यनुवर्तते । कृ गम् आभ्यां परस्य क्त्वाप्रत्ययस्य डित् अदुअ इत्यादेशो भवति । कदुअ । गदुअ । पक्षे । करिअ । करिदूण । गमिअ । गमिदूण ॥

**णं नन्वर्थे ॥ ३ । २ । १४ ॥**

नन्वर्थे णं इति भवति । णं ॥

**अम्हहे हर्षे ॥ ३ । २ । १५ ॥**

शौरसेन्यां हर्षे[2] अम्हहे इति निपातः प्रयोक्तव्यः । अम्हहे धणं लद्धं ॥

**हीही वैदूषके ॥ ३ । २ । १६ ॥**

'हर्षे' इत्यनुवर्तते । वैदूषके हर्षे हीही इति प्रयोज्यम् । हीही संपण्णा मणोरहा पिअवअंसस्स । संपन्ना मनोरथा प्रियवयस्यस्य ॥

**हीमाणहे निर्वेदविस्मये ॥ ३ । २ । १७ ॥**

निर्वेदे विस्मये च हीमाणहे इति प्रयोज्यम्[3] । निर्वेदे । हीमाणहे परिस्संता[4] अम्हे एइणा णिअविहिणो दुव्विलसिदेण । परिश्रान्ता वयमेतेन निजविधेर्दुर्विलसितेन । विस्मये । हीमाणहे जीवन्तवच्छा मे जणणी । जीवद्वत्सा मे जननी ॥

**एवार्थे एव्व ॥ ३ । २ । १८ ॥**

एवार्थे एव्वेति निपात्यते । मह एव्व । ममैव ॥

**हंजे चेट्याह्वाने ॥ ३ । २ । १९ ॥**

चेट्याह्वाने हंजे इति निपात्यः । हंजे ॥ प्रसङ्गाद्युक्तमिदमित्यादिषु किंचिदुच्यते ।

---

१ सिद्धावस्थायां T. २ हर्षे अम्हहे इति वा भवति P., My. ३ निपातः प्रयोज्यः T. ४ My. and P. have only परिस्संता परिश्रान्ताः

**अन्त्यादिदेति मो णः ॥ ३ । २ । ७ ॥**

शौरसेन्यामन्त्यान्मः मकारात् परो णकारागमो भवति इदेति इकारे एकारे च परे । जुत्तं णिमं । युक्तमिदम् । सरिसं णिमं । सदृशमिदम् । एकारे । किं[1] णेदं । किमिदम् । एव्वं णेदं । एवमेतत् ।

इति शौरसेन्यां सुबन्तविभागः ।

---

**अथ तिङन्ते विशेषाः प्रदर्श्यन्ते[2] ।**

भू सत्तायाम् । 'इहहचोर्हस्य' इत्यतः 'हस्य' इत्यनुवर्तते 'शौरसेन्याम्' इति च ॥

**भुवो भः ॥ ३ । २ । ६ ॥**

भवतेर्धातोरादेशस्य सहकारस्य भकारादेशो वा भवति । भो इति स्थिते 'शेषे प्राकृतवत्' इत्यतिदेशात् 'लटस्तिपाविजेच्' इति इजेचोर्विधाने

**इजेचोर्दट् ॥ ३ । २ । २५ ॥**

लटस्तिपादेशयोरेजेचोर्दट् आगमो भवति । अनुक्तमन्यन्यायेन टित्वात् 'आद्यन्तौ टकितौ' इत्यादावेव स्यात् । भोदि । भुवदि । भुवदे । अन्यत् प्राकृतवत् । लटो मध्यमपुरुषबहुवचने 'थध्वमित्थाहचौ' इति हचि सति 'इहहचोर्हस्य' इति हस्य धकारः । बोध । पक्षे । होध । होह । शेषं प्राकृतवत् । भोदि । भोन्ति । भोन्ते । भोइरे । भोसि । भोइत्था । भोध । भोह । भोमि । भोम । भोमु । भोमो ॥ लृलुटोः

**भविष्यति स्सि ॥ ३ । २ । २४ ॥**

भविष्यदर्थे[3] विहितस्य हेः स्सिं[4] भवति । हिस्सादीनामपवादः । भोस्सिदि । भोस्सिन्ति । भोस्सिन्ते । भोस्सिइरे । भोस्सिसि ।

---

[1] My. and P omit कि णेदं । किमिदम् [2] तिङन्तविशेषाः My., P. [3] °वर्तमाने P, My [4] स्सि इत्यादेशः T

भोस्सिइत्था । भोस्सिह । भोस्सिधा । भोस्सिमि । भोस्सिम । भोस्सिमु । भोस्सिमो । इत्यादि । अन्येषु लकारेषु प्राकृतवद्रूपं वेदितव्यम् । हुवादीनामप्यनया प्रक्रियया रूपाणि प्रकल्पनीयानि ॥

**शेषं प्राकृतवत् ॥ ३ । २ । २६ ॥**

शौरसेन्यां यदिह कार्यमुक्तं 'दस्तस' इत्यारभ्य एतत्पर्यन्तं ततोन्यत् प्राकृतवदेव भवति ॥

इति षड्भाषाचन्द्रिकायां शौरसेनीभाषाप्रक्रिया[1] ।



[1] T. has समाप्ता after it.

श्रीरस्तु।

शिष्टार्यशुकयोग्यादिमुनिवृन्दावृताङ्घ्रये ।
कृतस्त्रीयारिशिक्षाय दक्षिणामूर्तये नमः ॥

अथ मागधीभाषा निरूप्यते ।

राम सु इति स्थिते 'मागध्यां शौरसेनीवत्' इत्यतः 'मागध्याम्' इत्यधिकृत्य

**स्रोः श्लौ ॥ ३ । २ । ३६ ॥**

स्रोः सकाररेफयोः मागध्यां शकारलकारौ यथाक्रमं भवतः ।[१] इति रेफस्य लकारे सति

**सौ पुंस्येलतः ॥ ३ । २ । ३० ॥**

मागध्यां पुंलिङ्गे वर्तमानस्य अकारस्य एकारो लित् सौपरे । 'शेषं प्राकृतवत्' इत्यतिदेशात् सोर्लुकि लामे । इत उत्तरं षष्ठ्येकवचनपर्यन्तं प्राकृतवत् । लाम ङस् इति स्थिते

**त्वाङ्गाहो ङेसः ॥ ३ । २ । २८ ॥**

'मागध्याम्' इत्यनुवर्तते । मागध्यामवर्णात् परस्य ङसः डित् आह इत्यादेशस्तु भवति । लामाह । पक्षे । 'स्रोःश्लौ' इति सकारस्य शकारः । लामश्श ॥

**आमो डाहङ् ॥ ३ । २ । २९ ॥**

पूर्वसूत्रात् 'आत्' इत्यनुवर्तते । 'तु' इति च । अवर्णात् परस्य मो मागध्यामाहादेशो डिद्वा स्यात् । डित्त्वात् पूर्वस्य सानुनासिक उच्चारः । लामाहं । पक्षे । लामाणं । लामाण । 'तद्व्यत्ययश्च' इति सूत्रात् प्राकृते-प्याहङ् । 'मागध्यां शौरसेनीवत्' इत्यतिदेशात् 'अतो ङसेर्दुदोशु' इति दुदो च । लामादु । लामादो । अन्यत् सर्वं शौरसेनीवद् द्रष्टव्यम् ॥ अथाकारान्तेषु केषुचिद्विशेषाः प्रदर्श्यन्ते ।

---

१ T. drops सति. २ पुंलिङ्गे वर्तमानस्य मागध्यामेकारो My., P. ३ भवति T.

**च्छोनादौ श्चः ॥ ३ । २ । ३२ ॥**

अनादौ वर्तमानस्य लौक्षणिकस्यालाक्षणिकस्य च च्छस्य शकारसहित-चकारो भवति । पिच्छिलः । पिश्चिले । लाक्षणिकस्य । आपन्नवत्सलः । आवण्णवश्चले । आवण्णवच्छळो । वृक्षः । वच्छो । वृश्चे । इत्याद्यूह्यम् । 'अनादौ' इति किम् । छागः । छाए ।

**क्षः ᳲकः ॥ ३ । २ । ३३ ॥**

'अनादौ' इत्यनुवर्तते । मागध्यामनादौ वर्तमानस्य क्षस्य जिह्वामूलीयाक्रान्तककारो भवति । यक्षः । यᳲके । राक्षसः । लाᳲकशे । वृक्षः । लुᳲके । 'अनादौ' इति किम् । क्षयः । खए ॥

**सः सषोः संयोगेऽग्रीष्मे ॥ ३ । २ । ३५ ॥**

'अनादौ' इत्यनुवर्तते । अनादिमयोः संयोगे वर्तमानयोः सकार-पकारयोः मागध्यां सकारो भवति अग्रीष्मे । ग्रीष्मे तु न भवति । ऊर्ध्वलोपाद्यपवादः । प्रशस्तः । पशस्ते । हस्तः । हस्ते । विस्मयः । विस्सए । शुष्कः । शुस्के । शष्पकवलः । शस्पकवळे । इत्याद्यूह्यम् । 'अग्रीष्मे' इति किम् । ग्रीष्मः । गिंह्नो ॥ धन्य । सामान्य । गण्य । प्राज्ञ । धनञ्जय । इत्यादिषु

**न्यण्यज्ञञ्जां ञ्ञः ॥ ३ । २ । ३७ ॥**

मागध्यां न्यण्यज्ञञ्ज इत्येतेषां ञकारो रिद् भवति । रित्वाद् द्वित्वम् । धञ्ञे । सामञ्ञे । गञ्ञे । पञ्ञे । धणञ्ञए । इत्याद्यूह्यम् ॥ समाज । जय । हृद्य । इत्यादिषु

**जद्यायां यः ॥ ३ । २ । ३९ ॥**

जकारयकारद्यकाराणां यकारो भवति । समाजः । समाये । जयः ।

---

१ मागध्यामनादौ T. २ छकारस्य for लाक्ष°—च्छस्य T. ३ शकाराक्रान्तश्च° T. ४ अनादौ वर्तमानस्य क्षस्य मागध्यां P., My. ५ मागध्यां संयोगे° T. which drops मागध्यां before सकारो. ६ T. drops तु. ७ My. and P. drop मागध्यां.

यये । ह्यः । हिय्ये । विद्याधरः । विय्याहरे । दुर्जनः । दुय्यणे । जनपदः । यणवए । अनवद्यः । अणवय्ये । इत्यादि । यस्य यकारविधानं 'आदेर्जः' इत्यस्य बाधनार्थम् ॥ प्रकोष्ठ । सुष्ठु । कृतभट्ट । इत्यादिषु

**ष्टट्टौ स्थम् ॥ ३ । २ । ४० ॥**

ष्टकारो द्विरुक्तटकारश्च सकाराक्रान्तथकारः स्यात् । पवस्थे । पओस्थे । प्रकोष्ठः । सुष्ठुकृतः । सुस्थुकए । भट्टः । भस्थे । भस्थालए । इत्यादि ॥

**स्थर्थौ स्तं ॥ ३ । २ । ४१ ॥**

स्थर्थ इत्येतौ सकाराक्रान्ततकारमापद्येते । उपस्थितः । उपस्तिदे । अत्र 'शौरसेनीवत्' इत्यतिदेशात्तस्य दः । अर्थः । अस्ते । पार्थवाहः । शस्तवाहे । इत्यादि॥ इकारान्तमारभ्य हलन्तान्तं लिङ्गत्रयेपि शौरसेनीवत् प्राकृतवच्च । असच्छब्दे विशेषः ॥

**हगेहंवयमोः ॥ ३ । २ । ३१ ॥**

अहं वयं एतयोः स्थाने मागध्यां हगे इति भवति । हगे शुहमणुहोमि । अहं सुखमनुभवामि । हगे शंवत्ता । वयं संप्राप्ताः । अव्ययादिषु शौरसेनीवत् प्राकृतवच्च ॥

इति मागध्यां सुबन्तविभागः ॥

---

## अथ तिङन्तप्रक्रिया ।

भू इतिस्थिते । 'शौरसेनीवत्' इत्यतिदेशात् भुवो[1] हकारस्य भकारः । भोदि[2] । इत्यादि । शौरसेनीवत् । ऌऌटोः । 'भविष्यति स्सि' इति स्सौसति 'स्सोः श्शौ' इति सकारस्य शकारः[3] । भोश्शिदि[4] । शेषं पूर्ववत् । विशेषस्तु 'क्षश्कः' इत्यनुवर्तमाने

---

१ 'भुवो हः' इति वा भस्य हत्वम् T. २ होदि T. ३ शः T. ४ होश्शिदि T.

**स्कः प्रेक्षाचक्षतेः ॥ ३ । २ । ३४ ॥**

मागध्यां प्रेक्षतेराचक्षतेश्च क्षकारस्य सकाराक्रान्तककारो भवति । 'क्ष×कः' इत्यस्यापवादः[3] । पेस्कदि । पेस्कदे । आअस्कदि । आअस्कदे । इत्यादि । शेषं पूर्ववत् ॥ 'न्यण्यज्ञञ्जां ञ्ञः' इत्यतः 'ञ्ञः' इत्यधिकृत्य

**जो व्रजेः ॥ ३ । २ । ३८ ॥**

व्रज गतावित्यस्य जकारस्य ञकारो रिद् भवति । 'जयद्यां यः' इत्यस्यापवादः । वञ्चदि । वञ्चदे ॥

**चिट्ठस्तिष्ठस्य ॥ ३ । २ । ४२ ॥**

'पाघ्राध्मा—' इत्यादिना यस्तिष्ठादेशो विहितस्तस्य चिट्ठ इति भवति । चिट्ठदि । चिट्ठदे ॥

**मागध्यां शौरसेनीवत् ॥ ३ । २ । २७ ॥**

'दस्तस्य' इत्यारभ्य 'शेषं प्राकृतवत्' इत्येतत्पर्यन्तं शौरसेन्यां यदुक्तं तत्सर्वं मागध्यामपि सचारणीयम् ॥

. **शेषं प्राकृतवत् ॥ ३ । २ । २६ ॥**

मागध्यां सूत्रैर्यद्विहितं यच्च मागध्यां शौरसेनीवदित्यतिदेशाल्लब्धं शौरसेनीकार्यं तदुभयातिरिक्तं कार्यं प्राकृतवत् संचारणीयम् ॥

इति षड्भाषाचन्द्रिकायां मागधीभाषा समाप्ता ॥



---

१ My. and P. drop it. २ क्षस्य P., My. ३ उक्तस्यापवादः T. ४ इत्यादेशो T. ५ मागधीभाषाविभाग P., My.

श्रीरस्तु।

वासवादिसुपर्वालिकोटीरद्योतिताङ्घ्रये।
सोमसूर्यानलाक्षाय दक्षिणामूर्तये नमः॥

## अथ पैशाचीभाषा निरूप्यते।

राम सु इति स्थिते प्रथमैकवचनमारभ्य तृतीयैकवचनपर्यन्तं प्राकृतवत्। तृतीयैकवचने राम टा इति स्थिते 'टो डेणल्' इति डेणल् सति रामेण इति प्राप्ते

**नो णनोः पैशाच्याम्॥ ३। २। ४३॥**

पैशाच्यां भाषायां णकारनकारयोः नकारादेशो भवति। रामेन। नकारस्यापि पुनर्नकारविधानं णादेशबाधनार्थम्। एवं सर्वत्र णस्य नो विधेयः॥ ङसौ

**अतो ङसेस्तुतोश्॥ ३। २। ५५॥**

अकारात् परस्य ङसेस्तु तो इत्यादेशौ शितौ भवतः। रामातु। रामातो। 'अतोङसेर्दुदोश्' इत्यातिदेशिकस्यापवादार्थमयं योगः। अन्यत् प्राकृतवत्॥ अथाकारान्तेषु विशेषाः प्रदर्श्यन्ते॥

**न्यण्यज्ञां ञर्॥ ३। २। ४४॥**

'पैशाच्याम्' इत्यनुवर्तते। न्य ण्य ज्ञ इत्येतेषां पैशाच्यां ञकारो रिद् भवति। रित्वाद् द्वित्वम्। धन्यः। धञ्ञो। गण्यः। गञ्ञो। प्राज्ञः। पञ्ञो। एवं सामान्यकार्पण्यसर्वज्ञादिषु संचारणीयम्॥ प्रतिभास। प्रतिपन्न। वेतस। दामोदर। इत्यादिषु

**तल्तदोः॥ ३। २। ४६॥**

तकारदकारयोः पैशाच्यां तकारो लिद् भवति। पतिहासो। पतिपन्नो। वेतसो। तत्र तकारस्य डकाराद्यादेशान्तरबाधनार्थं तकार-

---

१ T. has शिष्टार्थं°. २ T. drops भाषा. ३ नकारो P., My.
४ सामान्यकस्य कार्पण्यकासर्वज्ञादिषु P., My.

विधानम् । तामोतरो । दामोदरः । मतो । मंदः । इत्यादि कल्पनीयम् ॥ कॅमल । कोमल । मुकुल । इत्यादिषु

**लो ळः ॥ ३ । २ । ४८ ॥**

पैशाच्यां लकारस्य ळकारः स्यात् । कमळो । कोमळो । मुकुळो ।

**दृस्तियोदृशगे ॥ ३ । २ । ४९ ॥**

यादृशादिषु दृ इत्यस्य स्थाने ति इत्ययमादेशो भवति । योतिसो । यादृशः । तातिसो । तादृशः । ईत्यादि । यादृश । तादृश । भवादृश । अन्यादृश । अत्र न्यस्य ञ्ञः । अञ्ञातिसो । एतिसो । ईदृशः । केतिसो । कीदृशः । अत्र उभयत्र 'एत्पीडनीडकीदृश—' इत्यादिना ईत एत्वम् । अम्हातिसो । अस्मादृशः । अत्र 'श्मष्म—' इत्यादिना स्मस्य म्हादेशः ॥ आर्य । वर्य । स्नात । कष्ट । दुष्ट । इत्यादिषु

**र्यस्नष्टां रिअसिनसिटाः क्वचित् ॥ ३ । २ । ५० ॥**

पैशाच्यां र्य स्न ष्ट इत्येतेषां यथासंख्यं रिअ सिन सिट इत्यादेशा भवन्ति । ॲरिओ । वरिओ । सिनोतो । कॅसिटो । 'कॅचित्' इत्युक्त्वादार्यं इत्यत्र अय्यो भ्रष्ट इत्यत्र भट्ठो इत्यप्यस्ति ॥

**टोस्तु तु ॥ ३ । २ । ५१ ॥**

पैशाच्यां टु इत्यस्य तु इति वा स्यात् । वटुकः । वतुको । कुटुंबं ॥ कुतुंबं । पटुदेहः । पतुदेहो ॥

**योल्पो हृदये ॥ ३ । २ । ५२ ॥**

हृदयशब्दे यस्य पो लिर्स्यात् । हृदयसंतोषः । हितपसंतोसो ॥

**शषोः सः ॥ ३ । २ । ४७ ॥**

पैशाच्यां सकारषकारयोः सकारो भवति । शेषः । सेसो । वेषः ।

---

१ कालकोलाहलकुडिलादिषु T. २ यादृशः । यातिसो । तादृशः । तातिसो T. ३ T. has after it:—भवादृशः । भवातिसो । अस्मादृशः । अम्हातिसो । अत्र 'श्मष्म'—इत्यादिना स्मस्य म्हादेशः । अन्यादृशः । ४ T. has अर्यः before it. ५ T. has स्नातः before it. ६ कष्टः before it T. ७ T. adds दुष्टः । दुसिटो । ८ भवति T.

वेसो। शठः। सढो। पोषः। पोसो। इत्यादि। इदं सूत्रं 'न प्रायोलुक्कादिच्छलृपट्छम्यन्तसूत्रोक्तम्' इत्यस्य सूत्रस्य सत्वबाधकस्य बाधनार्थम्। ननु 'न प्रायोलुक्कादि---'सूत्रबाधनार्थमिदं सूत्रमिति यदुक्तं तदसङ्गतम्। विचारासहत्वात्। तथाहि। 'प्रायो लुक्कग–' इति सूत्रमारभ्य 'छलृपट्छमीसुधाशाबससवर्णे' इति सूत्रान्तानि यानि सूत्राणि तेषां प्राकृतभाषाविधायकानां पैशाच्यां प्रसक्तौ सत्यां 'न प्रायोलुक्कादिछलृपट्छम्यन्तसूत्रोक्तम्' इति निषेधसूत्रेण भवितव्यम्। न च तेषां प्राकृतविधायकानां पैशाच्यां प्रसक्तिरस्ति। न च शेषं प्राकृतवदित्यतिदेशात् प्रसक्तिर्भविष्यति इति वाच्यम्। तत्सूत्रस्य पैशाच्यामभावात्। परंतु 'शेषं शौरसेनीवत्' इत्येवास्ति। न च 'शेषं शौरसेनीवत्' इत्यतिदेशादेव प्राकृतानामप्यत्र प्रसक्तिर्भविष्यति। शौरसेन्यां शेषं प्राकृतवत्' इत्यतिदेशस्य दृष्टत्वादतिदिष्टातिदेशमर्यादया प्राकृतानामप्यत्र संभवादिति वाच्यम्। अतिदिष्टातिदेशस्य अदृष्टचरत्वात्। तस्माद्बाधकबाधनार्थमित्यसंगतमुक्तमिति चेत्। अत्रोच्यते[1]। यदुक्तं प्राकृतानामत्र प्रसक्तिर्नास्ति इति तदसत्। अतिदिष्टातिदेशमर्यादया प्रसक्तेः। न चातिदिष्टातिदेशस्यादृष्टचरत्वम्। अतिदेशतः प्राप्तानां श्येनयागधर्माणामघनामककर्मण्यतिदेशस्य दृष्टत्वात्। अग्नीषोमीयधर्माणां सान्नाय्यातिदेशतः प्राप्तानां सवनीयादावतिदेशस्य दृष्टत्वाच्च। तस्माद्बाधकबाधनार्थमिति सम्यगुक्तम्॥ एक। भाग। कुच। गज। इत्यादौ 'प्रायोलुक्–' इति कादिलोपे प्राप्ते

**न प्रायोलुक्कादिच्छलृपट्छम्यन्तसूत्रोक्तम्॥ ३। २। ६३॥**

'प्रायो लुक्कग–' इति सूत्रमारभ्य 'छलृपट्छम्यन्त' सूत्रपर्यन्तं ये विधयः प्राकृते ते पैशाच्यां न भवन्ति। इति कादीनां लोपाद्यपवादः[2]। एको। भागो। कुचो। गजो। इत्यादि। एवं सर्वविध्यभावोनुसंधेयः।

---

१ तत्रोच्यते T. २ लोपाद्यभावः T.

सर्वादयः प्राकृतवत् । पूर्वस्य पुरवः । पुरवो । पुरवे । इत्यादि । इतः परमजन्तेपु लिङ्गत्रयेपि प्राकृतवच्छौरसेनीवच ॥ हलन्तेपु

**राज्ञो ञो वा चिञ् ॥ ३ । २ । ४५ ॥**

संस्कृते राजन्शब्दस्य यत्र यत्र ज्ञकारस्तस्य तस्य ज्ञकारस्य पैशाच्यां[1] चिञ् ईत्यादेशो वा स्यात् । राचिञो लपितं । रोज्ञो लपितम्[2] । रौचिञो[3] चचनं इत्यादि । 'ज्ञः' इति किम् । राजा ॥

**टा नेन तदिदमोः ॥ ३ । २ । ५३ ।**

पैशाच्यां तदिदमोः स्थाने टावचनेन सह नेन इति भवति । नेन तेन अनेन वा ॥

**नाये स्त्रियाम् ॥ ३ । २ । ५४ ॥**

तदिदमोः स्थाने टावचनेन सह पैशाच्यां[4] स्त्रीलिङ्गे नाये इति स्यात् । नाये । तया अनया वा । शेपं प्राकृतवच्छौरसेनीवच्च ॥ अव्ययेपु टाप्रत्यये विशेपः ।

**क्त्वा तूनं ॥ ३ । २ । ६० ॥**

पैशाच्यां क्त्वाप्रत्ययस्तूनमिति रूपमापद्यते[5] । रंतून । गंतून । हसितून । इत्यादि ॥

**ट्वःद्धूनत्थूनौ ॥ ३ । २ । ६१ ॥**

पैशाच्यां कृते पत्वे ट्वा इति सिद्धस्य क्त्वाप्रत्ययस्य स्थाने द्धून त्थून इत्यादेशौ भवतः । कद्धून । कत्थून । कृट्वा । तद्धून । [6]तत्थून । दृट्वा । इत्यादि । अन्यत् सर्वं प्राकृतवच्छौरसेनीवच्च ॥

इति सुबन्तविभागः ।

---

अथ तिङन्तविशेपाः ।

हो इति स्थिते 'शौरसेनीवत्' इत्यतिदेशात् 'भुवो भः' इति हस्व भः । भो इति स्थिते इजेचोर्विधाने

---

१ इत्यादेशः स्याद्वा My., P. २ T. adds राचिई धनं । राज्ञो धनम्. ३ T. drops राचिञो वचनं. ४ P. and My. drop पैशाच्या. ५ रूपं प्राप्नोति My., P. ६ कृट्वा दृट्वा इत्यादि सिद्धस्य P., My.

**तडिजेचः ॥ ३ । २ । ५६ ॥**

पैशाच्यां तिप्तादेशयोरिजेचोर्स्तकारो भवति । दटोपवादः । भोति । भवति । भवते । इत्यादि । शेषं प्राकृतवत् ॥ ऌलुटोः

**एय्य एव भविष्यति ॥ ३ । २ । ५७ ॥**

भविष्यदर्थे विहितयोरिजेचोः स्थाने एय्यादेश एव भवति न तु शौरसेन्यामित्यातिदेशिकः सिः । भोएय्य । भवेय्य । भोस्सिंति । भोस्सिमि । इत्यादि । अन्येषु लकारेषु प्राकृतवच्छौरसेनीवत् सर्वे विधयो द्रष्टव्याः ॥ यकि

**इय्यो यकः ॥ ३ । २ । ५८ ॥**

यक्प्रत्ययस्य इय्य इत्ययमादेशो भवति पैशाच्याम् । ईअइज्जयोरातिदेशिकयोरपवादः । भोइय्यति । भोइय्यते । भविय्यति । भविय्यते । इत्यादि ॥

**कृञो डीरः ॥ ३ । २ । ५९ ॥**

'यकः' इत्यनुवर्तते । कृञो यकः स्थाने पैशाच्यामीर इत्यादेशो डित् स्यात् । कीरति । कीरते । इत्यादि ॥ अन्येषु लकारेषु णिचि भावकर्मणोश्च सर्वे विधयः प्राकृतवच्छौरसेनीवद्द्रष्टव्याः ॥

इति षड्भाषाचन्द्रिकायां पैशाचीभाषा समाप्ता ॥



१ °स्सकारागमो P., My. २ T. has होएय्य । होवेय्य । होस्सिंति । होस्सिमि । ३ पैशाचीभाषाप्रक्रिया T.

य[1]मिवर्यावलिसान्तद्योतमानात्ममूर्तये ।
वेदान्तपक्षपाताय दक्षिणामूर्तये नमः ॥

अथ चूलिकापैशाची ।

राम सु इति स्थिते

**रो लस्तु चूलिकापैशाच्याम् ॥ ३ । २ । ६४ ॥**

चूलिकापैशाच्यां रेफस्य [2]लो वा स्यात् । रामो । लामो । इत्यादि । शेषं पैशाचीवत् ॥

**गजडद्बघझढधभां कचटतपखछठथफाल् ॥ ३ । २ । ६५ ॥**

चूलिकापैशाच्यां गादीनां यथासंख्यं कादयो भवन्ति । लिखानित्यम् । मार्गणः । मक्कनो । नगः । नको । मेघः । मेखो । व्याघ्रः । वखो । राजा । लाचा । जीमूतः । चीमूतो । निर्झरः । निच्छलो । झरः । छलो । तडाकं । तटाकं । डमरुकः । टमलुको । गाढं । काढं । ढक्का । ठक्का । मदनः । मतनो । दामोदरः । तामोतलो । मधुरः । मथुलो । धारा । थाला । बाडवः । पाटपो । बा[3]लः । पालो । रभसः । लफसो । रंभा । लंफा । भवः । फवो । इत्यादि । कचिल्लाक्षणिकस्यापि । प्रतिमा । पडिमा । पटिमा । दंष्ट्रा । दाढा । ताढा ॥

**अन्येषामादियुजि न ॥ ३ । २ । ६६ ॥**

चूलिकापैशाच्यामन्येषामाचार्याणां मते गजडदबघझढधभामादौ वर्तमानानां युजिधातौ चकारादयो न भवन्ति । गती । घनो । जनो । झल्लरी । इत्याद्यूह्यम् । युजि । नियोजितं ॥

**शेषं प्राग्वत् ॥ ३ । २ । ६७ ॥**

चूलिकापैशाच्यां 'रो लस्तु–' इत्याद्यारभ्य यदुक्तं ततोन्यत् प्राग्वत् पैशाचीवत् । तेन 'नो णनोः पैशाच्याम्' इत्यारभ्य 'न प्रायोलुक्–'

---

१ T. has वासवादि &c. in place of this couplet. २ लकारो T. ३ बालकः पालको P., My.

आदि सूत्रान्तं यत् कार्यजातं पैशाच्यां तदत्रापि भवति । सर्वत्रोपदिष्टेनातिदिष्टबाधः । तेन । भोति । भवति । भवते । भोइय्य । इत्यादौ भस्य फ एव । फोति । फवति । फवते । इत्यादि ग्रन्थविस्तरभयान्न लिख्यते ॥

इति षड्भाषाचन्द्रिकायां चूलिकापैशाचीभाषा समाप्ता ॥



१ P. and My. have प्रक्रिया for समाप्ता.

[1]मिवर्यावलिसान्तद्योतमानात्ममूर्तये ।
वेदान्तपक्षपाताय दक्षिणामूर्तये नमः ॥

अथ चूलिकापैशाची ।

राम सु इति स्थिते

**रो लस्तु चूलिकापैशाच्याम् ॥ ३ । २ । ६४ ॥**

चूलिकापैशाच्यां रेफस्य लो[2] वा स्यात् । रामो । लामो । इत्यादि । शेषं पैशाचीवत् ॥

**गजडदबघझढधभां कचटतपखछठथफाः ॥ ३ । २ । ६५ ॥**

चूलिकापैशाच्यां गादीनां यथासंख्यं कादयो भवन्ति । लिखान्नित्यम् । मार्गणः । मक्कनो । नगः । नको । मेघः । मेखो । व्याघ्रः । वखो । राजा । लाचा । जीमूतः । चीमूतो । निर्झरः । निच्छलो । झरः । छलो । तडाकं । तटाकं । डमरुकः । टमलुको । गाढं । काढं । ढक्का । ठक्का । मदनः । मतनो । दामोदरः । तामोतलो । मधुरः । मथुलो । धारा । थाला । बाडवः । पाटपो । बालः[3] । पालो । रभसः । लफसो । रंभा । लंफा । भवः । फवो । इत्यादि । क्वचिल्लाक्षणिकस्यापि । प्रतिमा । पडिमा । पटिमा । दंष्ट्रा । दाढा । ताढा ॥

**अन्येषामादियुजि न ॥ ३ । २ । ६६ ॥**

चूलिकापैशाच्यामन्येषामाचार्याणां मते गजडदबघझढधभामादौ वर्तमानानां युजिधातौ चकारादयो न भवन्ति । गती । घनो । जनो । झल्लरी । इत्याद्यूह्यम् । युजि । नियोजितं ॥

**शेषं प्राग्वत् ॥ ३ । २ । ६७ ॥**

चूलिकापैशाच्या 'रो लस्तु–' इत्याद्यारभ्य यदुक्तं ततोन्यत् प्राग्वत् पैशाचीवत् । तेन 'नो णनोः पैशाच्याम्' इत्यारभ्य 'न प्रायोलुक्–'

---

१ T. has वासवादि &c. in place of this couplet. २ लकारो T. ३ बालकः पालको P., My.

आदि सूत्रान्तं यत् कार्यजातं पैशाच्यां तदत्रापि भवति । सर्वत्रोपदिष्टे-
नातिदिष्टबाधः । तेन । भोति । भवति । भवते । भोइय्य । इत्यादौ
भस्य फ एव । फोति । फवति । फवते । इत्यादि ग्रन्थविस्तरभयान्न
लिख्यते ॥

इति षड्भाषाचन्द्रिकायां चूलिकापैशाचीभाषा[1] समाप्ता ॥



1 P. and My. have प्रक्रिया for समाप्ता.

अशेषविद्यासंदोहवेष्टिताय परात्मने ।
सर्वदेवपरीताय दक्षिणामूर्तये नमः ॥

अथापभ्रंशभाषा निरूप्यते ।

राम सु इति स्थिते 'मायोपभ्रंशे चोच्' इत्यतः 'अपभ्रंशे' इत्यधिकृत्य

**स्यमत उत् ॥ ३ । ४ । २ ॥**

अपभ्रंशे सावमि च परे अत उत् स्यात् ॥ 'ङमो लुक्' इ 'लुक्' इत्यनुवर्तमाने

**सुससोः ॥ ३ । ४ । १७ ॥**

सुस् प्रथमा अस् द्वितीया । तयोरपभ्रंशे लुंग्भवति । इति सोर्लोपः । रामु । स्यमोरदन्तत्वमपि केचित् । राम ॥ 'स्यमत उत्' इत्यतः 'अत्' इत्यनुवर्तमाने

**ओत् सौ तु पुंसि ॥ ३ । ४ । ३ ॥**

पुंलिङ्गे वर्तमानस्यातः सौ परे वाँ ओत्वं भवत्यपभ्रंशे । रामो अत्रापि पूर्ववत् सोर्लुक् । अत्रैव विशेषः ॥

**तु मो ङ्वम् ॥ ३ । ३ । ३ ॥**

'अचोर्स्तवोखौ कखतथपफा गघदधबभान्' इत्यतः 'चोर्स्तवोखौ' इत्यनुवर्तते । अपभ्रंशेच. परोनादौ वर्तमानोसंयुक्तो मकारो वंत्वमापद्यते वा । इति विकल्पेन वत्वे ङित्वात् सानुनासिक उच्चारे राउँ रावँ इत्याद्यपि सचारणीयम् ॥ ङसि राम ङस् इति स्थिते

---

१ T. has—यमे मानसकासारहंसस्वच्छस्वमूर्तये । वेदान्तपक्षपाताय दक्षिणामूर्तये नमः ॥ in place of अशेष°. २ इत्यधिकृत्य T. ३ इत्यनुवर्तमाने T. ४ T. has अनित्यं लुग्भवति. ५ इत्यनुवर्तमाने T. ६ ओत्वं वा भवत्य° T. ७ °स्यावसौ My., P. ८ इत्यनुवर्तते [illegible] °स्यावसौ My., [illegible]

**दिहौ सुपि ॥ ३ । ४ । १ ॥**

'अपभ्रंशे' इत्यनुवर्तते । अपभ्रंशे सुपि परतः नाम्नोन्त्यस्य स्वरस्य दीर्घह्रस्वौ मिथः प्रायो भवतः । इति दीर्घे रामा ङसि इति स्थिते 'सुससोः' इति ङसो लुक्[1] । रामा । दीर्घाभावे राम । संबुद्धौ । दे रामु । दे रामो । संबुद्धावत्वमिति केचित् । तेषां मते दे राम दे रामा इत्येव ॥ ङसि

**हो ङस आमन्त्रणे ॥ ३ । ४ । १८ ॥**

आमन्त्रणे[2] वर्तमानान्नाम्नः[3] परस्य ङसो हो इति भवति[4] । दे रामहो । दे रामाहो । अत्र 'दिहौ सुपि' इति दीर्घः । अमि 'स्वम्यत उत्' इत्युत्वम् । रामु । अम्यदोताविति केचित् । राम । रामो । अत्र 'सुससोः' इत्यमो लोपः । शसि 'सुससोः' इति शसो लुक् । राम । रामा । शस इदेतौ डिताविति केचित् । रामि । रामे ॥ टा राम टा इति स्थिते 'स्वम्यत उत्' इत्यतः[5] 'अतः' इत्यनुवर्तमाने

**टो णानुस्वारौ ॥ ३ । ४ । ११ ॥**

अतः परस्य टावचनस्य णत्वमनुस्वारश्च भवति । 'ए भिसि' इत्यतः[6] 'ए' इत्यनुवर्तमाने 'स्वम्यत उत्' इत्यतः[7] 'अतः' इति च ।

**टि ॥ ३ । ५ । ५ ॥**

अतः टावचने परे एकारो भवति । पृथग्योगान्नित्यम् । रामेण । रामे । टो डिदेत्वमिति केचित् । रामे[8] ॥ भिसि

**हिं भिस्सुपोः ॥ ३ । ४ । १९ ॥**

भिस्सुपोः हिमित्यादेशो भवति ॥ 'स्वम्यत उत्' इत्यतः 'अतः' इत्यधिकृत्य[9] 'ओत् सौ तु पुंसि' इत्यतः[10] 'तु' इतिच

---

१ लोपे T. २ अपभ्रंशे आमन्त्रितेर्थे T. ३ P. and My. drop वर्तमानात्. ४ T. has लोपापवादः after it. ५ इत्यनुवर्तमाने T. ६ इत्यनुवर्तमाने T. ७ इति च T. ८ °देशः स्यात् T. ९ इत्यधिकृत्य T. १० इति च T.

ए भिसि ॥ ३ । ४ । ४ ॥

भिसि परे अत एत्वं वा स्यात् रामेहिं । रामाहिं । रामहिं । अत्र 'दिहौ सुपि' इति दीर्घः । भिसो ङिदेत्वमिति केचित् । रामे । राम ॥ ङसि इति स्थिते

ङसेर्हेहु ॥ ३ । ४ । ७ ॥

'अतः' इत्यनुवर्तमानं[1] पञ्चम्यन्ततया विपरिणम्यते । अपभ्रंशेकारात्[2] परस्य ङसेर्हे हु इत्यादेशौ भवतः । रामहे । रामहु । रामाहे । रामाहु । अत्र 'दिहौ सुपि' इति दीर्घः ॥ राग भ्यस् इति स्थिते

भ्यसो हुं ॥ ३ । ४ । ८ ॥

अपभ्रंशेकारात्[3] परस्य भ्यसो हुमित्यादेशो[4] भवति । रामहुं । रामाहुं ॥ राम ङसिति स्थिते

सुस्सुहो ङसः ॥ ३ । ४ । ९ ॥

अतः परस्यः ङसः सु स्सु हो इति त्रय आदेशा भवन्ति । रामसु । रामासु । रामस्सु । रामहो । रामाहो ॥

ङमो लुक् ॥ ३ । ४ । १६ ॥

ङमः पष्ठीविभक्तेः प्रायो लुग्भवति[5] । रामा । राम ॥ राम[6] आम् इति स्थिते

आमो हं ॥ ३ । ४ । १० ॥

अतः परस्यामो हमिति भवति[7] । रामहं । रामाहं । 'ङमो लुक्'[8] । राम । रामा ॥ राम ङि इति स्थिते 'ए भिसि' इत्यतः[9] 'ए' इत्यधिकृत्य 'अतः' इति च ॥

ङिनेच्च ॥ ३ । ४ । ६ ॥

अतो ङिना सहेत् स्याच्चकारादेच्च । रामि । रामे । सुपि 'हिं भिस्सुपोः' इति हि । रामहिं । सुपः सुरेवेति केचित् । रामसु । रामासु ।

---

१ वर्तते T. २ drops अपभ्रंशे. ३ T. has 'अतः' इत्यनुवर्तते । अतः परस्य &c. ४ °मित्यादेशः स्यात् T. ५ लुक् स्यात् T. ६ P. and My. drop this line. ७ स्यात् T. ८ लुकि T. ९ इत्यधिकृत्य T.

'तद्व्यत्ययश्च' इति सर्वासु विभक्तिषु प्राकृतादिरूपता च । एवमकारान्तानां वृक्षादीनां रूपमुन्नेयम्[1] । अथाकारान्तेषु विशेषाः प्रदर्श्यन्ते । लोक । काक । मख । विशिख । सुत । चूत । नाथ । शतपथ । कोप । ताप । रेफ । कफ । इत्यादिषु 'प्रायोपभ्रंशेचोच्' इत्यतः 'अपभ्रंशे' इत्यधिकृत्य[2] ॥

**अचोस्त्वोखौ कखतथपफां गघदधबभान् ॥ ३ । ३ । २ ॥**

अचः परे असंयुक्ता अनादौ वर्तमानाः कादयो यथासंख्यमपभ्रंशे गादीनापद्यन्ते प्रायः । 'स्म्यत उत्' इत्युत्वं च । लोगु । कागु । मघु । विसिघु । सुदु । चूदु । णाधु । सदबधु । कोबु । ताबु । रेभु । कभु । इत्यादि । अन्यत् सर्वं रामवत् । एवं सर्वत्र । शिष्टं पूर्ववदुन्नेयम् ॥

**म्हो म्भं ॥ ३ । ३ । ४ ॥**

म्ह इत्ययं मार्कान्तभकारमापद्यते । अत्र 'म्हो' इति 'श्मष्म—' इत्यादिना प्राकृतलक्षणविहितो म्हो गृह्यते । तस्यायं विधिः । ब्राह्मणः । बम्भणु । एवमश्मन् काश्मीरेत्यादिष्वपि म्हस्य म्भ एव । तथा च अम्भु कम्भूरु इत्यादि सिद्धम् ॥ 'तु मो ड्वम्' इत्यतः 'तु' इत्यनुवर्तमाने

**रो लुक्मधः ॥ ३ । ३ । ५ ॥**

अधो वर्तमानो रेफो लुकं त्वापद्यते । पिउ । प्रिउ ।

**क्वचिदभूतोपि ॥ ३ । ३ । ६ ॥**

'रः' इत्यनुवर्तते । क्वचिदविद्यमानोपि रेफो भवति । व्यासः । व्रासुः । विपण्ण वर्त्म उक्त एषु

**उन्नविच्छवुत्ता विपण्णवर्त्मोक्ताः ॥ ३ । ३ । ५३ ॥**

विपण्णादीनां त्रयाणां यथासंख्यमुन्नादय आदेशाः स्युः ।

---

१ रूपं नेयम् P., My. २ इत्यधिकृत्य T. ३ °स्त्वावखौ P., My. ४ °नापुवन्ति P., My. ५ इत्यत उत्वं च My. ६ has लोकः । लोगु । काकः । कागु and so on. ७ Before this T. adds विशेषमात्रमुच्यते. ८ T. has अपभ्रंशे मकाराकान्त° T. ९ T. has संस्कृते तदसंभवात् in place of तस्यायं विधिः. १० लोपं T. ११ उन्न विच्छ वुत्त इति यथासंख्यं भवति T.

उत्तु । विच्छु । वुत्तु ॥ यादृश । तादृश । कीदृश । ईदृश ।—ऐषु 'दादेर्डेह्रो यादृक्तादृक्कीदृगीदृशाम्' [1]इत्यस्मिन् 'डेह्रो' वर्जमनुवर्तमाने

डइसोताम् ॥ ३ । ३ । १० ॥

अतामकारान्तानां यादृगादीनां दादेरवयवस्य डित् अइस इत्यादेशो भवति । जइसु । यादृशः । तइसु । तादृशः । कइसु । कीदृशः । अइसु । ईदृशः ॥

अन्यादृशस्याण्णाइसावराइसौ ॥ ३ । ३ । ५५ ॥

अन्यादृशस्य अण्णाइस अवराइस इत्येतावादेशौ भवतः । अण्णाइसु । अवराइसु ॥

अत्वुः परस्परस्य ॥ ३ । ३ । ५४ ॥

परस्परशब्दस्यादिरद्भवति । अवरोवरु । अत्र 'तद्व्यत्ययश्च' इत्यपभ्रंशभाषास्यसूत्राकृष्टं प्राकृतसिद्धं 'फोःपरस्परनमस्कारे' [3]इत्योत्वं च ॥ सर्वादीनां भेदः ॥

सर्वगान्[4] डेर्हिं ॥ ३ । ४ । २६ ॥

सर्वादे[5]रुत्तरस्य डेर्हिं भवति । सव्वहिं ॥

ङसेर्हं ॥ ३ । ४ । २७ ॥

सर्वादे[6]रुत्तरस्य ङसेर्हं भवति । सव्वहं । शेषं रामवत् ॥ सर्वशब्दस्यादेशान्तरं

त्वँ[7]नुसाहावन्यथा सर्वौ ॥ ३ । ३ । ५१ ॥

अन्यथासर्वशब्दयोः [8]अनु साह [9]इत्येतौ क्रमाद् भवतः । साहु साहो इत्यादि । एवं विश्वादीनां रूपम् । इकारान्तः पुंलिङ्गः कविशब्दः । 'सुससोः' इति सुलोपः । कइ । कई । 'दिदौ सुपि' इति दीर्घः ।

---

१ इत्येतेषां T. २ इत्यनुवर्तमाने T. ३ इत्यत ओत्वं च T. ४ सर्वगात् हि हि T. ५ स्वारान्तात् परं ङिवचनं हि इति भवति T. ६ स्वारान्तात् परं ङसि पञ्चम्येकवचनं हमिति भवति । T. ७ त्वणु° T. ८ अणु T. ९ इति यथासंख्यं भवतः T.

